॥ रां ॥

# प्रौढमनोरमाशब्दरत्नयोर्विचारभेदानां युक्तायुक्तत्वसमीक्षा






'शिक्षा तथा समाज-कल्याणमन्त्रालय, भारत सरकार' द्वारा
प्रदत्तवित्तीयसाहाय्येन प्रकाशितम्

प्रणेता
डॉ० सुधीरनारायणठक्कुरः
व्याकरणाचार्यः, वेदान्ताचार्यः, साहित्यरत्नम्, 'विद्यावारिधि' ( पी-एच्० डी० )

वि० संवत् २०३४ ] [ १९७७ ई०
वाराणसी
[ मूल्य

प्रथमावृत्तिः—११००

संपूर्णानंदसंस्कृतविश्वविद्यालयीय 'विद्यावारिधि' ( पी-एच्० डी० )
इत्युपाधये समुपस्थापितो गवेषणाप्रबन्धः

प्राप्तिस्थानम्
५/४८ त्रिपुराभैरवी
वाराणसी

मुद्रक :
सुदर्शन मुद्रक,
६३/४२, उत्तर बेनिया बाग,
वाराणसी



वेदान्त - तत्व - निष्णातमनन्त - श्रीविभूषितम् ।
श्रीमहान्तं महाराजं वन्दे विष्णुमयं गुरुम् ॥ १ ॥

वैदेहीशरणाभिधं गुरुवरं किं वच्मि यत्सेवया ।
लब्धं शिक्षणवैभवञ्चविपुलं शोधे समुत्कृष्टताम् ॥
आनृण्यं न भविष्यतीति मम किं चित्तं सदाऽकिञ्चनं ।
तद्धीरेण विकीर्यते चरणयोः शोधप्रसूनाञ्जलिः ॥

# पञ्च कुसुमाञ्जलयः

जानकीं जानकीशं च, भक्तानां तापनाशकम् ।
ज्ञानवैराग्यशीलाढ्यम्, हनूमन्तं वयं नुमः ॥ १ ॥

यस्य कृपाकटाक्षेण, प्रबन्धः पूरितो मया ।
सिन्धौ सेतुः कृतो येन, तं श्रीरामं वयं नुमः ॥ २ ॥

अद्यावधि बभूवुर्ये, भाष्यादारभ्य शाब्दिकाः ।
मतमालोड्य सर्वेषाम्, युक्तायुक्तत्वमीक्षितम् ॥ ३ ॥

ग्रन्थे सन्ति तु ये दोषाः, सर्वे एव हि मामकाः ।
गुणास्तु सन्ति येऽप्यस्मिन्, प्रभुगुर्वोः कृपावशात् ॥ ४ ॥

महावीरं महाभक्तम्, वैदेहीशरणं गुरुम् ।
शुकदेवं च झोपाह्वम्, वागीशं च वयं नुमः ॥ ५ ॥

---

सकल-निगमागम पारावारीणानां सर्वतन्त्रस्वतन्त्राणाम्, वर्तमान शङ्कराचार्य स्वरूपाणाम् भारतीय-सनातन धर्म संस्कृति-सभ्यतोद्धारकानाम्, अनन्त श्री विभूषितानाम्, पूज्यपाद १००८ ( श्री हरिहरानन्द सरस्वती )



# श्री करपात्र स्वामि महाभागानां शुभाशंसनम्

'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति, इति महाभाष्यकारवचनेन प्रतिपन्नं भवति यद् सम्यग् ज्ञानपूर्वकमेव शब्दप्रयोगो विधेयः। तादृशस्य शब्दस्य प्रयोगेण खल्विहामुत्र च कल्याणं सुनिश्चितम्। शब्दस्य सम्यग् ज्ञानं वेदपुरुषस्य मुखरूपेण वेदाङ्गेन व्याकरणेनैव भवितुमर्हति। वेदाङ्गरूपं व्याकरणं तु साम्प्रतं पाणिनीयमेव राजते। तस्य सूत्ररूपेण ग्रथितत्वाद् महाभाष्यवृत्तिव्याख्यादीनां साहाय्येन गम्यता। तत्र प्रक्रियादृशा सन्दृब्धा वैयाकरणसिद्धान्तकौमुदी विद्वज्जनैः समाज्यते, छात्रकदम्बकेन चाभ्यस्यते। तस्या अपि विस्पष्टतायै भट्टोजिदीक्षितेन प्रौढमनोरमेत्याख्या व्याख्या स्वयं रचिता। किन्तु पण्डितराजेन जगन्नाथेन तस्याः समालोचना कृताः, दोषाश्च दर्शिताः। ततो हरिदीक्षितेन व्याख्याया अस्या अपि व्याख्या शाब्दरत्नेत्याख्या निर्मिता। तत्र भट्टोजिदीक्षितेन सह भूयिष्ठा विचार भेदा दृष्टिपथमायान्ति। पण्डिताग्रगण्या वैयाकरणाः परस्परं विवदन्ते।

दीर्घकालिकमिमं विवादं वैयाकरण तल्लजेन सुधीर नारायण ठक्कुरेण विद्यावारिधि ( पी० एच० डी० ) इत्युपाधये विरचितेऽस्मिन् गवेषणाग्रन्थे ( प्रबन्धे ) निराकृत्य प्रसङ्गेऽस्मिंश्चानेकानि रहस्यानि समुद्घाट्य श्लाघ्यतमः प्रयत्नः समास्थितः। एतादृशायानितर साधारणाय भूरिश्रमज्ञानसाध्यसत्कार्याय श्री सुधीर नारायण ठक्कुरो ( सीताराम शरणः ) बंहिष्ठां प्रशंसां पुरस्कारं चार्हति। काशीविश्वेश्वर आयुष्यमारोग्यमैश्वर्यं चास्मै प्रयेच्छेदिति।

करपात्र स्वामी

२०३४ भाद्र शुक्ल द्वादशी शनिवारः

# श्री सीताराम चतुर्वेद महाभागानां शुभकामना

प्रौढमनोरमाशब्दरत्नयोर्विचारभेदानां युक्तायुक्तत्व समीक्षेति नामके ग्रन्थे विदुषांवरैः डा० सुधीरनारायण ठक्कुरैः सुपांडित्यपूर्वकं मनोरमाकाररत्नकार मतानि युक्तानि नवेति परिशीलने क्वचित्तु मनोरमाकारमतं, क्वचिच्च रत्नाकरमतं क्वचिच्चोभयोर्मतं मण्डितम् किन्तु यत्र कुत्रापि तयोर्मतेषु वैषम्यमसङ्गतिमसाधुत्वमुपल क्षितं तत्र-तत्र तयोरुभयोर्मतनिरसनपूर्वकं सयुक्तितर्कप्रमाणाधिष्ठितं नूतनं मतमपि प्रतिपादितम् । अनेकेषु विवदमानस्थलेषु लेखकमहोदयैः सुपुष्ट प्रमाणपुरस्सरं स्वकीयमतमप्युचितावधानतया समुद्घाटितम् । अनया दृष्टया अयं ग्रन्थः सर्वभावेन सर्वैर्वैयाकरणैः सूक्ष्मतया पठितव्यः मन्तव्यः सुविचारयितव्यश्च ।

एतत्कृते लेखक महोदयाः अस्मत्सर्वेषां सहृदयजनानां परम साधुवादार्हाः धन्यवादार्हाश्च ॥

सीताराम चतुर्वेदः
अनन्त चतुर्दशी सं० २०३२



# प्रास्ताविकम्

डा० सुधीरनारायणठक्कुरेण (सीतारामशरणेन) विद्यावारिधि (पी-एच्० डी०) इत्युपाधये विरचितस्यास्य 'प्रौढमनोरमाशब्दरत्नयोर्विचारभेदानां युक्तायुक्तत्वसमीक्षा' इत्याख्यस्य गवेषणाप्रबन्धस्य प्रकाशनमालोच्य प्रमोदते मे मनो भृशम्। सुविस्तृतस्य खलु संस्कृतवाङ्मयस्य निश्शेषाः शाखाः पृथक्-शोऽपि तथा समृद्धाः सन्ति यज्जागतिकं वाङ्मयं नैकस्या अपि तुलामर्हति। एतादृशस्यानूनकस्य संस्कृतवाङ्मयपारावारस्य पर्यालोचनपूर्वकं संक्षिप्तव्याकरणसंदृब्धिराश्चर्यविषयः। लक्ष्यलक्षणयोर्व्याकरणत्वात् संपूर्णसंस्कृतवाङ्मयपर्यालोडन-पटुरेव संस्कृतव्याकरणभाष्यव्याख्याटीकादिलेखनाय प्रभवति।

नैकस्तावत् स्वजीवने निखिलसंस्कृतवाङ्मयपारावारपारं पारयते विलोकितुम्। समुपलब्धसंस्कृतवाङ्मयकोशोपस्थितिसौविध्यमद्यतनमिव नासीद् शताब्दचतुष्टयात् पूर्वम् इति सम्पूर्णवाङ्मयशाखाभ्यसनमन्तरा नाभूदुपायान्तरं संस्कृतपण्डितानाम्। यद्यपि प्रतिशास्त्रं प्रतिवेदं चैकैकस्य विचक्षणस्य प्रौढपाण्डित्यं नास्वाभाविकम्, तथापि सर्वशाखावगाहनपूर्वकं तस्य वैरल्यमसाध्यत्वं च कृतभूरिपरिश्रमैरास्थीयते।

केनचिदपि वैयाकरणेन ग्रन्थरचनावसरे लक्ष्यलक्षणात्मकमखिलं वैलक्षण्यं प्रकाशनीयं भवति। अतः कश्चिदपि व्याकरणग्रन्थो नाव्याख्येयो निर्विचिकित्स्यश्च भवतीति विदन्त्येव विदितवेदितव्याः। अत एव भट्टोजिदीक्षितेन स्वरचित-वैयाकरणसिद्धान्तकौमुद्यामसन्तोषमास्थाय तट्टीका प्रौढमनोरमाख्या व्यरचि। तत्रोभयोर्बह्व्यष्टीकापरम्परा वितता वर्षाणां शताब्दचतुष्टये।

हरिदीक्षितेन प्रौढमनोरमाया व्याख्यानं शब्दरत्नाख्यं पल्लवितं ग्रन्थग्रन्थि-स्फोरणाय। व्याख्यानप्रसङ्गे बहुत्र व्याख्याकारेण ग्रन्थकारमतनिरासोऽपि व्यधायि। सूत्रोदाहरणादिरूपप्रयोगविषयेऽपि बहुत्र विवादो वर्तते। एतावति हायनानां शताब्दचतुष्टयात्मके महति कालेऽपि प्रौढमनोरमाशब्दरत्नयोर्विवाद-

स्थलान्यधिकृत्य निर्णयात्मको न कश्चिद् ग्रन्थो विरचितः। लक्ष्यलक्षणरूपस्य सम्पूर्णवाङ्मयस्याहस्तामलकीभावात्, सत्युपलब्धेऽपि तस्मिन् तस्योपयोगविधिज्ञत्वाभावाच्च ग्रन्थलेखनाभावं नास्वाभाविकं मन्ये।

आयुष्मता श्रीमता सुधीरनारायणठक्कुरेण व्याकरणशास्त्रे कृतभूरिपरिश्रमेण नैरन्तर्यसत्कारासेवाहढभूमिना समाहितचेतसा महतीं सुधीरतां समाश्रित्य गवेषणाप्रक्रियाया आधुनिकीं दिशमवलम्ब्य गरीयसि ग्रन्थलेखनरूपे कर्मणि प्रवृत्तम्। ऐतिहासिकेन क्रमेण संगृहीतां व्याकरणविषयणीं सामग्रीम् उपस्थापनशैल्या प्रतिपादनशैल्या च पर्यालोच्य निबद्धेऽस्मिन् ग्रन्थे साफल्यं समासादितम्। परीक्षकाणां प्रतिवेदनदृशेह महिष्ठं पाण्डित्यमस्य प्रकटीभवति डा० सुधीरनारायणठक्कुरस्य। ग्रन्थरत्नमिदं सुधियां जिज्ञासूनां च चेतांसि नूनमावर्जयिष्यतीति ध्रुवं प्रत्येति।

भाद्रपदशुक्लाष्टम्यां
२०३४ वैक्रमाब्दे
(२०-९-७७ ख्रीस्ताब्दे)

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थाननिदेशकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# प्रवृत्तिनिमित्तम्

शास्त्रिपरीक्षायां प्रौढमनोरमामधीयानेन मया तट्टीकायां शब्दरत्नाख्यायां स्थलविशेषेषु मनोरमया सह वैमत्यमपि दृष्टम् । तदानीं परीक्षासम्बद्धग्रन्थानां गुरुमुखादध्ययनं ततश्च तेषां स्थलानामभ्यासमात्रमासीद् मदीयं लक्ष्यम् । आचार्यपरीक्षायां नागेशकृतशब्देन्दुशेखरमधीयानस्य मे प्रौढमनोरमा-शब्दरत्नयोर्विवादाः स्मृतिपथमुपेताः । तस्मिन्नेव समये किमुचितं स्वरूपं समाधानं च तेषां विवादानामिति समजनि जिज्ञासा मच्चेतसि । प्रकटिता सा मया समये समये सतीर्थ्यानां समक्षम् । तदानीन्तना गुरुजना अपि जिज्ञासाप्रशमनार्थं प्रार्थिताः । तदर्थं ग्रन्था अपि पर्यालोडिताः । परन्तु क्वचित् कल्पनाकोटिपटीयस्त्वम्, क्वचिच्च तर्कप्रमाणबलीयस्त्वमेव साक्षात्कृतम् । यद्यपि क्वचिद् ग्रन्थेषु समस्यासमाधानार्थमपि प्रयत्नः समास्थितः, तथापि विजिगीषाभावनाप्रेरित एवासावासीत् ।

एकोनसप्तत्युत्तरैकोनविंशतिशततमे हायन आचार्यपरीक्षां समुत्तीर्यानुसन्धित्सयाऽहं निर्देशकमहोदयमाश्रितोऽहम् । पुनरुपस्थापिता साऽसमाहिता जिज्ञासा निर्देशकमहोदयैः । तन्निर्दिष्टेन क्रमेण महाभाष्यादारभ्य सर्वेषां वैयाकरणानां ग्रन्थाः पर्यालोडिताः । प्रयोगाणां कृते च यथाशक्ति सर्वे लक्ष्यग्रन्था विलोकिताः ततश्चेदं तुलनात्मकं समीक्षात्मकस्वरूपं विषयस्य समुपस्थापयितुं प्राभवम् ।

गवेषणाप्रबन्धस्यास्य लेखनप्रक्रमे बहूनां गुरुवराणामुपकारभारं बिभर्मि । तत्र प्रथमं निर्देशकमहोदयानां 'वागीशशास्त्री' इत्याख्यानां डा० श्रीभागीरथप्रसादत्रिपाठिनां कृतज्ञतां बिभर्मि । तैर्निर्देशकत्वमङ्गीकृत्य सत्यामपि विविधकार्यव्यापृततायामावासे विश्वविद्यालये च स्वकीयान्यत्यावश्यकानि कार्याणि हित्वा विषयनिर्देशनपूर्वकं गवेषणाप्रबन्धरचनादिक् प्रदर्शिता, तादृशी दृष्टिश्चोन्मीलिता ।

परमगुरूणां पण्डितश्रीशुकदेवझामहोदयानां चिरं कृतज्ञतां विज्ञापयामि, अधमर्णतां च बिभर्मि, येषां चरणसान्निध्ये 'नत्वा सरस्वतीं देवीम्' इत्यारभ्य

गवेषणाप्रबन्धस्यास्य पूर्तिपर्य्यन्तं ग्रन्थग्रन्थिभेदनपूर्वकं समधीतं व्याकरणशास्त्रम् । पण्डितराजश्रीकालिप्रसादमिश्रमहाभागानाम्, पण्डितश्रीरामप्रसादत्रिपाठिमहोदयानाम्, पण्डितज्वालाप्रसादगौड़महोदयानाम्, पण्डितश्रीचन्द्रशेखरमिश्रमहोदयानाम् अन्येषां च गुरुवर्याणां बहुशः कृतज्ञतां बिभर्मि । दीक्षागुरवः श्री १०८ महंथ श्रीवैदेहीशरणमहाराजमहाभागानाम् आधमर्ण्यं बिभर्मि येषामहैतुकी कृपा मां प्रति सन्ततं जागरूका । आबाल्याद् इदानीं यावद् मम पोषणकर्त्र्या मातृवत्सलायाः परमेश्वरीदेव्याः करुणां प्रति किञ्चिदपि वक्तुमसमर्थोऽस्मि ।

सरस्वतीभवनग्रन्थाध्यक्षा मुद्रितग्रन्थानां हस्तलिखितग्रन्थानां च प्रदानेन सौविध्यमुपनीतवन्तः, पुस्तकालयसहायका अपि सहयोगं कृतवन्त इति ते सर्वे भृशं धन्यवादार्हाः । गोयनका-संस्कृतमहाविद्यालयान्तर्गतविश्वनाथपुस्तकालयस्याध्यक्षाणां श्रीपन्तमहाभागानां तत्सहायकानां श्रीयाज्ञिकमहोदयानां चातीव कृतज्ञोऽस्मि, यै रपेक्षितग्रन्थानां प्रदानेन महत्साहाय्यं कृतम् ।

पर्य्यन्ते १९७१ तम-ख्रिस्ताब्दात् १९७३ तम-ख्रिस्ताब्दं यावत् ३० मासपर्य्यन्तं शतद्वयमुद्रामासिकच्छात्रवृत्तिः शिक्षामन्त्रालयेन प्रदत्ता । पुनश्च तेनैवास्य गवेषणाप्रबन्धस्य प्रकाशनार्थमार्थिकं साहाय्यं प्रदत्तमिति तदर्थं तत्रत्येभ्योऽधिकारिभ्यो भूयो भूयः कृतज्ञतां प्रकाशयामि ।

विदुषां वशंवदः

सुधीरनारायणठक्कुरः 'सीतारामशरणः'

भाद्रशुक्लपूर्णिमा
सं० २०३४ भौमवासरः

वाचस्पत्यनुसन्धाता
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये



# उपोद्धातः

'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतिवाक्यात् पुराकाले भारते वर्षे गुरुमुखादेव वेदवेदाङ्गादिविद्याः समधीयन्ते स्मान्तेवासिभिः। सरणिरियं चिरं प्रवृत्ता। विद्याया गुरुगतत्वाद् गुरुसेवयैव विद्यार्थी विद्यां लभते स्म। यथा खनित्रेण भूमिं खनन् नरो जलं प्राप्नोति तथैव गुरुगतां विद्यां विद्यार्थी सेवया प्राप्तुं शक्नोति स्म। अनया प्रणाल्या शिष्या गुरुमुखाच्छ्रुत्वा शास्त्राणि कण्ठस्थीकुर्वन्ति स्म। इयं प्रक्रिया विद्याया महिमानं व्यनक्ति। सा व्यवस्था विद्यामहत्त्वमूरीकृत्यैव प्रचालितासीद् मनीषिभिः। अत एवाद्यापि तत्तद्ग्रन्थेष्वधिकारी, विषयः, प्रयोजनम्, सम्बन्ध इत्याद्यनुबन्धचतुष्टयमनुल्लङ्घ्यैव विद्यारम्भः क्रियते।

विद्यायाः पावित्र्यं महत्त्वं चानुध्याय पात्रत्वमपात्रत्वं च विचार्यैव गुरुस्तां तां विद्यामुपदिशति स्म। सा विद्या गुरुशिष्यप्रशिष्यपरम्परयाऽनन्तकालात् सुरक्षिता भारतीयैः प्राप्ता। परम्पराप्राप्तविद्याया निदर्शनम् ऋक्तन्त्रकारेणेत्थं संकीर्तितम्—'ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः (१।४) इति। अनया प्रणाल्याऽधीतविद्याः प्राक्तना विद्वांसो बहुश्रुता बहुज्ञाश्च भवन्ति स्म। 'षड्ङ्गो वेदोऽध्येयो ज्ञेयश्च' इति भाष्यानुसारेण वेदस्य षडङ्गानि समधीत्य नानाशास्त्रवेत्तारो भवन्ति स्म। शिष्याणामुपदेशसमये कस्यचिद् एकस्य शास्त्रस्य प्रवचनसमये प्रसङ्गोपात्तानां सर्वेषामेव शास्त्राणां वचनानि समुद्धरन्ति स्म। परतस्तैस्तैर्विद्वद्भिर्लिखितेषु ग्रन्थेष्वपि कस्यचिद् एकस्य शास्त्रस्य प्रणयने भिन्नभिन्नानां शास्त्राणामुद्धरणानि प्रसङ्गोपात्तानि समुल्लिखितानि यथाश्रुतानि, स्थलनिर्देशं विनैव।

अत एव परम्परातो लभ्यते शास्त्रविद्येयम्। सर्वेषु शास्त्रेषु यदुच्यते तत् सर्वं परम्परागतं भवति, गुरुमुखाच्छ्रुतम्। किन्तु प्राक्काले अधुनावद्

वचननिर्देशप्रणाली नासीदित्यनेकानि परम्परयोपलब्धानि प्राचीनशास्त्राणां वचनान्यज्ञातनिर्देशानि सन्ति। दुर्दैवाद् आकरग्रन्थास्ते विनष्टा इति सम्प्रति स्थलपरिचयज्ञानार्थं स्रोतो लब्धुं न पार्यते। पदमञ्जर्यां 'न षट्स्वस्रादिभ्यः' (४।१।१०) इति सूत्रव्याख्यानप्रसङ्गे तन्त्रावृत्त्या ङीव्-टाब्निषेधः प्रदर्शितः। किन्तु समुपलभ्यमाने तदतिरिक्ते समग्रे व्याकरणे तन्त्रावृत्तिर्न दर्शिता केनापि वैयाकरणेन। यद्यपि पदमञ्जरीकारेण प्रदर्शिता तन्त्रावृत्तिरियं नूनं परम्परातो लब्धा, तथापि तत्राकरग्रन्थनिर्देशाभावाद् नोपलभ्यते तद्वचनं क्वापि। मन्ये नष्टस्तदाकरग्रन्थः स्यादिति। इत्थं सर्वेषां परम्परागतानां शास्त्राणां विद्यते भूयिष्ठमैतिहासिकं महत्त्वम्।

अधुनातनैर्विद्वद्भिरिव स्थलनिर्देशोपयोगिताऽपि तैर्नानुभूता प्राक्तनैर्दोषज्ञैः। पाणिनीये व्याकरणनिकायेऽपीयमेव स्थितिः। महाभाष्ये बहुत्र वचनान्युद्घृतानि दृश्यन्ते स्थलनिर्देशमन्तरैव। परवर्तिषु सर्वेषु व्याकरणग्रन्थेषु सैव स्थितिः। इदानीन्तनानाम् अनेकव्यवसायिनां संस्कृतज्ञानां प्रायस्तत्तच्छास्त्रज्ञविदुषां कृतेऽपि सर्वेषु शास्त्रेष्वप्रतिहतगतित्वं प्राक्कालिकविदुषामिव विरला। गुरुशिष्यपरम्परापद्धतिरियं भौतिकप्रधाने युगेऽस्मिन् मुद्रणादिसौविध्याद् शैथिल्यमाप्ता। पूर्ववत् स्मृतिसामर्थ्याभावात् परम्परयोद्घृतानामाकरनिर्देशरहितानां स्थलानां ज्ञानं नोपजायते। व्याकरणनिकाये मतान्तरप्रत्याख्यानप्रसङ्गे तेषामाचार्याणां नोल्लेखः सर्वत्र नामग्राहम्। तत्र यत्तु, प्राचा, अन्ये तु, केचित्तु इत्यादिभिः शब्दैर्मतान्तराणि समुद्धृतानि स्व-स्वसिद्धान्तस्थापनावसरे 'परे तु' 'वस्तुतस्तु' इत्यादिवचनैर्मतं प्रदर्शितम्।

'प्रौढमनोरमाशब्दरत्नयोर्विचारभेदानां युक्तायुक्तत्वसमीक्षा' इत्याख्यगवेषणाप्रबन्धलेखनस्य प्रसङ्गे व्याकरणविषयकाणां बहूनां ग्रन्थानां पर्यालोडनेन प्राचीनेषु ग्रन्थेष्वाकरग्रन्थनिर्देशोद्धरणाभावस्यानुभूतिः संजाता पदे पदे। तत्र कानि कानि स्थलानि पूर्वाचार्यैः सम्बद्धानि, कानि कानि च ग्रन्थकारस्य स्वोपज्ञानीति समुपस्थिता समस्या। तत् समाधानायेह गवेषणाप्रबन्धेऽवलम्बितो वक्ष्यमाण उपायः।

सम्प्रति वैयाकरणशिरोमणिभिर्विद्वद्भिर्यानि मतानि दीक्षितस्य शब्दरत्नकारस्य वा स्वोपज्ञानि मन्यन्ते तानि वस्तुतो दीक्षितेन शब्दरत्नकारेण वा पूर्वाचार्येभ्यो गृहीतानि। किन्तु तन्मतोल्लेखाभावपूर्वकं गृहीतत्वाद् दीक्षितस्यैव शब्दरत्नकारस्यैव वा विद्वद्भिर्मन्यन्ते। ऐतिहासिकक्रमेणोपलभ्यमानानां व्याकरणग्रन्थानां परिशीलनेन रहस्यमिदमुद्घाटितुमपारि। प्रौढमनोरमाशब्दरत्नयोर्मतभेदस्थलेषूपस्थापितं विवादस्वरूपं तदीयं स्वोपज्ञमुत वा पूर्ववर्तिभ्यो विद्वद्भ्यो गृहीतमित्यस्य निर्णयार्थं मया सर्वेषां वैयाकरणानां मतानि कालक्रमेणोपन्यस्तानि। स्वोपज्ञत्वास्वोपज्ञत्वनिर्णयाय पद्धतिरियं पर्याप्तं साहायकमार्पयत्।

सर्वेषां वैयाकरणानां कालक्रमेण मतोद्धरणार्थं युधिष्ठिरमीमांसकलिखितो 'व्याकरणशास्त्र का इतिहास' इति ग्रन्थोऽवलम्बितः। तदाधारेण भाष्यात् प्रभृति सर्वेषां वैयाकरणानां कालक्रमेण रचिता तद्ग्रन्थनामावली। सा चेत्यम्—

## गवेषणाप्रबन्धे कालक्रमानुसारेण समुपयोजिताः पाणिनीयव्याकरणनिकायग्रन्थाः

१—महामुनेः पतञ्जलेर्महाभाष्यम्।
२—भर्तृहरेर्वाक्यपदीयम्।
३—जयादित्यवामनयोः काशिकावृत्तिः।
४—जिनेन्द्रबुद्धिपादविरचितो न्यासः।
५—हरदत्तस्य पदमञ्जरी।
६—कैयटस्य प्रदीपः।
७—पुरुषोत्तमस्य भाषावृत्तेरुपलब्धांशः।
८—धर्मकीर्ते रूपावतारः।
९—रामचन्द्रस्य प्रक्रियाकौमुदी।
१०—विट्ठलकृता प्रसादाख्यटीका प्रक्रियाकौमुद्याः।
११—भट्टोजिदीक्षितस्य वैयाकरणसिद्धान्तकौमुदी, प्रौढमनोरमा च।

१२—चक्रपाणेर्मनोरमाखण्डनम् ( उपलब्धांशः )।

१३—कौण्डभट्टस्य वैयाकरणभूषणसारः।

१४—पण्डितराजजगन्नाथस्य कुचमर्दनी ( उपलब्धांशः )।

१५—नारायणभट्टस्य प्रक्रियासर्वस्वम्।

१६—विश्वेश्वरसूरेः सिद्धान्तसुधानिधिः।

१७—ज्ञानेन्द्रसरस्वतीप्रणीता तत्त्वबोधिनी।

१८—हरिदीक्षितस्य शब्दरत्नम्।

१९—नागेशस्य शब्देन्दुशेखरः, परिभाषेन्दुशेखरः, उद्योतश्चेति।

२०—भैरवमिश्रस्य भैरवी।

२१—वैद्यनाथपायगुण्डेमहोदयस्य भावप्रकाशः।

२२—दाधिमथस्य दाधिमथी।

पाणिनीयव्याकरणपरम्परातिरिक्तानां व्याकरणग्रन्थानां पर्यालोडनस्यावश्यकत्वमनुभूतमेतद्गवेषणाप्रबन्धलेखनसमये परम्परावगमाय विवादनिर्णयाय चेति। तदर्थं ये मया समुपलभ्यमानास्तादृशव्याकरणग्रन्थाः पर्यालोडितास्तेषां नामानि वक्ष्यमाणानि सन्ति।

## कालक्रमेण समुपयोजिता अपाणिनीयव्याकरणग्रन्थाः

१—चन्द्रगोमिप्रणीतम्—चान्द्रव्याकरणम्।

२—पाल्यकीर्तिप्रणीतम्—शाकटायनव्याकरणम्।

३—पूज्यपादप्रणीतम्—जैनेन्द्रव्याकरणम्।

४—महाराजभोजदेवप्रणीतम्—सरस्वतीकण्ठाभरणम्।

५—हेमचन्द्रसूरिप्रणीतम्—हैमशब्दानुशासनम्।

६—अनुभूतिस्वरूपाचार्यप्रणीतम्—सारस्वतम् ( सिद्धान्तचन्द्रिकासहितम् )

७—वोपदेवप्रणीतम्—मुग्धबोधव्याकरणम्।

यद्यपि मनोरमायामनेकस्थलानि महाभाष्यकाराद्यवहेलनापूर्वकं कल्पनाप्रसूतानि, शब्दरत्नकारेण च प्रत्याख्यातानि, तथापि पूर्वाचार्यैस्तेषां मतानां क्वाप्यनुल्लेखाद् भट्टोजिदीक्षितस्य तत्र स्वोपज्ञत्वं निश्चप्रचम्। इदानीं भट्टोजि-

दीक्षितस्य शब्दरत्नकारस्य च स्वोपज्ञत्वं पूर्वाचार्यानुकरणादीनि च यानि प्रबन्धे परीक्षितानि तानीह संग्रहेणोच्यन्ते ।

## भट्टोजिदीक्षितस्य स्वोपज्ञस्थलानि

१—'एङि पररूपम्' ( ६।१।६४ ) इति सूत्रे 'रूप'-ग्रहणस्य चिन्त्यप्रयोजनत्वमिति मनोरमाकारस्य स्वोपज्ञत्वम् ।

२—'अव्यक्तानुकरणस्यादितौ' ( ६।१।६८ ) इति सूत्रे 'अत्'-ग्रहणं व्यर्थमिति भट्टोजिदीक्षितस्य स्वोपज्ञत्वम् ।

३—'न ङिसम्बुद्ध्योः' ( ८।२।८ ) इति सूत्रे 'ङि' इति षष्ठ्यन्तमिति मनोरमाकारस्यापूर्वोक्तिः ।

४—'भोभगोअघोअपूर्वस्य योऽशि' ( ८।३।१७ ) इति सूत्रे 'अश्'-ग्रहणं 'देवाः सन्ति' इत्यत्र यत्वापत्तिवाराणार्थमिति दीक्षितस्य स्वकीयोद्भावनम् ।

५—'सम्बुद्धौ शाकल्यस्येतावनार्षे' ( १।१।१६ ) इति सूत्रे सम्बुद्धिग्रहणस्य फलम् 'अहो इति' इत्यादिस्थले पाक्षिकप्रगृह्यसंज्ञाप्रवर्तनार्थमिति स्वोपज्ञत्वम् ।

६—'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ( २।३।४६ ) इति सूत्रे 'प्रातिपदिकार्थ' इत्यस्य 'नियतोपस्थितिकः' इत्यर्थप्रदर्शनरूपा मनोरमाकारस्यापूर्वोक्तिः ।

७—'प्रातिपदिकार्थ०' ( २।३।४६ ) इति सूत्रे परिमाणग्रहणं 'द्रोणो व्रीहिः' इत्यत्र परिच्छेद्यपरिच्छेदकभावेनान्वयार्थमिति दीक्षितस्य स्वोपज्ञत्वम् ।

८—'नित्यं कौटिल्ये गतौ' ( ३।१।२३ ) इति सूत्रे नित्यग्रहणं न्यायस्यानित्यत्वज्ञापनार्थमिति मनोरमाकारस्य स्वोपज्ञत्वम् ।

९—'स्वाङ्गे तस्प्रत्यये कृभ्वोः' ( ३।४।६१ ) इति सूत्रे प्रत्ययग्रहणं व्यर्थमिति मनोरमाकारस्य स्वीयोद्भावनम् ।

१०—'मघवा बहुलम्' ( ६।४।१२८ ) इति सूत्रेऽन्तोदात्तवनिवन्तः 'मघवा' इति शब्दो लोकेऽपि साधुः—इति मनोरमाकारस्यापूर्वोक्तिः ।

११—'अतोऽम्' ( ७।१।२४ ) इति सूत्रे 'अतो' 'म्' इति सूत्रस्वरूपेण सिद्धान्तरूपतो भवितव्यमिति दीक्षितस्यापूर्वोक्तिः ।

१२—'इदुदुपधस्य चाप्रत्ययः' ( ८।३।४१ ) इति सूत्रे 'अप्रत्ययः' इत्यस्य सामानाधिकरण्येनान्वय इति मनोरमाकारस्य स्वकीयोद्भावनम् ।

१३—'यमाच्चेति वक्तव्यम्' इति वार्त्तिकं व्यर्थम् 'याम्याः' इत्यस्य सिद्धिः 'ष्यन्'-प्रत्ययेनैव स्यादिति भट्टोजिदीक्षितस्य स्वोपज्ञत्वम् ।

१४—'अकृतव्यूहपरिभाषा' 'अनित्या' इति भट्टोजिदीक्षितस्य स्वकीयोद्भावनम् ।

१५—'पुरुषात् प्रमाणेऽन्यतरस्याम्' ( ४।१।२४ ) इति सूत्रे लुगाक्षिप्यते इति मनोरमाकारस्य स्वोपज्ञत्वम् ।

१६—'हरिः सेव्यते' इति वाक्यात् 'हरिनिष्ठप्रीत्यनुकूलव्यापारः' इति मनोरमाकारस्य स्वोपज्ञशाब्दबोधस्वरूपम् ।

१७—'निगरणचलनार्थेभ्यश्च ( १।३।८७ ) इति सूत्रे निगरणशब्दस्य भक्षणं पानञ्चेत्यर्थयोर्मनोरमाकारस्य स्वोपज्ञत्वम् ।

१८—उपदेशशब्दो भावघञन्त इति दीक्षितस्य स्वोपज्ञत्वम् ।

## पूर्वाचार्याणां नामोल्लेखमन्तरैव तदीयानि मतानि स्वसिद्धान्तरूपेण बहुत्रोपस्थापितानि

१—'शेषे लोपः' ( ७।२।९० ) इति सूत्रे 'अन्त्यलोपटिलोपौ' चेति पक्षो मनोरमाकारेण सिद्धान्तितः । तस्य चर्चा काशिकान्यासादौ च विद्यते । किन्तु मनोरमायां स पक्षस्तन्नामादिनिर्देशं विनैव सिद्धान्तितः ।

२—'अतो दीर्घो यञि' ( ७।३।१०१ ) इति सूत्रे दीर्घग्रहणं प्लुतनिवृत्त्यर्थमिति न्यासे पदमञ्जर्यां च प्रतिपादितम् । किन्तु दीक्षितेन तेषां सङ्केतं विनैव सिद्धान्तितम् ।

३—'बहुगणवतुडतिसंख्या' ( १।१।२३ ) इति सूत्रे बहुगणग्रहणं संख्यावाचिनां बहुगणशब्दानां संख्याकार्यसिद्ध्यर्थम्, न भूयर्थंकवाचिनामिति काशिका-

न्यासादौ वर्तते। किन्तु दीक्षितेन तेषां चर्चां विनैवेदं स्वमतरूपतया प्रतिपादितम्।

४—'स्थानिवदादेशोऽनल्विधौ' (१।१।५६) इति सूत्रे 'अल्'-शब्दोऽवयवपरक इति काशिकादौ दृश्यते। किन्तु मनोरमाकारेण पक्षोऽयं स्वोपज्ञतयोपस्थापितः।

५—'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' (१।२।४५) इति सूत्रे 'वृत्तिमत्त्वमर्थवत्त्वम्' इत्यर्थवतः स्वरूपं 'सुप्तिङन्तं पदम्' इति सूत्रस्थभाष्यानुरोधेन। मनोरमायामाकरग्रन्थोल्लेखमन्तरैव तस्योपस्थापनं कृतम्।

६—'अर्थवद०' (१।२।४५) इति सूत्रे 'अर्थवद्' ग्रहणस्य फलं धनम्, वनम्, इत्यत्र प्रतिवर्णं प्रातिपदिकसंज्ञा मा भूदिति भाष्ये काशिकादौ च सिद्धान्तितम्। तेषां चर्चां विनैव मनोरमायां सिद्धान्तितम्।

७—कृत्तद्धितसमासाश्च' (१।२।४६) इति सूत्रे 'यत्र संघाते पूर्वो भागः पदम्०' इति समासग्रहणेन नियमस्वरूपं पदमञ्जर्यां दृश्यते। तस्या निर्देशं विनैव भट्टोजिदीक्षितेन उपस्थापितं सिद्धान्तरूपेण।

८—'भूवादयो धातवः' (१।३।१) इति सूत्रे भूवादिग्रहणफलं 'शिश्ये', 'हिरुक्', 'पृथक्' इति प्रदीपकारेण स्वीकृतम्। तस्य सङ्केतं विनैव मनोरमायां सिद्धान्तितम्।

९—'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' (२।१।३१) इति सूत्रेऽर्थशब्दोऽभिधेयपरः काशिकादौ निगदितः। किन्तु मनोरमायां निर्देशं विनैव पक्षोऽयं स्वमततयोपस्थापितः।

१०—'ई च खनः' (३।१।१११) इति सूत्रे 'इ' इति ह्रस्वः सुवचः, इत्येवं भाष्ये व्याख्यातम्। किन्तु मनोरमायां निर्देशं विनैव सिद्धान्तितम्।

११—'नपुंसके भावे क्तः' (३।३।११४) इति सूत्रेण 'क्त' प्रत्ययोऽकर्मकादेव भवतीति पदमञ्जर्यां प्रदर्शितम्। तस्याः सङ्केतं विनैव दीक्षितेन सिद्धान्तितम्।

१२—'बह्वादिभ्यश्च' (४।१।४५) इति सूत्रे बहुग्रहणं व्यर्थमिति काशिकायां निगदितम्। तस्या निर्देशनं विनैव मनोरमायां सिद्धान्तितम्।

१३—'षड्भ्यो लुक्' ( ७।१।२२ ) इति सूत्रे षट्संज्ञकानां तदर्थबोधकसंख्यानां च बहुत्वादिति न्यास उक्तम्, किन्तु मनोरमायां सङ्केतं विनैव तस्य सिद्धान्तरूपेण स्थापनम् ।

१४—'साम आकम्' ( ७।१।३३ ) इति सूत्रे ससुट्कनिर्देशो भाविनोऽपि सुटो निवृत्त्यर्थमिति भाष्यादौ विद्यते । किन्तु मनोरमायां तस्य चर्चां विनैव सिद्धान्तरूपेण स्थापनं लक्ष्यते ।

१५—'षट् चतुर्भ्यश्च' ( ७।१।५५ ) इति सूत्रे बहुवचननिर्देशोऽर्थाधिकारानुरोधेनेति काशिकान्यासादौ व्याख्यातम् । किन्तु तस्य निर्देशं विनैव मनोरमायां सिद्धान्तितम् ।

१६—'उभ'–शब्दस्य सर्वादिगणे पाठोऽकजर्थं इति काशिकादौ निगदितम् । मनोरमायां तन्निर्देशं विनैव सिद्धान्तितम् ।

१७—'अकथितं च' ( १।४।५१ ) इति सूत्रं षष्ठीबाधनार्थमिति सम्बन्धार्थो भाष्ये, प्रदीपे, प्रसादे न विद्यते । तस्य निर्देशं विनैव मनोरमायां सम्बन्धार्थं स्वीकृत्य 'गां दोग्धि' इति वाक्यस्थ गोसम्बन्धोत्यर्थः प्रतिपादितः ।

१८—'प्राज्ञो व्याकरणम्' इत्यत्र 'प्रज्ञाश्रद्धार्चाभ्यो णः' ( ५।२।१० ) इति णः । तत्र षष्ठ्यभाव इति पदमज्ञयाँ निगदितम् । किन्तु मनोरमाकारेण तस्य निर्देशं विनैव सिद्धान्तितम् ।

१९—'इच एकाचोऽम् प्रत्ययवच्च' ( ६।३।६८ ) इति सूत्रेण अमि 'श्रिमन्यं कुलम्' इति भाष्ये विद्यते । तस्य सङ्केतं विनैव मनोरमायां सिद्धान्तितम् ।

२०—मय उञो वो वा' ( ८।३।३३ ) इति सूत्रे आन्तरतम्यात् सानुनासिकस्य सानुनासिकादेशे 'किं विति' इति पदमञ्जर्यां प्रदीपे च विद्यते । मनोरमायां निर्देशं विनैव सिद्धान्तितम् ।

२१—'ङमो ह्रस्वादचि ङमुण्नित्यम्' ( ८।३।३२ ) इति सूत्रे 'परमदण्डिनौ' इत्यत्र नुड्वारणाय पदेऽनुवृत्तिर्विफला काशिकादौ विद्यते । मनोरमायां तदुल्लेखाभावपूर्वकं स्वसिद्धान्तरूपेण दर्शिता ।

२२—यथाकथंचिद् गत्यर्थत्वमादाय नीवह्योर्धात्वोः कर्मसंज्ञाबाधनार्थं 'नीवह्योर्न' इति वार्त्तिकम् इति व्याख्यानं काशिकादौ विद्यते। मनोरमायां तदुल्लेखाभावपूर्वकं स्वतः सिद्धान्तितम्।

२३—'द्वितीयाटौ स्वेनत्' इति न्यासेनेष्टसिद्धौ' अन्वादेशे नपुंसके एनद् वक्तव्यः' इति वार्त्तिकं व्यर्थम्। समासे 'एतच्छ्रितकः' इति रूपं भाष्ये निगदितम्। मनोरमायां तदनुल्लिख्य स्वतः सिद्धान्तितम्।

२४—'तप्परवंमरुद्भ्याम्' इति वार्त्तिकस्वरूपं प्रक्रियाकौमुद्यादौ विद्यते। मनोरमायां तदनुल्लिख्य स्वतः सिद्धान्तितम्।

२५—'बहिरङ्गलक्षणाद्वा' इति वार्त्तिकेन 'यणः प्रतिषेधो वाच्यः' इत्यस्य वैयर्थ्यम्, त्रिपाद्यां बहिरङ्गपरिभाषायाः प्रवर्तनात् काशिकादावेवं व्याख्यान-सत्त्वेऽपि मनोरमायां तदनुद्धृत्य स्वतः सिद्धान्तितम्।

२६—'उपपद०' परिभाषाऽन्तरङ्गमूलिकेति न्यासादौ विद्यते। मनोरमायां तदनुल्लिख्य स्वतः सिद्धान्तितम्।

२७—'वार्णादाङ्गं बलीयः' इति परिभाषायाम् 'असवर्ण'-ग्रहणस्य ज्ञापकत्वं भाष्य उक्तम्। मनोरमायां तदनुलिख्य स्वतः सिद्धान्तितम्।

२८—'क्रुञ्च'—धातोर्नकारोपधत्वस्य काशिकादौ सत्त्वेऽपि मनोरमायाम्, आकरग्रन्थमनिर्दिश्य तत् स्वमततया सिद्धान्तितम्।

२९—'उपेयिवाननाश्वाननूचानश्च' ( ३।२।१०९ ) इति सूत्रे 'उपेयिवान्' इत्यत्र सवर्णदीर्घाभावो निपातनाद् बलादिलक्षणस्येटः प्रतिप्रसवश्चेति भाष्ये निगदितम्। किन्तु तस्य निर्देशं विनैव मनोरमायां स्वतः सिद्धान्तितम्।

३०—'स्वादुमि णमुल्' (३।४।२६) इति सूत्रेण मान्तत्वनिपातनं भावप्रत्य-यमात्रविषयकमिति भाष्ये विद्यते। किन्तु मनोरमायां तन्निर्देशं विनैव सिद्धान्ततया तस्य स्थापनं विहितम्।

३१—'अतिशायने तमबिष्ठनौ' ( ५।३।५५ ) इति सूत्रे निपातनाद् दीर्घ-निर्देशेऽपि लोके 'अतिशायने' इति ह्रस्वोऽपि साधुरित्येवं काशिकादौ निगदितम्। मनोरमायां तदनुल्लिख्य स्वसिद्धान्ततया तस्य स्थापनं कृतम्।

३२—'अचः परस्मिन् पूर्वविधौ' ( १।१।५७ ) इति सूत्रे 'पूर्वविधौ' इत्यत्र पञ्चमीसमासस्वीकारो व्यर्थ इति पदमञ्जर्यां समाहितम् । मनोरमायां तमाकर-ग्रन्थमनुल्लिख्य स्वमततया सिद्धान्तितम् ।

३३—'आदिरन्त्येन सहेता' ( १।१।७१ ) इति सूत्रे 'स्व'-शब्दोऽनुवर्तत इति काशिकादौ निगदितम् । मनोरमायां स्वसिद्धान्तरूपेणोपस्थापितं निर्देशं विनैव ।

३४—'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' ( १।४।९० ) इति सूत्रेण कर्मप्रवचनीयसंज्ञायाः फलं 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र षत्वाभावमात्र-मिति न्यासादावुक्तम् । किन्तु मनोरमायां तन्निर्देशं विनैव सिद्धान्तितम् ।

३५—'इको यणचि' ( ६।१।७७ ) इति सूत्रे व्यक्तिपक्षे 'स्थानेऽन्तरतमः' इतिसूत्रमावश्यकमिति भाष्ये समाहितम् । मनोरमायां तदनिर्दिश्य स्वमततया सिद्धान्तितम् ।

३६—'कित्'-धातुः परस्मैपदीति काशिकादौ विद्यते । मनोरमायां तद-संकेत्य सिद्धान्तितम् ।

३७—यथोद्देशपक्षेऽपि षट्त्वस्याल्त्वधर्मत्वेन 'न लोपः सुप्स्वर०' इति नलो-पासिद्धत्वोपपादनमावश्यकमिति प्रक्रियाकौमुद्यां प्रसादे च निगदितम् । मनो-रमायां तस्य निर्देशं विनैव सिद्धान्तितम् ।

३८—'दीर्घो लघोः' ( ७।४।९४ ) इत्यत्र वैयधिकरण्येनार्थसंगतिरित्येवं काशिकादौ विद्यते । मनोरमायां तन्निर्देशं विनैव सिद्धान्तितम् ।

३९—'वा द्रुहमुहष्णुहष्णिहाम्' (८।२।३३) इति सूत्रे 'श्तिपा शपा०' इति निर्देशेन गुरुभूतो निर्देशो न्यासादौ विद्यते । मनोरमायां तन्निर्देशमन्तरैव सिद्धान्तितम् ।

४०—'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' ( १।४।५२ ) इति सूत्रं विध्यर्थमिति काशिकादौ निगदितम् । मनोरमायां निर्देशं विनैव सिद्धान्तितम् ।

४१—'भूवादयो धातवः' ( १।३।१ ) इति सूत्रे क्रियावाचित्वार्थकरणम् 'धाः' इत्यस्य धातुत्ववारणाय न्यासादौ विद्यते। किन्तु मनोरमायां तस्य निर्देशं विनैव स्थापनम्।

४२—'शूद्रा चामहत्पूर्वा जातिः' इति वार्त्तिके जातिग्रहणमनावश्यकमिति पदमञ्जर्यां निगदितम्। मनोरमायां तस्य संकेतं विनैव सिद्धान्तितम्।

४३—'दिव औत्' ( ७।१।७४ ) इति सूत्रे औतस्तकार उच्चारणार्थं इति न्यासे विद्यते। मनोरमायां तस्य निर्देशं विनैव स्थापनम्।

## नामग्रहणपूर्वकं पूर्वाचार्याणां मतस्य मनोरमायां सिद्धान्तरूपेण स्थापनम्

१. 'उपदेशेऽजनुनासिक इत्' ( १।३।२ ) इति सूत्र उपदेशशब्दो भाव-घञन्तः प्रदीपे विद्यते। तस्य चर्चा मनोरमायामस्ति।

२. 'कारके' ( १।४।२३ ) इति सूत्रे 'क्रियान्वयित्वं कारकत्वम्' इति भाष्यानुसारेण। मनोरमायां नामग्रहणपूर्वकं तथोपपादनम्।

३. 'यथालक्षणमप्रयुक्ते' इत्यस्य 'अप्रयुक्ते लक्षणमनतिक्रम्य कार्यं भवति' इति कैयटस्य व्याख्यानं विद्यते। मनोरमायां नामग्रहणमस्ति।

## युक्तायुक्तत्वसमीक्षायां मनोरमाकारमतमण्डनस्थलानि

१—'एङि पररूपम्' ( ६।१।९४ ) इति सूत्रे मनोरमाकारस्य मण्डनम्।

२—'अर्थवद्०' (१।१।४५) इति सूत्रे 'अर्थवत्' स्वरूपे दीक्षितमतमण्डनम्।

३—'निगरण०'(१।३।८७) इति सूत्रे निगरणार्थविचारे दीक्षितमतमण्डनम्।

४—'पूर्वसदृश०' ( ३।१।३१ ) इति सूत्रेऽर्थग्रहणे दीक्षितमतमण्डनम्।

५—'ई च खनः' ( ३।१।१११ ) इति सूत्रे 'इ' इति ह्रस्वविषये दीक्षित-मतमण्डनम्।

६—'इच एकाचो०' ( ६।३।६८ ) इति सूत्रे 'श्रिमन्यं कुलम्' इति दीक्षि-तमतमण्डनम्।

७—'नीवह्योर्न' इति वार्त्तिके दीक्षितमतमण्डनम्।

८—'अन्वादेशे०' इति वार्त्तिकखण्डने दीक्षितमतमण्डनम् ।

९—'नपुंसके भावे क्तः' ( ३।३।११४ ) इति सूत्रेऽकर्मकेभ्य इति दीक्षित-मतमण्डनम् ।

१०—'हरिः सेव्यते' इत्यत्र शाब्दबोधे दीक्षितमतमण्डनम् ।

११—'तप् पर्वमरुद्भ्याम्' इति वार्त्तिके 'मरुत'-शब्दे दीक्षितमतमण्डनम् ।

१२—'यणः प्रतिषेधो वाच्यः' इति वार्त्तिके दीक्षितमतमण्डनम् ।

१३—'अकृतव्यूह'-परिभाषायां ज्ञापकत्वे दीक्षितमतमण्डनम् ।

१४—'वार्णादाङ्ग'-परिभाषायां ज्ञापकत्वे दीक्षितमतमण्डनम् ।

१५—'उपेयिवान०' ( ३।२।१०९ ) इति सूत्रे 'उपेयिवान्' इति विषये दीक्षितमतमण्डनम् ।

१६—'स्वादुमि०' ( ३।४।२६ ) इति सूत्रेण मान्तत्वनिपातनविषये दीक्षितमतमण्डनम् ।

१७—'इको यणचि' (६।१।७७) इति सूत्रे दीक्षितमतमण्डनम् ।

१८—'बहुगणवतु०' ( १।१।२३ ) इति सूत्रे दीक्षितमतमण्डनम् ।

१९—'अतो दीर्घो० ( ७।३।१०१ ) इति सूत्रे मनोरमाकारमतमण्डनम् ।

शब्दरत्नकारस्य स्वोपज्ञस्थलानि

१—'एङि पररूपम्' इति सूत्रे दीर्घग्रहणं स्पष्टार्थमिति रत्नकारस्य स्वोपज्ञत्वम् ।

२—'अव्यक्तानुकरणस्यादितौ' इति सूत्रे 'अत्' ग्रहणम् 'अत्' इति स्वरूप-लाभायेति रत्नकारस्य स्वकीयोद्भावनम् ।

३—'अतो दीर्घो यञि' इति सूत्रे दीर्घग्रहणं व्यर्थमिति रत्नकारस्यापूर्वोक्तिः ।

४—'सम्बुद्धौ०' इति सूत्रे सम्बुद्धिग्रहणं वैचित्र्यायेति रत्नकारस्य स्वोपज्ञत्वम् ।

५—'निगरण०' इति सूत्रे 'निगरण' इत्यस्य भक्षणमात्रमर्थ इति रत्नकारस्य स्वोपज्ञत्वम् ।

६—'प्रातिपदिकार्थ०' इति सूत्रे प्रवृत्तिनिमित्ततदाश्रयश्चेति प्रातिपदिकार्थं इति रत्नकारस्य स्वोपज्ञत्वम् ।

७—'बह्वादि०' इति सूत्रे बहुग्रहणमावश्यकम् इति रत्नकारस्य स्वोपज्ञत्वम्

८—'हरिः सेव्यते' इत्यस्य हरिनिष्ठवर्तमानकालिका व्यापारजन्या प्रीतिरिति रत्नकारस्य स्वमतम् ।

९—'प्रज्ञाश्रद्धा०' इति सूत्रे षष्ठी स्यादेवेति रत्नकारस्य स्वमतम् ।

१०—'मय उञो०' इति सूत्रे सानुनासिकस्य स्थाने न सानुनासिकादेश इति रत्नकारस्य स्वोपज्ञत्वम् ।

११—'षड्भ्यो०' इति सूत्रे 'षष्' शब्दो बहुवचनान्तस्तेन बहुवचननिर्देशः अथवा प्रयोगबाहुल्येन इति रत्नकारस्य स्वमतम् ।

१२—'षट्चतुर्भ्यश्च' इति सूत्रे 'षष्' शब्दो बहुवचनान्तस्तेन बहुवचननिर्देश इति हरिदीक्षितस्य स्वमतम् ।

१३—'नी वह्योर्न' इति वार्त्तिकानर्थक्यप्रदर्शनमिति रत्नकारस्य स्वमतम् ।

१४—लोके 'याम्याः' इति प्रयोगाभाव इति रत्नकारस्य स्वमतम् ।

१५—'अकृतव्यूह' परिभाषा नास्तीति रत्नकारस्य स्वमतम् ।

१६—'वार्णादाङ्गम्' इति परिभाषायाम् 'अभ्यासस्यासवर्णे' इति सम्पूर्ण सूत्रस्य ज्ञापकत्वमिति रत्नकारस्य स्वमतम् ।

१७—'स्वादुमि०' इति सूत्रे मान्तत्वनिपातनं 'णमुल्' प्रत्ययमात्रविषयकम् इति रत्नकारस्य स्वमतम् ।

१८—'पञ्चमी-समासोऽनित्यः' इति रत्नकारस्य स्वमतम् ।

१९—'दीर्घो लघोः' इत्यत्र सामानाधिकरण्येऽपि न क्षतिरिति रत्नकारस्य स्वमतम् ।

२०—'श्तिपा०' इति परिभाषा नास्ति। तेन 'वा द्रुह०' इति सूत्रस्य लघुभूतन्यासेऽपि न क्षतिरिति रत्नकारस्य स्वमतम् ।

२१—'पुरुषात्०' इति सूत्रे लुगाक्षेपो व्यर्थ इति रत्नकारस्य स्वमतम् ।

**नामोल्लेखं विनैव शब्दरत्नकारेण पूर्वाचार्याणां मतस्य स्वसिद्धान्तरूपेणोपस्थापनम्**

१—'न ङिसम्बु०' इति सूत्रे 'ङि' इति सप्तम्यन्तं काशिकादौ विद्यते। शब्दरत्ने तदनिर्दिश्य सिद्धान्तितम्।

२—'भोभगो०' इति सूत्रेऽश्ग्रहणमुत्तरार्थमिति भाष्यादौ व्याख्यातम्। शब्दरत्ने तस्य निर्देशं विनैव सिद्धान्तितम्।

३—'स्थानिवदा०' इति सूत्रेऽल्रूपपरकोऽपि गृह्यत इति भाष्य उक्तम्। किन्तु तस्य निर्देशं विनैव शब्दरत्ने सिद्धान्ततयोपस्थापितम्।

४—'अर्थवत्०' इति सूत्रेऽर्थवद्ग्रहणफलं 'दशदाडिमानि षडपूपाः' इति भाष्यकैयटादौ विद्यते। किन्तु तस्य निर्देशं विनैव शब्दरत्ने सिद्धान्तितम्।

५—'कृत्तद्धित०' इति सूत्रेऽर्थवत् पूर्वावयवकः, अर्थवदुत्तरावयवकः इत्यादिनियमाकारनिर्देशो भाष्ये विद्यते। तस्य चर्चां विनैव रत्नकारेण सिद्धान्तितम्।

६—'भूवादयो०' इति सूत्रे भूवादिग्रहणफलम् 'आणवयति' 'वट्टयति' इति न्यासे विद्यते। तस्य सङ्केतं विनैव शब्दरत्ने तत् सिद्धान्तितम्।

७—'प्रातिपदिका०' इति सूत्रे परिमाणग्रहणं भाष्यकाशिकाद्यनुसारेण। किन्तु शब्दरत्ने तदनुल्लिख्य सिद्धान्तितं स्वमततया।

८—'नित्यं कौटि०' इति सूत्रे नित्यग्रहणं व्यर्थमिति भाष्ये वाक्यपदीयादौ चोक्तम्। तस्य सङ्केतं विनैव शब्दरत्ने सिद्धान्तितम्।

९—'ई च खनः' इति सूत्रे सर्वत्र 'ई' इति दीर्घपाठ एवोचित इत्याशयः काशिकायां विद्यते। तस्य निर्देशनं विनैव शब्दरत्ने तथा सिद्धान्तितम्।

१०—'नपुंसके०' इति 'क्त'-प्रत्ययः सकर्मकादपि इति पक्षोऽपि पदमञ्जर्यां दृश्यते। किन्तु तस्य सङ्केतं विनैव शब्दरत्ने संस्थापितः।

११—'स्वाङ्गे तस्०' इति सूत्रे प्रत्ययग्रहणं 'प्रत्ययाप्रत्ययपरिभाषाया अनित्यत्वज्ञापनार्थमिति पदमञ्जर्यां विद्यते। तस्य सङ्केतं विनैव शब्दरत्ने सिद्धान्तितम्।

१२—'अर्थवत्०' इति सूत्रे 'एतत्संज्ञाफलभूत०' इत्यादिव्याख्यानं प्रदीपे विद्यते। किन्तु तस्य निर्देशं विनैव शब्दरत्ने तदुपस्थापितम्।

१३—'अतोऽम्' इति सूत्रे 'अम्' इतिच्छेदो भाष्ये विद्यते। तस्य सङ्केतं विनैव शब्दरत्ने स स्वसिद्धान्ततया वर्णितः।

१४—'दिव औत्' इति सूत्र औतस्तकार इत्संज्ञक इति चक्रपाणिकृत-मनोरमाखण्डने विद्यते। शब्दरत्ने तस्य निर्देशं विनैव सिद्धान्तितम्।

१५—'इदुदुप०' इति सूत्रे 'अप्रत्ययः' इत्यस्य वैयधिकरण्यान्वय इति पदमञ्जर्यां विद्यते। किन्तु शब्दरत्ने तस्य सङ्केतं विनैव सिद्धान्तितम्।

१६—'गां दोग्धिपयः' इत्यस्य गोकर्मकं पयःकर्मकं दोहनं भाष्यसम्मतं न्यासादिसम्मतं च। किन्तु शब्दरत्ने तस्य सङ्केताभावः।

१७—भाष्ये 'श्रियं मन्यं कुलम्' इति विद्यते। शब्दरत्ने तन्निर्देशं विनैव सिद्धान्तितम्।

१८—'तप् पर्वमरुद्भ्याम्' इत्यस्य स्थाने 'तन् पर्वमरुद्भ्याम्' इति वार्त्तिकस्वरूपम्। तेन 'मरुत्त' शब्द आद्युदात्त इति काशिकापदमञ्जर्यादौ विद्यते। किन्तु शब्दरत्ने तन्नामानुल्लिख्य सिद्धान्तितम्।

१९—'उपपद०' इति परिभाषा वाचनिकीति भाष्ये पठितम्। शब्दरत्ने त्वाकरग्रन्थमनुल्लिख्य सिद्धान्तिता।

२०—'उपेयिवान्' इत्यत्र सवर्णदीर्घो निपातनात्, क्रादिनियमेन च 'इट्' इति पदमञ्जर्यामस्ति। किन्तु शब्दरत्ने तन्निर्देशं विनैव सिद्धान्तितम्।

२१—'अतिशायने०' इति सूत्रे बाधकान्येवेति पक्षो भाष्ये विद्यते।' किन्तु शब्दरत्ने नामनिर्देशं विनैव पक्षस्यास्योपपादनं स्वसिद्धान्ततया।

२२—'आदिरन्त्येन०' इति सूत्रे 'स्व' शब्दो नानुवर्तत इति भाष्यानुसारेण। शब्दरत्ने निर्देशं विनैव तथा सिद्धान्तितम्।

२३—'लक्षणेत्थं भूत० इति सूत्रेण द्वितीयोत्पत्तिः, षत्वाभावश्चेति फलं भाष्यानुसारेण। शब्दरत्ने निर्देशं विनैव तथा सिद्धान्तितम्।

२४—'इको यणचि' इति सूत्रे व्यक्तिपक्षेऽपि 'स्थानेऽन्तरतमः' इति सूत्रमनावश्यकं भाष्ये न्यासादौ च विद्यते। किन्तु शब्दरत्ने निर्देशं विनैव तथा सिद्धान्तितम्।

२५—'पट्त्वं नाल्विधित्वम्' तेन नलोपासिद्धत्वोपपादनमनावश्यकमिति भाष्यादौ दृश्यते। किन्तु शब्दरत्ने निर्देशं विनैव सिद्धान्तितम्।

२६—'भूवादि०' इति सूत्रे क्रियावाचित्वार्थफलं 'वा' इत्यस्यापि धातुत्व-वारणं काशिकादौ लक्ष्यते। तस्य निर्देशं विनैव शब्दरत्ने सिद्धान्तितम्।

२७ - 'बहुगण०' (१।१।२३) इति सूत्रे बहुगणशब्दौ न संख्यावाचकौ तत्र संख्याकार्यविधानार्थं बहुगणग्रहणमिति भाष्ये विद्यते। किन्तु शब्दरत्ने निर्देशं विनैव सिद्धान्तितम्।

शब्दरत्ने पूर्वाचार्याणां मतस्य नामोल्लेखनपूर्वकं सिद्धान्तरूपेण स्थापनम्।

१—'शेषे लोपः' इत्यत्र "अन्त्यलोपः' इति भाष्यानुसारेण शब्दरत्ने तन्नामनिर्देशो विद्यते।

२—'उपदेशे०' इति सूत्रे 'उपदेश'-शब्दः करणघञन्त इति भाष्यस्य नामग्रहणं शब्दरत्ने विद्यते।

३—'क्रियाजनकत्वं कारकत्वम् इति भाष्यानुसारेण। शब्दरत्ने भाष्यस्य सङ्केतो विद्यते।

४—'पूर्वसदृश०' इति सूत्रेऽर्थशब्दो व्यर्थ इति भाष्यानुसारेण शब्दरत्ने भाष्यसङ्केतपूर्वकं सिद्धान्तितम्।

५—लोके 'मघवा' इत्यव्युत्पन्नशब्दनिर्देश इति भाष्यम्। तन्नामनिर्देश पूर्वकं शब्दरत्ने स्मरणम्।

६—'उभ' शब्दस्य सर्वादिगणे पाठो व्यर्थ इति भाष्यम्। तन्नामनिर्देश-पूर्वकं शब्दरत्ने व्याख्यानम्।

७—'ङमो ह्रस्वा०' इति सूत्रे 'परमदण्डिनौ इत्यत्र नुड्वारणार्थं 'पदे' इत्यनुवर्तत इति भाष्यानुसारेण। शब्दरत्ने तन्नामग्रहणपूर्वकमेव सिद्धान्तितम्।

८—समासेऽपि बहिरङ्गपरिभाषायाः प्रवृत्तिस्तेन 'एनच्छ्रितकः' इति रूपापत्तिः भाष्यानुसारेण। शब्दरत्ने नामोल्लेखपूर्वकं स्थापनम्।

९—'क्रुन्च' धातुर्नकारोपध इति भाष्यानुसारेण। शब्दरत्ने नामग्रहणपूर्वकं सिद्धान्तितम्।

१०—'गतिबुद्धि०' इति सूत्रं नियमार्थमिति भाष्यानुसारेण शब्दरत्ने नामनिर्देशः।

११—'कित्'-धातुरात्मनेपदीति भाष्यानुसारेण। शब्दरत्ने नामग्रहणपूर्वकं सिद्धान्तितम्।

१२—शूद्रा चेति वार्त्तिके जातिग्रहणमावश्यकमिति भाष्यवार्त्तिककारानुरोधेनेति शब्दरत्ने नामनिर्देशपूर्वकं स्थापनम्।

१३—'यथालक्षण०' इत्यस्य द्वितीयव्याख्यानं कैयटेन यत् कृतम्, शब्दरत्ने प्रदीपकारस्य नामोल्लेखपूर्वकं स्वसिद्धान्तरूपेण तस्य स्थापनम्।

## युक्तायुक्तत्वसमीक्षायां रत्नकारमतमण्डनस्थलानि

१—'अव्यक्त०' इति सूत्रे रत्नकारमतमण्डनम्।

२—'शेषे लोपः' इति सूत्रे रत्नकारमतमण्डनम्।

३—'भो भगो०' इति सूत्रे रत्नकारमतमण्डनम्।

४—'सम्बुद्धौ०' इति सूत्रे रत्नकारमतमण्डनम्।

५—'स्थानिवदा०' इति सूत्रे रत्नकारमतमण्डनम्।

६—'अर्थवद०' इति सूत्रे अर्थवत्फलविषये रत्नकारमतमण्डनम्।

७—'कृतद्धित०' इति सूत्रे रत्नकारमतमण्डनम्।

८—'उपदेश'—शब्दे रत्नकारमतमण्डनम्।

९—'कारकत्वविवेचने रत्नकारमतमण्डनम्।

१०—प्रातिपदिकार्थविवेचने रत्नकारमतमण्डनम्।

११—परिमाणग्रहणे रत्नकारमतमण्डनम्।

युक्तायुक्तत्वसमीक्षायां मनोरमारत्नकारोभयमतमण्डनस्थलानि

१—'न ङिसंबुद्धयोः' इति सूत्र उभयमतमण्डनम् ।

२—'पडभ्यो०' इति सूत्र उभयमतमण्डनम् ।

३—'षट्चतुर्भ्यश्च' इति सूत्र उभयमतमण्डनम् ।

४—'क्रुञ्च' धातावुभयमतमण्डनम् ।

५—'कित्, धातावुभयमतमण्डनम् ।

तानि स्थलानि यत्रोभयमतनिराकरणपूर्वकं नवीनमतस्थापनम्

१—क्रियावाचित्वार्थे 'दिव्' इति फलम् । 'या' 'वा' इत्युभयं न ।

२—'थःम्याः' इति प्रयोगे नोभयमतमण्डनम् । 'ण्य'–प्रत्ययेन प्रयोगसाधनम् ।

३—भूवादिग्रहणे नोभयमतमण्डनम् । भूवादीनां 'वकारोऽयम्' इति फलम् ।

मनोरमाकारस्य स्ववचनविरोधस्थलम्

१—'बाहुलकं त्वगतिकगतिः' इत्युपदेशशब्दविचारे दीक्षितेन निगदितम्, स्वतः 'प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ्' इति मनोरमायां परस्परं विरोधः ।

२—'मय उञो०' इति सूत्रे सानुनासिकस्य सानुनासिकादेशे तेन किमु इति, किम्विति, किमूं इति, किम्विंति इत्यादिरूपस्य सिद्धिः प्रदर्शिता । किन्तु 'उञः' ( १।१।१७ ) इति सूत्रे 'ऊँ' ( १।१।१८ ) इति सूत्रे च कौमुद्यां रूपत्रयस्यैव प्रदर्शनं कृतम् सानुनासिकस्य सानुनासिकादेशस्वीकारे तत्रापि चत्वारि रूपाणि स्युः । इत्थं मनोरमाकारस्य परस्परं विरोधः ।

शब्दरत्नकारकृतं स्ववचनविरोधस्थलम्

'बहुगणवतुडति संख्या' इति सूत्रे 'बहु'–शब्दस्य संख्यावाचकत्वाभावप्रदर्शनम्, 'बह्वादिभ्यश्च' इति सूत्रे संख्यावाचित्वस्वीकरणमिति रत्नकारस्य स्ववचनविरोधः ।

शब्दरत्नकारकृतम् आकरग्रन्थनिर्देशभ्रमस्थलम्

'ङमो ह्रस्वादचि' इति सूत्रभाष्ये समुपलब्धसंस्करणेषु 'तेननिषेधेन सिद्धम्' इति वाक्यं नास्ति । किन्तु शब्दरत्ने तस्य भाष्यस्थत्वं वर्णितम् ।

## लक्ष्याधारेण विवादग्रस्तस्थलानां निर्णयः

लक्ष्यलक्षणे व्याकरणम् इति व्याकरणे लक्ष्यस्य प्राथम्यं निश्चितम्। लक्ष्याधारेणैव व्याकरणं रच्यते। लक्षणापेक्षया लक्ष्यस्य गरीयस्त्वम् महाभाष्ये पदे पदे लक्ष्यैकचक्षुष्कत्वरूपेण, अविहितरूपेण, अनभिधानरूपेण च निर्वर्णितम्। किन्तु त्रयोदशख्रीस्ताब्दतः प्राचीनपरिपाटीं लक्ष्याधारभूतामवहेल्य कल्पनाकोटयः व्याकरणं प्रवेशिता इति प्रयोगपथातीतत्वात् किं चायुक्तमिति निर्णयो दुश्शको जातः। तादृषेषु विवादस्थलेषु मया पुनरिह सा पुरातनी प्रयोगपरिपाटी समवलम्बिता निर्णयार्थम्। दर्शनार्थं कानिचित् स्थलानीह समुध्रियन्ते।

१—'पूर्वसदृश०' (२।१।३१) इति सूत्रे 'अर्थ'–शब्दस्य प्रयोजनविचार-प्रसङ्गे लक्ष्यस्थलानां निर्देशपूर्वकं निर्णयः प्रदर्शितः।

२—'मघवा बहुलम्' (६।४।१२८) इति सूत्रस्थस्य 'मघवा' इति वनिवन्तप्रयोगस्य लोके प्रयोगो भवति नवेत्यत्र लक्ष्योद्धरणपूर्वकं निर्णयः।

३—'नीवह्योर्न' इति वार्त्तिकस्थयोरुभयोर्धात्वोर्गत्यर्थत्व साधने लक्ष्याधारेण विवेचनं कृतम्।

४—'निगरण०' (१।३।८७) इति सूत्रे 'निगरण'–शब्दार्थनिर्णयाय लक्ष्योद्धरणपूर्वकमन्वाख्यातम्।

५—यमाच्चेति वार्त्तिके 'याम्याः' इत्यस्य लोके प्रयोगोऽस्ति नवेति परीक्षणार्थं लक्ष्यं विनिगमकत्वेन संयोजितम्।

६—'कित्'–धातु विचार प्रसङ्गे लक्ष्यमङ्गीकृत्य विवेचितम्।

### स्वमतस्थापनस्थलानि

१—'भो भगो०' इति सूत्रे स्वमतेऽश् ग्रहणमनर्थकमेव।

२—'अर्थवद्०' इति सूत्रेऽअर्थवद्–ग्रहणस्य फलं वस्तुतस्त्वित्युक्त्या चिन्त्यं दर्शितम्।

३—द्रोणः, खारी, प्रस्थः, इत्यादीनां प्रथमासिद्ध्यर्थं परिमाणग्रहणम्, न तु 'द्रोणो व्रीहिः' इति प्रयोगार्थम् इति मन्मते।

४—स्वमते विषयसप्तम्यां परसप्तम्यां वा 'ईच खनः' इत्यत्र ह्रस्वपाठ एवोचितः।

५—स्वमते ससुट्कनिर्देश आम्येव साम्त्वारोपेण ।

६—'श्रिमन्यम्', 'श्रियं मन्यम्' इत्युभयमतं युक्तं स्वमते ।

७—स्वमते 'पर्वमरुद्भ्यां तप् तन् वा' इति वार्त्तिकस्वरूपम् ।

८—'उपेयिवान्' इत्यत्र 'इयि' इति निपात्यते ।

९—'अतिशायने' इत्यत्र दीर्घप्रयोगस्य साधुत्वं स्वार्थे णिचि सति, न तु निपातनाद् इति मन्मते ।

१०—'इको यणचि' इत्यत्र जातिपक्षे व्यक्तिपक्षे च 'स्थानेऽन्तरतमः' इति सूत्रमावश्यकम् इति स्वमतम् ।

११—'यथालक्षणमप्रयुक्ते' इत्यस्य व्याख्यानद्वयानुसारेण 'प्रियाष्टनः' इति प्रयोगोपपत्तिरिति स्वमतम् ।

१२—'पुरुषात्०' इति सूत्रं परिमाणवाचिपुरुषशब्दात् पाक्षिकङीप् सिद्ध्यर्थम्' इति स्वमते ।

१३—क्रियावाचित्वार्थफले स्वमते सर्वमतमण्डनम् ।

एवं तावदिह प्रौढमनोरमा-शब्दरत्नयोर्विचारभेदानां युक्तायुक्तत्वसमीक्षायां भट्टोजिदीक्षितस्य स्वोपज्ञस्थलानि, नामोल्लेखमन्तरैव पूर्वाचार्यानुकरणानि, शब्दरत्नकारस्य स्वोपज्ञस्थलानि, पूर्वाचार्यानुकरणानि च पाणिनीयव्याकरण-परम्परया तदितरपरम्परया च परीक्ष्य विवक्तानि । ततश्च युक्तायुक्तत्वसमीक्षायां मनोरमाकारमतानि युक्तानि नवेति पर्यालोचनया क्वचिन्मनोरमाकारमतं मण्डितम्, क्वचिच्च रत्नकारमतम्, क्वचिच्चोभयोर्मतं मण्डितम्, क्वचिच्चोभय-मतनिराकरणपूर्वकं नूतनं मतं प्रदर्शितम् । विवादग्रस्तेषु बहुषु स्थलेषु स्वकीयं मतमप्युद्भावितम् । इह कियत् साफल्यं मया समासादितमिति प्रेक्षका एव प्रमाणम्

भाद्रशुक्लपूर्णिमा
२०३४ वि०
२८–९–७७ ई०,
भौमवासर

विदुषां वशंवदः
सुधीर नारायणठक्कुरः 'सीतारामशरणः'
नौगछिया, घाटठाकुरवाड़ी, भागलपुर ।

# शुद्धि-पत्रम्

| शुद्धः | पृष्ठाङ्कः | पंक्ति सं० | अशुद्धः |
|---|---|---|---|
| शाकल्यस्य | ३ | १० | शाकल्यस्त |
| शब्दौ | ५ | १० | शदौ |
| संख्यावाचित्वं | ६ | १३ | संख्यवाचित्वं |
| गृह्यते | ८ | १५ | गृहयते |
| इत्थं | १३ | १६ | इत्यं |
| तमे | १४ | १२ | तममे |
| तदभावेन | १५ | ८ | तदभादेन |
| जिज्ञासायाम् | ३७ | ३ | जिज्ञसायाम् |
| काशिकाकारेण | ४८ | १ | काशिकारेण |
| छन्दःसु | ८७ | ३ | छदःसु |
| कर्तृ | १०३ | ८ | कतृ |
| किंविति | १११ | ४ | किंवित |
| उञो | १११ | १८ | ऊञो |
| आर्धधातुके | १२२ | १ | आद्र्धधातुके |
| महाशूद्री | १२४ | ७ | महाशूदी |
| टावेत्र | १२५ | १० | टावेव |
| कर्मणि | १३० | १ | कर्माणि |
| प्रक्रियाकारादिनापि | १३० | ११ | प्रक्रियाकारादीनापि |
| वार्णादाङ्गंबलीयः | १४० | ११, १३, १४, १५, १६ | वार्णादाङगंबलीय |
| इयङ् | १४१ | २ | इयङ |
| उवङ् | १४१ | ३ | उवङ्ग |
| तदर्थम् | १४१ | ८ | तदर्थं |

| शुद्धः | पृष्ठाङ्कः | पंक्ति सं० | अशुद्धः |
| --- | --- | --- | --- |
| अभ्यासस्यार्तौं | १४१ | १० | अभ्यासस्यातौ |
| इणो यण् | १४१ | १४ | इणौ यण् |
| मनोरमाकारस्य | १४१ | १७ | मनोरमाकास्य |
| इर्यात | १४१ | २० | इत्यर्ति |
| अभ्यासस्यार्तेः | १४३ | ४ | अघ्यासस्यार्तेः |
| कुत्वाभावं | १४४ | ७ | कुत्वभाव |
| नोपधत्व | १४४ | १६ | नौपधत्व |
| स्वीकर्तुं | १४५ | ७ | स्वीकुर्तुं |
| अतो | १४६ | १६ | अतौ |
| एकाच्त्वे | १४६ | २१ | एकात्वे |
| भट्टोजिदीक्षितोक्त | १४७ | १४ | भट्टोजिदीक्षितौक्त |
| यद्यप्यत्र | १४७ | १६ | अद्यप्यत्र |
| भाष्यव्याख्यान | १४७ | १७ | भाष्यव्यान |
| वलादिलक्षणस्येडः | १४८ | २ | वलादिलक्षणस्वेडः |
| वस्वेकाजाद्घसाम् | १४८ | २ | वस्वेकाघादघसाम् |
| इत्यपरं | १४८ | २१ | इतपरं |
| प्रसङ्गेन | १५१ | ११ | प्रसङ्गेनी |
| षट्त्व | १५५ | १ | षटत्व |
| दोषो | १६० | ७ | दोषा |
| पक्षस्यैवौचित्यम् | १६१ | ४ | पक्षस्यैवोचित्यम् |
| बोधक | १६२ | १७ | बौधक |
| सकारोत्तरवर्त्तीककारः | १६३ | १० | सकारोत्तरवर्तीकारः |
| आतोऽनाप् | १६६ | ८ | अतोऽनाप |
| फलकोटौ | १६८ | २ | फलकोटा |
| ज्ञापनदानानर्थकाभाव-करणेन | १६८ | ५ | ज्ञापनदाऽनर्थकाभाव-करणेन |

| शुद्धः | पृष्ठाङ्कः | पंक्ति सं० | अशुद्धः |
|---|---|---|---|
| धातुत्ववारणे | १६८ | ४ | धातुत्वरारणे |
| दोषाभावादित्युक्तम् | १६८ | ११ | दोषाभावात् इत्युक्तम् |
| शाब्दप्राधान्यस्य | १६९ | १० | शावदाधान्यस्य |
| कर्मत्वसिद्धौ | १६९ | १३ | कर्मत्वासिद्धौ |
| चास्यानुमोदनं | १७० | ६ | च्यास्यानुमोदनं |
| कर्तुरीप्सित | १७० | १६ | कतुरीप्सित |
| नियमार्थं | १७१ | ११ | नियमार्थं |
| सिञ्चति | १७० | १८, २० | सिन्चति |
| भाष्यकारेण | १७३ | १३ | माप्यकारेण |
| क्रियायोगाभावेन | १७४ | १० | क्रियायोगाभवेन |
| धातोरनुदात्तत्वे | १७५ | ५ | धातोरनुदात्तेतत्वे |
| कित्धातोरप्युदात्तत्वम् | १७६ | ५ | कित्धातोरप्युदात्तेत्वम् |
| अतः | १७६ | १८ | मतः |
| ङीव् निषेध | १७७ | १९ | ङी निषेध |
| चारितार्थ्ये | १७८ | १० | चारितार्थ्यों |
| ङीव् निषेधा | १७९ | ८ | ङीविषेघो |
| समाधानमुचितं | १८० | २ | समाधानुमुचितं |
| कथनम् | १८० | १३ | कथनंम् |
| ततोऽव्यवहित | १८१ | १५ | ततोऽव्यवहिति |
| परस्पर | १८२ | १५ | पदस्पर |
| सूत्रस्थभाष्यं | १८२ | १६ | सूत्रस्थाभाष्यं |
| निर्देशस्तु | १८३ | १३ | निर्देस्तु |
| पश्य | १८४ | १० | पश्ये |
| प्रियष्टः | १८५ | ६ | प्रियष्टिः- |
| सिद्धकोटौ | १८६ | १८ | सिद्धकोटो |
| अङ्गे | १८७ | १० | अङ्गे |

| शुद्धः | पृष्ठाङ्कः | पंक्तिः | अशुद्धः |
| --- | --- | --- | --- |
| लिङ्गाभावेन | १८७ | १५ | लिङगाभावेन |
| पञ्चैतानि | १९० | २ | पन्चैतानि |
| स्वीकारेऽप्यनित्यत्व | १९१ | ३ | स्वीकारेऽत्यनित्यत्व |
| क्षति: | १९१ | ३ | क्षती: |
| अर्थवत: | १९४ | १९ | अर्थंवत: |
| प्रातिपदिक | १९६ | १८ | प्रतिपादिक |
| याम्या: | २०० | ९ | माया: |
| इति | २०० | १३ | इषि |
| अच: परस्मिन्० | २०३ | ६ | अत: परस्मिन० |
| अजाद्यतष्टाप् | २०३ | १३ | अजाद्यतष्टाम् |
| अञ्चुयुजि | २०२ | १४ | अञ्युजि |
| अव्ययादापसुप: | २६४ | ११ | अव्ययाप्सुदाप: |
| उपेयिवाननाश्वान० | २०६ | १ | उपेयिवानननाश्वान |
| दादेर्धातोर्घ: | २०९ | १७ | दादेघातोर्घ: |
| शक्तिलाङ्गल० | २०८ | १० | शक्तिलाङ्ल० |
| सम्यग्ज्ञात: | ० | ५ | सम्यग्ज्ञात: |
| पी–एच्० डी० | ० | १८ | पी० एच० डी० |



# विषय सूची

पृष्ठाङ्कः

---

# प्रौढमनोरमाशब्दरत्नयोर्विचारभेदानां युक्ता-युक्तत्वसमीक्षा

## संबुद्धिग्रहणफले विचारः

१—'सम्बुद्धौ' इति सूत्रे सम्बुद्धिग्रहणम् 'अहो इति' इत्यत्र वैकल्पिक-प्रगृह्यसंज्ञाबाधनार्थमिति भट्टोजिदीक्षितः ।

२—शब्दरत्नकारमतेन 'सम्बुद्धौ' इति सूत्रे सम्बुद्धिग्रहणं वैचित्र्याय बोध्यम् ।

३—विदुषां मतप्रदर्शनपूर्वकं समीक्षणम् ।

'संबुद्धौ शाकल्यस्येतावनार्षे (१।१।१६)। अवैदिके 'इति'-शब्दपरे शाकल्यस्त मतेन ओदन्तसम्बुद्धेः प्रगृह्यसंज्ञा विधीयते इति सूत्रार्थः। अत्र सूत्रे सम्बुद्धिग्रहणाभावे 'अहो + इति' इत्यादौ 'ओत' (१।१।१५) इति सूत्रं प्रबाध्य, अनेन वैकल्पिकप्रगृह्यसंज्ञासत्त्वे, पक्षेऽवापत्तिरिति भट्टोजिदीक्षितमतम्[1]। अस्य मतस्य समर्थनं नागेशेन[2] तत्त्वबोधिनीकारेण[3] च कृतमस्ति ।

शब्दरत्नकार[4]मते अहो + इति' इत्यादौ तु सम्बुद्धिग्रहणाभावेऽपि प्रकृतसूत्रे निपातपदाननुवृत्तौ निपातातिरिक्तस्थल एवानेन प्रगृह्यसंज्ञाया विधानम् । अन्यथा 'ओत शाकल्यस्य' इत्येव न्यासः स्यात् । तदभावे सम्बुद्धिग्रहणं वैचित्र्यार्थमेव ।

काशिकाकार[5]- पदमञ्जरीकार[6]न्यासकार[7]प्रसादकारा[8]दिभिरनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वेन 'गवित्यमाह' इत्यत्र सम्बुद्धिग्रहणाभावे पाक्षिकप्रगृह्यत्वापत्तिः फलमुक्तम् ।

---

१. प्रौढमनोरमायां २२५-२५३ तमयोः पृष्ठयोः ।

२. लघुशब्देन्दुशेखरे ११८ तमे पृष्ठे ।

३. तत्त्वबोधिन्याम् ३२ तमे पृष्ठे ।

४. शब्दरत्ने २५३-२५५ तमपृष्ठपर्यन्तम् ।

५. काशिकायाम् 'सम्बु०' इति सूत्रे ११५-११६ तम पृष्ठयोः ।

६. पदमञ्जर्याम् 'सम्बु०' इति सूत्रे ११५-११६ तम पृष्ठयोः ।

७. न्यासे 'सम्बु०' इति सूत्रे ११५-११६ तम पृष्ठयोः ।

८. प्रसादटीकायाम् 'सम्बुद्धौ' इति सूत्रे ८१ तमे पृष्ठे ।

  

तत्र दीक्षितोक्तरत्नकारोक्तपक्षयोर्विचारे तयोः स्वकीयापूर्वमतोपस्थापने रत्नकारोक्तमेव साधु प्रतीयते । यतो हि 'सम्बुद्धिनिमित्तकं ओकारो वा प्रगृह्याऽवैदिके इतौ परे' इति कौमुद्यां स्वयमेवोक्तं दीक्षितेन । तत्र 'ओत्' इति सूत्रत ओकारमात्रमनुवर्त्य, 'ओकारो वा' इत्युक्तम् । ओकारवद् निपातानुवृत्तौ तु सम्बुद्धिनिमित्तक ओदन्तनिपातस्य वा प्रगृह्योऽवैदिके इतौ परे - इत्यर्थः स्यात् । सम्बुद्धिनिमित्तक - ओदन्तनिपातस्तु 'ओ' इत्याकारकः । तत्र 'निपात एकाजनाङ्०' ( १।१।१४ ) 'ओत्' इति सूत्रद्वयं च प्रबाध्य, सूत्रस्यास्य प्रवृत्तौ 'ओ' + इति' = अविति इत्येतन्मात्रमस्योदाहरणं भवितुमर्हति, न तु 'विष्णो + इति' इत्यादि । तेन निपातपदस्यानुवृत्तिर्भवितुं नार्हति ।

तदा 'अहो + इति' इत्यादौ सम्बुद्धिग्रहणाभावेऽपि दोषाऽभावः । यद्यपि चादिगणे 'अह' इति पूजार्थकस्य पाठः, न तु 'धिक्-शोक-करुणा-विषाद-सम्बोधन-प्रसंसा-विस्मय-पदपूरण-असूया-वितर्कार्थवाचकस्य' 'अहो' इति शब्दस्य, तथापि चादिगणस्याऽऽकृति-गणत्वेन तद्व्यतिरिक्तस्य 'अहो' शब्दस्यापि तथात्वम् । तेन 'मिथो' + इति' इति निपातातिरिक्तस्याव्ययस्य पाक्षिकप्रगृह्यत्वापत्तिः-इति भैरवीकारेण[1] फलं दर्शितम् । स्वरप्रभृतीनामव्यानामप्याकृतिगणत्वेन 'अहो' इत्यपि निपातातिरिक्ताव्यय एवेति तु वक्तुं न शक्यते । तथा सति 'ओत्' ( १।१।१५ ) इति सूत्रेणापि तस्य प्रगृह्यसंज्ञा न स्यात् ।

वस्तुतः सम्बुद्धिग्रहणाभावे 'मिथो + इति' इत्यस्योदाहरणसार्थक्येऽपि तत्सत्त्वेऽस्य प्रगृह्यसंज्ञाकरणाय सूत्राभावे 'मिथविति' इति नित्यप्रयोगापत्तावेतादृशप्रयोगाणाम् अनभिधानेनोदाहरणदानमसंगतमेव । तस्माद् अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वेन 'गवित्यमाह' इत्यत्र पाक्षिक प्रगृह्यत्वापत्तिरेव फलम् । भेदस्य विवक्षायां तु फलस्य चिन्त्यत्वे 'वैचित्र्याय' इति रत्नाकारोक्तेः संगतिरिति विदुषां विचार विषयः ।

**बहुग्रहणे विचारः**

१—सूत्रार्थः ।

२—भट्टोजिदीक्षितमतेन 'बहुगण०' इति सूत्रे बहुग्रहणं संख्यावाचकस्यैव 'बहु'-शब्दस्य संख्यासंज्ञा-विधानार्थम् ।

---

१. भैरव्याम् 'सम्बु०' इति सूत्रे २५४ तमे पृष्ठे ।

३—संख्यावाचकस्य 'वहु'-शव्दस्य संख्यासंज्ञाविधानार्थम् 'वहुगण०' इति सूत्रे वहुग्रहणमित्यत्र विदुषां सम्मति प्रदर्शनम् ।

४—शव्दरत्नकारमतेन 'वहु'-शव्दस्य संख्यावाचकत्वाभावेऽपि संख्यासंज्ञा-प्रयुक्तकार्य-सिद्धयर्थम् 'वहुगण०' इति सूत्रे वहुग्रहणम् ।

५—शव्दरत्नाकारोक्त पक्षस्य-समर्थने विदुषां सम्मतिप्रदर्शनम् ।

६—अपाणनीये व्याकरणे प्रदर्शितविचारनिर्देशनम् ।

७—'वहुगण०' इति सूत्रे 'वहु'-ग्रहणविषये समीक्षात्मकविचारः ।

वहुशव्दः, गणशव्दः, वत्वन्तः, डत्यन्तश्च संख्यासंज्ञां लभन्ते इति 'वहुगण-वतुडतिसंख्या' ( १।१।२३ ) इति सूत्रस्यार्थो भवति ।

तत्र दीक्षित[1]मतेन वहुगणशदौ संख्यावाचकौ, संघवैपुल्यवाचकौ च । अत्र सूत्रे तु तौ संख्यावाचकावेव गृह्येते । संख्यायतेऽनया इति व्युत्पत्याऽन्वर्थसंज्ञां च लभेते ।

काशिकाकारमतेन[2], न्यासकाकारमतेन[3], पदमञ्जरीकारमतेन[4] च भूर्यादि-वाचकयोः शव्दयोः संख्याकार्यनिवृत्यर्थं संख्यावाचिनोर्वहुगणशव्दयोर्ग्रहणम् । प्रसादकारेण[5] प्रक्रियासर्वस्वकारेणापि[6] एतदेव स्वीकृतम् इति भट्टोजिदीक्षितस्य नास्तीदं स्वोपज्ञमतम् ।

रत्नकारमतेन[7] तु नियतसंख्या येन शव्देन ज्ञायते सैव संख्यावाचकत्वेन वक्तुं शक्यते । वह्वादिशव्देन तु नियतसंख्या न गृह्यते । तत्र त्र्यादिसंख्यागतव्या-पकधर्मो विद्यते । मानं चात्र 'असंख्यां संख्या' इति भाष्यमेव ।

---

१. प्रौढमनोरमायाः ५०२-५०३ तम पृष्ठयोः ।

२. काशिकायाः 'वहुगण०' इति सूत्रे १२६-१२७ तम पृष्ठयोः ।

३. न्यासस्य 'वहुगण०' इति सूत्रे १२६-१२७ तम पृष्ठयोः ।

४. पदमञ्जर्याः 'वहुगण०' इति सूत्रे १२६-१२७ तम पृष्ठयोः ।

५. प्रक्रियाकौमुद्याः प्रसादटीकायां 'वहुगण०' इति सूत्रे १५७ तमे पृष्ठे ।

६. प्रक्रियासर्वस्वस्य 'वहुगण०' इति सूत्रे त्रयोदशे पृष्ठे ।

७. शव्दरत्नस्य 'बहुगण०' इति सूत्रे ५०२-५०३ तम पृष्ठयोः ।

नागेशेन,[१] भैरवीकारेण,[२] भावप्रकाशकारेण,[३] शब्दरत्नकारोक्तमेव समर्थितम्। मुग्धबोधे[४] तु प्रचुरार्थवाचकस्य 'बहु'-शब्दस्य सूत्रेग्रहणमित्युक्तम्।

गुणदोषविवेचनात्मकदृशा तु भट्टोजिदीक्षितमतमेव युक्तम्। यद्यपि नियतसंख्यावाचकत्वं बह्वादिषु नास्ति, तथापि संख्यावाचकत्वे तस्य न क्षतिः। नियतसंख्यावाचिनामेव संख्यावाचकत्वम् इति तु न क्वापि दृश्यते। भाष्ये[५] यद्यपि 'असंख्यां संख्ये' ति उक्तम्, तेन नैते शब्दाः संख्यावाचिनः, एवं कैयटेनापि[६] 'बहुपूगणसङ्घस्य तिथुक' (५।२।५२) वतोसिथुक्' (५।२।५३) इत्यादिभ्याम् अस्य शब्दस्य संख्याकार्यं ज्ञापितम्। अत एकादिवन्न नियतसंख्यावाचित्वं बह्वादिशब्दानाम्, तथापि 'बहुगणवतुडतिसंख्या' (१।१।२३) इति सूत्रभाष्य[७] एव 'संख्यायते इत्यन्वर्थं संज्ञया, एकादीनामपि संख्यासंज्ञा। संख्येति महासंज्ञाकरणात्' इत्युक्तम्। तेन बह्वादिशब्दानामपि संख्यावाचित्वं स्वीकृतमेव। 'बहुव्रीहौ संख्येये डज्बहुगणात् (५।४।७३) इति सूत्रे संख्या वाचिनो बहुगणशब्दस्य संख्यवाचित्वं डच् प्रत्ययो नेति निषेधेन बहुगणशब्दस्य संख्यावाचित्वं सूत्रकारेण स्वयमेव स्वीकृतम्। 'ज्ञापकात् सिद्धम्' इति 'बहुगण-०' (१।१।२३) सूत्रस्थभाष्यवार्त्तिकेनाप्ययमेवायाति।[८] 'बह्वादिभ्यश्च' (४।१।४५) इति सूत्रे भट्टोजिदीक्षितेन बहुशब्दं गुणवाचिनं मत्वा 'वोतोगुणवचनात्' (४।१

---

१. लघुशब्देन्दुशेखरस्य 'बहुगण०' इति सूत्रे २४४-२४५ तम पृष्ठयोः।

२. भैरव्याः 'बहुगण०' इति सूत्रे ५०२-५०३ तम पृष्ठयोः।

३. भावप्रकाशस्य 'बहुगण०' इति सूत्रे ५०२-५०३ तम पृष्ठयोः।

४. मुग्धबोधे 'संख्यावडुत्यतु—बहुगणानेपि' (१०२) इति सूत्रे १०० तमे पृष्ठे।

५. भाष्यस्य 'बहुगण०' इति सूत्रे १९५ तमे पृष्ठे।

६. 'बहुगण०' सूत्रस्थ प्रदीपे 'ज्ञापकात् सिद्धम्' इति भाष्यवार्त्तिकव्याख्याप्रसङ्गे १९८ तमे पृष्ठे।

७. 'बहुगण०' इति सूत्रे भाष्यस्य १९६ तमे पृष्ठे।

८. 'बहुगण०' इति सूत्रे भाष्यस्य १९८ तमे पृष्ठे।

४४ ) इत्यनेन ङीष् स्यात् 'वह्वादिभ्यश्च' ( ४।१।४५ ) इति सूत्रे वहुग्रहणं व्यर्थमित्युक्तम्, रत्नकारादिना तु 'वहु'-शब्दं संख्यावाचिनं मत्वा तस्य गुणवचनत्वं निराकृत्य 'वह्वादिभ्यश्च ( ४।१।४५ ) इति सूत्रे वहुग्रहणस्य सार्थकत्वमुक्तम् ।

'वहुगण०' ( १।१।२३ ) इति सूत्रे 'वहु' शब्दस्य संख्याऽवाचकत्वम् 'वह्वादिभ्यश्च' ( ४।१।४५ ) इत्यस्मिन् सूत्रे च संख्यावाचकत्वमिति शब्दरत्नकारस्य इत्थं स्वस्मिन्नेव वचने विरोधो भवति ।

भट्टोजिदीक्षितमतेन तु न तथा, तत्र संख्याऽपि गुण एव । तस्माद् 'वोतोगुण०' ( ४।१।४४ ) इत्यनेन ङीपुक्तः ।

'असंख्यां संख्या' इति भाष्यं न दार्ढ्योक्तिः । अन्यथा 'वह्वादीनामग्रहणम्', 'ज्ञापकात् सिद्धम्' इत्यादिभाष्यवार्त्तिकस्योत्थानमप्यनर्थकं स्यात् । ज्ञापकेन सुतरामस्य संख्यावाचकत्वमुक्त्वा भाष्यकारेण 'वहुगण०' ( १।१।१३ ) इति सूत्रं प्रत्याख्यातम् । 'वहुषु वहुवचनम्' ( १।४।२१ ) इति सूत्रे भाष्ये[1] च यथा एकत्व-द्वित्व वाचि नियतसंख्यावाचिनोरेकत्वद्वित्वयोरेकवचनम्, द्विवचनम्, तथैव वहुत्वस्य विवक्षायां वहुवचनमुक्तम् । यदि वहुशब्दे संख्यात्व व्यवहारो न स्यात् तदाऽस्य वहुवचनसंज्ञाऽपि न स्यात् । तत्र वहुत्वसंख्यां वक्ति इति वहुवचनम् । अतएव 'वहवः' इति प्रयोगः सिद्ध्यति । 'वहुपूगणसङ्घस्य तिथुक्' ( ५।२।५२ ) इति सूत्रे 'वहुतिथ' प्रयोगदानेन चास्य संख्यावाचकत्वं सिद्ध्यति । एवं 'वह्वाल्पार्थाच्छस्कारकादन्यतरस्याम्' ( ५।४।४२ ), 'वहोर्नञ्वदुत्तरपदभूम्नि' ( ५।४।५२ ) इति सूत्रे च संख्यावाचिनाम्, भूर्यादिवाचिनां च 'वहु' शब्दानां निर्देशेन 'वहु' शब्दस्य संख्यावाचित्वमस्त्येवेति न शङ्कावसरः ।

## अनल्विधि विचारः

१—'स्थानिवदादेश०' इति सूत्रे 'स्थान्यवयवाल्वृत्तिधर्मनिमित्तके विधौ न स्थानिवत्' इति अनल्विधेः स्वरूपम् प्रौढमनोरमाऽनुसारेण ।

२—'स्थानिवदादेश०' इति सूत्रे 'स्थानिरूपो योऽल् तद्वृत्तिर्यो धर्मः

---

१. 'वहुषु वहुवचनम्' इति सूत्रस्थभाष्ये' नियमः प्रकृतेषुवा' इति वार्त्तिकव्याख्याप्रसङ्गे २६३ तमे पृष्ठे ।

तन्निमित्तके विधौ न स्थानिवत्' इति अनल्विधेः स्वरूपं हरिदीक्षिता नुसारेण ।

३—भट्टोजिदीक्षितगृहीतानल्विधेः पुष्टिविषये वैयाकरणानां सम्मतिप्रदर्शनम् ।

४—अपाणिनीयव्याकरणे प्रकृतविषये प्रदर्शितविचारस्य प्रदर्शनम् ।

५—शब्दरत्नकारोक्त-पक्षस्य पुष्टिविषये विदुषां विचारप्रदर्शनम् ।

६—युक्तायुक्तत्वसमीक्षणम् ।

'स्थानिवदादेशोऽनल्विधौ' ( १।१।५६ ) इत्यत्र स्थानिना तुल्यं स्थानिवत् । न अल् विधिः = अनल्विधिः, तस्मिन् अनल्-विधावादेशः । भवतीति क्रियाऽध्याह्रियते । तेन 'स्थानिना तुल्यमादेशो भवति, अल्विधौ तु न भवति, इत्यर्थः सम्पद्यते ।

अत्र सूत्रे 'अनल् विधौ' इत्यत्र अलि 'विधिः = अल्विधिः, अला विधिः = अल्विधिः, अलाश्रयो विधिः = अल्विधिः ( इह उत्तरपदलोपीसमासः ), अलो विधिः = अल्विधिः, अलः परस्य विधिः = अल् विधि इत्यनेके पक्षाः सन्ति । तत्र सर्वेषु पक्षेष्वनल् विधौ इति प्रतिषेधः ।

[१]भट्टोजिदीक्षितमतेनाल्शब्दो नालरूपेण गृह्यते, अपि तु अवयवत्वेन गृह्यते । तेनास्य मतेन 'स्थान्यवयवालवृत्तिधर्मनिमित्तके विधौ न स्थानिवत्' इत्यनल्विधेरभिप्रायः ।

[२]रत्नकारमतेनावयवत्वोक्तेरुपलक्षणत्वेनाल्पदेन 'अल्'—रूपस्यापि ग्रहणम् । अतोऽस्यानुसारेण 'स्थानिरूपो योऽल् तद्वृत्तिर्यो धर्मस्तन्निमित्तके विधौ न स्थानिवत्' इत्यर्थः ।

तत्र दीक्षिततः पूर्ववर्ती काशिकारः[३], न्यासकारः,[४] पदमञ्जरीकारः,[५]

१. प्रौढमनोरमायाम् १५३ तमपृष्ठतः १५८ तम पृष्ठपर्यन्तम् ।
२. शब्दरत्ने १५३ तमे पृष्ठतः १५८ तम पृष्ठपर्य्यन्तम् ।
३. काशिकायाम् 'स्थानिवद्०' इति सूत्रे १८५—१८६ तमयोः पृष्ठयो :
४. न्यासे 'स्थानिवद्०' इति सूत्रे १८६ तमे पृष्ठे ।
५. पदमञ्जर्याम् 'स्थानिवद्०' इति सूत्रे १८५—१८६ तमयोः पृष्ठयोः ।

प्रक्रियाकौमुदीकारः,[1] रूपावतारकारः[2] प्रसादटीकाकारश्च[3] तमेव पक्षमुपस्थापितवन्तो यस्य दीक्षितेन चर्चा कृताऽनुमोदनं च तत्त्वबोधिनी[4]कारेण कृतमस्ति। सरस्वतीकण्ठाभरणे[5], प्रक्रियासर्वस्वे[6] च प्रतिपादिताल्विधिस्वरूपेणापि प्रौढमनोरमोक्तिरेव समर्थ्यते।

रत्नकारोक्तमतस्य मूलं भाष्ये[7] दृश्यते। यस्यानुमोदनं नागेशेन[8], भैरवीकारेण,[9] भावप्रकाशकारेण च[10] कृतम्।

उभयोर्व्याख्यानयोर्मध्ये रत्नकारोक्त पक्ष एव युक्तियुक्तः प्रतिभाति। भट्टोजिदीक्षितमतोक्ताल्त्वस्वीकारे 'भोभगो०' (८।३।१७) इति सूत्रे 'देवाः सन्ति' इति प्रयोगसिद्ध्यर्थम् अश्ग्रहणमावश्यकं भवति। अत्र विसर्गस्थानीयरुत्वस्य स्थानिवद् भावमादाय यत्वापत्तिः स्यात्। अतएव कौमुद्याम् 'न ह्यल्विधिः' इति रुत्वस्य स्थानिवद् भावविषये प्रतिपाद्य अश्ग्रहणेन यत्वं निराकृतमनेन। किन्तु रत्नकारादिमतेन तु विसर्गस्य स्थानित्वम् 'रुत्वे' नास्ति, किन्तु रेफ एव, तेनात्र अश्ग्रहणमनर्थकम्। अतएव 'हलि सर्वेषाम्' (८।३।२२) इत्यत्रानुवर्तनार्थमश्ग्रहणमिति भाष्यं संगच्छते। यद्यपि लक्ष्ये उभयपक्षे न दोषः,

---

१. प्रक्रियाकौमुद्याम् 'स्थानिवद्०' इति सूत्रे ४२ तमे पृष्ठे।
२. रूपावतारे 'स्थानिवद्०' इति सूत्रे ३४ तमे पृष्ठे।
३. प्रसादे 'स्थानिवद्०' इति सूत्रे ४२–४३ तमयोः पृष्ठयोः।
४. तत्त्वबोधिन्याम् 'स्थानिवद्०' इति सूत्रे षोडशे पृष्ठे।
५. सरस्वती कण्ठाभरणे 'स्थानिवदादेशो०' (१।३।४३) इति सूत्रे ७३ तमे पृष्ठे।
६. प्रक्रियासर्वस्वस्य 'स्थानिवद्०' इति सूत्रे ४३ तमे पृष्ठे।
७. भाष्ये 'स्थानिवद्०' इति सूत्रे २८८ तम पृष्ठतः २९१ तम पृष्ठपर्य्यन्तम्।
८. लघुशब्देन्दुशेखरे 'स्थानिवद्०' इति सूत्रे ६८ पृष्ठतः ७८ पृष्ठपर्यन्तम्।
९. भैरव्याम् 'स्थानिवद्०' इति सूत्रे १५३ पृष्ठतः १५८ पृष्ठपर्य्यन्तम्।
१०. भावप्रकाशे 'स्थानिवद्०' इति सूति सूत्रे १५३ तम पृष्ठतः १५८ तम पृष्ठपर्य्यन्तम्।

तथापि पाणिनीयव्याकरणेप्रामाणिकत्वे भाष्यव्याख्यानस्यैव ज्यायस्त्वं विद्वद्भिः स्वीक्रियत इति ।

## अर्थवत् स्वरूपे विमर्शः

१—सूत्रार्थः ।

२—भट्टोजिदीक्षितोक्तमतेन 'अर्थवत्०' इति सूत्रे वृत्तिमत्वमर्थवत्वम् । 'कृत्तद्धित०' सूत्रे 'एकार्थी०' इति ।

३—शब्दरत्नकारमतेन 'अर्थवत्०' 'कृत्तद्धित०' इति सूत्रे च 'एतत्-संज्ञाफल०' इति ।

४—मनोरमोक्तस्य मूलम्, वैयाकरणानां सम्मतिप्रदर्शनं च ।

५—अपाणिनीयव्याकरणे 'अर्थवत्०' इत्यस्य स्वरूपप्रदर्शनम् ।

६—रत्नकारोक्तस्य बीजम्, वैयाकरणानां सम्मतिदानञ्च ।

७—समीक्षणम् ।

'कृत्तद्धित०' ( १।२।४६ ) इति सूत्रे समासग्रहणकृतनियमेन धातुप्रत्यय-प्रत्ययान्ततदादिभिन्नं यत्र पूर्वभागपदघटितसंघातातिरिक्तार्थवच्छब्दस्वरूपं प्रातिपदिकमित्येतावान् अर्थवत्सूत्रार्थः ।

अनेन सूत्रेण अर्थवच्छब्दस्वरूपस्य प्रातिपदिकसंज्ञा विधीयते । कृत्तद्धितसूत्रेऽपि अस्मात् सूत्राद् अर्थवच्छब्दमनुवर्त्य अर्थवत्समुदायानामेव प्रातिपदिकसंज्ञा विधीयते । अतः कोऽसावर्थवत्पदार्थं इत्यन्वेष्टव्यम् ।

तत्र भट्टोजिदीक्षितेन[1] 'अर्थवत्०' ( १।१।४५ ) इति सूत्रे वृत्तिमत्वमर्थवत्त्वम् 'कृत्तद्धित०' ( १।२।४६ ) इति सूत्रे च लौकिकप्रयोगे प्रसिद्धत्वमर्थवत्त्वम् इति स्वीकृम् ।

रत्नकारेण[2] तूभयसूत्रे विभिन्नार्थवत्वद्वयस्वीकारे गौरवं दृष्ट्वा उभयसूत्रे एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषकबोधजनकत्व-रूपाभिप्रायकमर्थवत्त्वमाभणितम् ।

---

१. प्रौढमनोरमायाः ३२५ तम पृष्ठतः ३२७ तम पृष्ठपर्य्यन्तम् ।

२. शब्दरत्ने 'अर्थवत्०' सूत्रे ३५४ तम पृष्ठपर्य्यन्तम् ।

दीक्षितोक्त-वृत्तिमत्व-रूपार्थवत्त्वस्य मूलम् 'सुप्तिङन्तं पदम्' ( १।४।१४ ) इति सूत्रे भाष्ये[1] 'कृत्तद्धित०' ( १।२।४६ ) इति सूत्रे च 'अन्तग्रहणं न कर्त्तव्यम्' इत्युक्त्या 'अर्थवत्०' ( १।२।४५ ) इति सूत्रे वृत्तिमत्वरूपार्थवत्त्वमेव ध्वनितम्। सा वृत्तिर्द्विधा-शक्तिलक्षणान्यतररूपा। अर्थशब्दस्य शब्दस्वरूपे विशेषणत्वम्। अर्थशब्दश्चात्राभिधेयपरः। तेन जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, द्रव्यशब्दाः, प्रातिपदिसंज्ञका भवन्ति।

काशिकाकारेण,[2] न्यासकारेण[3], पदमञ्जरीकारेण,[4] प्रसादकारेण[5], रूपावतारकारेण[6], अभिधेयवचनमर्थवच्छब्दार्थक्तः। तेन वृत्तिमत्वरूपमेवोक्तम्। अयमेव प्रक्रियासर्वस्वकारस्यापि[7] पक्षः।

अपाणिनीये सारस्वतव्याकरणे[8] 'अर्थवतः। इति सूत्रस्य स्थाने 'अविभक्तिनाम' इति सूत्रे शक्तिमतः सार्थकशब्दानां नामसंज्ञाविधानेन, सरस्वतीकण्ठाभरणस्य टीकाकारेण श्री नारायणशास्त्रिणा[9] चाभिधेयवचनस्य नामसंज्ञा विधानेन वृत्तिमत्त्वरूपमेवायाति।

'सुप्तिङन्त०' ( १।४।१४ ) इति सूत्रस्थ कैयटोक्त्या,[10] नागेशोक्त्या,[11] भैरवीकारोक्त्या[12] च 'एतत्संज्ञाफलभूत०' इत्यर्थवत् स्वरूपस्य ग्रहणम्।

---

१. 'सुप्तिङ०न्तं पदम्' इति सूत्रे भाष्ये २३१ तमे पृष्ठे।
२. काशिकायाम् 'अर्थवत्०' सूत्रे ३३७ तमे पृष्ठे।
३. न्यासे 'अर्थवत्०' सूत्रे ३३७–३३८ तमयोः पृष्टयोः।
४. पदमञ्जर्याम् 'अर्थवत्०' सूत्रे ३३७–३३८ तमयोः पृष्ठयोः।
५. प्रक्रियाकौमुद्याः प्रसादटीकायाम् 'अर्थवत्०' इति सूत्रे ११६ तमे पृष्ठे।
६. रूपावतारे 'अर्थवत्० इति सूत्रे त्रयो विंशे पृष्ठे।
७. प्रक्रियासर्वस्वस्य 'अर्थवत्०' इति सूत्रे सप्तदशे पृष्ठे।
८. सारस्वते 'अविभक्तिनाम' इति सूत्रे ६८–६९ तमयोः पृष्ठयोः।
९. सरस्वतीकण्ठाभरणस्य टीकायाम् 'अर्थवत्०' इति सुत्रे ७तमे पृष्ठे।
१०. 'सुप्तिङ०न्तम्' इति सूत्रे कैयटे २३१ तमे पृष्ठे।
११. लघुशब्देन्दुशेखरे 'अर्थवत्०' इति सूत्रे १६४ तमे पृष्ठे।
१२. भैरव्यां 'अर्थवत्०' इति सूत्रे ३५५–३५६ तमयोः पृष्ठयोः।

अत्र मतद्वये भट्टोजिदीक्षितमतमेव युक्तियुक्तम् । यद्यप्यस्मिन् मते उभयसूत्रे विभिन्नार्थवत्त्वं स्वीकर्तुं भवति । एवम् 'अर्थवत्०' ( १।२।४५ ) इति सूत्रतः 'कृत्तद्धित०' ( १।२।४६ ) सूत्रेऽर्थवदनुवृत्तावेकत्रान्यः, अपरत्र चान्य इत्यनुचितं प्रतिभाति, तथापि भाष्यादिव्याख्यानेन, अर्थाधिकारं परित्यज्य शब्दाधिकारं चाङ्गीकृत्य विभिन्नार्थवत्त्वमेव शोभनम् । अन्यथा कृत्तद्धित०' ( १।२।४६ ) इति सूत्रेऽन्तग्रहणं कर्तव्यं स्यात् । तच्च सूत्रकारेण नापादितम् । भाष्यकारेणाप्यत्र सूत्रेऽर्थवदनुवृत्यैव तदर्थलाभेऽन्तग्रहणस्यानावश्यकत्वं प्रदर्शितम् ।

एतदतिरिक्तम्, 'प्रातिपदिकार्थ०' ( २।३।४६ ) इति सूत्रेऽप्यर्थशब्दोऽभिधेयपर एव । तथैव 'पूर्वसदृशसमोनार्थ०' सूत्रे च सर्वत्रार्थशब्दोऽभिधेयपरक एव । यद्यपि 'तृतीया तत्कृतार्थ०' ( २।१।३० ) इति सूत्रेऽर्थशब्दः स्वरूपपरकस्तथापि तत्र स्वरूपपरकत्व-लाभे भाष्यादिव्याख्यानमेव शरणम् । अन्यथा 'धान्यार्थः' इत्यत्र समासो न स्यात् । अतो मनोरमोक्तिरेव शोभना प्रतिभातीति ।

**अर्थवद्ग्रहणविचारः**

१—'अर्थवत्०' इति सूत्रार्थप्रदर्शनम् ।

२—भट्टोजिदीक्षितमतेन अर्थवद्ग्रहणफलम्, धनम्, वनम् इत्यत्र प्रतिवर्णस्य प्रातिपदिकसंज्ञाभावः ।

३—शब्दरत्नकारमतेन दशदाडिमानिषडपूपासमुदायस्य प्रातिपदिकसंज्ञापत्तिवारणमर्थवद्ग्रहणस्य फलम् ।

४—धनम्, वनमित्यत्र प्रातिपदिकत्वापत्तिरिति—अर्थवद्ग्रहणस्य फलविषये वैयाकरणानां सम्मति प्रदर्शनम् ।

५—अपाणिनीये व्याकरणेऽत्र विषये विचारदानम् ।

६—रत्नकारोक्त प्रदर्शितफलविषये शब्दशास्त्रज्ञानां विचारः ।

७—अपाणिनीयव्याकरणसम्मतिप्रदर्शनपूर्वकं समीक्षणम् ।

अर्थवद् = अर्थवान्, अधातुः = धातुभिन्नम्, अप्रत्यय इत्यत्र प्रत्ययशब्दस्य पर्युदासेन 'येन विधिस्तदन्तस्य' ( १।१।७२ ) इति पदोपस्थितेः, प्रत्यय भिन्नम्, प्रत्ययान्ततदादिभिन्नम्, शब्दस्वरूपमित्यध्याहार्यम् । प्रातिपदिकमिति संज्ञाविशेष प्रदर्शनम् ।

अत्र सूत्रे उपात्तस्य 'अर्थवत्' इति शब्दस्य किं प्रयोजनमिति विचारे अर्थवच्छब्दस्वरूपं प्रातिपदिकमित्यर्थं विहाय सामान्येन अर्थवद्ग्रहणाभावे 'धातुभिन्नं प्रत्ययभिन्नं प्रत्ययान्ततदादिभिन्नशब्दस्वरूपम् 'प्रातिपदिकम्' इत्यर्थः स्यात्, तदा निरर्थकानां धनवनादिशब्दस्थप्रतिवर्णानां प्रातिपदिकसंज्ञायां सत्याम् 'हुम', 'फट्' इत्यादिशब्दानामिव लिङ्गसंख्यानन्वयेऽप्यौत्सर्गिक एकवचने सुबुत्पत्तिः स्यात्। 'अर्थवद्ग्रहणे०' इति परिभाषाया विशिष्टरूपोपादाने एव प्रवृत्तिः स्यात्। अतस्तया परिभाषयाऽत्र सुबुत्पत्तेर्वारणं न स्यादिति भट्टोजिदीक्षितस्य[1] पक्षः।

शब्दरत्नकारमतेन[2] 'हुम्', 'फट्' इत्यादौ यथौत्सर्गिकैकवचनप्रवृत्तिर्भवति, तथा 'धनम्', 'वनम्', इत्यादौ प्रतिवर्णमौत्सर्गिकैकवचनप्रवृत्तेरवसरो नास्ति। 'हुम्', 'फट्' इत्यादावौत्सर्गिकैकवचनाभावे 'अव्यादाप्सुपः (२।४।८२) इति सूत्रं व्यर्थंस्यात् 'धनम्', 'वनम्' इत्यादौ प्रतिवर्णमौत्सर्गिकैकवचनाभावे तु कस्यचित् सूत्रस्य वैयर्थ्यशङ्कैव नोदेतीति 'धनम्', 'वनम्' इत्यादि नास्ति अर्थवतः फलम्। अतः सूत्रेऽर्थवद्भावे दशदाडिमानिषडपूपाः' इति निरर्थकसमुदायस्य प्रातिपदिकसंज्ञायां सत्यां 'सुपो 'धातु०' (२।४।७१) इत्यनेन विभक्तेर्लुङ् माभूदिति सूत्रेऽर्थवद् ग्रहणमस्ति। इत्थं 'दशदाडिमानिषडपूपाः' इति निरर्थकसमुदायोऽर्थवतः फलमिति।

भट्टोजिदीक्षितद्वारा प्रदर्शितोदाहरणं भष्ये[3], काशिकायाम्[4], न्यासे[5],

---

१. प्रौढमनोरमायाम् 'अर्थवत्०' इति सूत्रे ३३२ तमपृष्ठतः ३३७ तमपृष्ठपर्य्यन्तम्।

२. शब्दरत्ने 'अर्थवत्०' इति सूत्रे ३३४ तमपृष्ठतः ३३५ तमपृष्ठपर्य्यन्तम्।

३. भाष्ये 'अर्थवत्० इति सूत्रे ४२ तमे पृष्ठे 'अर्थवदिति व्यपदेशाय वर्णानां माभूदिति किं च स्यात् वनम्, धनमिति नलोपः प्रातिपदिकान्त इति नलोपः प्रसज्येत्।

४. काशिकायाम् 'अर्थवत्०' इति सूत्रे ३३८ तमे पृष्ठे।

५. न्यासे 'अर्थवत्०' इतिसूत्रे ३३९ तमे पृष्ठे।

पदमञ्जर्याम्[१], प्रदीपे[२], प्रक्रियाकौमुद्याः प्रसादटीकायाम्,[३] सरस्वतीकण्ठाभरणस्य नारायणशास्त्रिकृतटीकायां[४] च दृश्यते ।

रत्नकारप्रदर्शितं मतं भाष्ये[५], कैयटे[६], शब्देन्दुशेखरे[७], भैरव्याम्[८], भावप्रकाशे[९] च दृश्यते ।

समीक्षात्मकदृष्ट्या विचारे रत्नकारोक्तमेव साधु प्रतिभाति । धन-वनादौ तु प्रतिवर्णस्य प्रातिपदिकसंज्ञा न स्यात्, यतो हि 'हयवरट्' इति सूत्रे भाष्ये[१०] 'अर्थवन्तो वर्णाः' इति पक्षे प्रातिपदिकसंज्ञायां सुबुत्पत्तिमाशङ्क्य' सङ्घातस्यैकार्थात् सुबभावो वर्णात् । संघातस्यैकत्वमर्थः, तेन वर्णात्सुबुत्पत्तिर्न भविष्यति । इति प्रतिपादितेन । प्रदीपेऽपि[११] 'पदसंज्ञा तु समुदायस्यैव भवति, न प्रत्येकम्, इति

---

१. पदञ्जर्याम् 'अर्थवत्०' इति सूत्रे ३३८-३३९ तमयोः पृष्ठयोः ।
२. प्रदीपे 'अर्थवत्० इतिसूत्रे ४२ तमे पृष्ठे 'वनमित्यत्र·········प्रसङ्गः ।'
३. प्रसादटीकायाम् 'अर्थवत्०' इति सूत्रे ११७ तममे पृष्ठे ।
४. सरस्वती कण्ठाभरणस्य टीकायाम् 'अर्थवतः' इति सूत्रे ५-६ तमपृष्ठयोः ।
५. भाष्ये 'अर्थवत्०' इति सूत्रे ४३ तमे पृष्ठे ।
६. प्रदीपे 'अर्थवत्०' इति सूत्रे ४२ तमे पृष्ठे 'अर्थवदव्यपदेशाय' वार्त्तिकव्याख्याप्रसङ्गे ।
७. लघुशब्देन्दुशेखरे 'अर्थवत्०' इति सूत्रे १६५–१६६ तमयोः पृष्ठयोः 'दशदाडिमानि षडपूपाः' इत्यादिनिरर्थकपदसमुदायव्यावृत्ति रर्थवद्ग्रहणस्य फलम् ।
८. भैरव्याम् 'अर्थवत्०' इति सूत्रे ३३६ तमे पृष्ठे 'दिगर्थस्तु वस्तुतस्त्वित्यादिना समाहित एव ।'
९. भावप्रकाशे 'अर्थवत्०' इति सूत्रे ३३६ तमे पृष्ठे दिगितिप्रतीकमादाय 'तक्ष्यंस्तु सिद्धान्ते त्वित्यादिना प्रागुक्त एव ।
१०. 'हयवरट्' इति सूत्रे भाष्ये ९३ तमे पृष्ठे 'सङ्घातस्य········सुबुत्पत्तिर्न ।'
११. प्रदीपे 'अर्थवत्०' इति सूत्रे ९३ तमे पृष्ठे 'पदसंज्ञा तु समुदायस्यैव भवति न प्रत्येकम् ।'

समाहितेन । 'यस्मात् प्रत्ययविधि०' ( १।४।१३ ) इत्यस्यानुवर्तनेन च न प्रतिवर्णशङ्कावसरः ।

यद्यपि 'दशदाडिमानि षडपूपाः' इति समुदायस्यापि प्रातिपदिकत्वं नेति वक्तुं शक्यते, यतो ह्यनेन सूत्रेण सविभक्त्यन्तस्य प्रातिपदिकसंज्ञा न भवति, किन्तु 'कृत्तद्धित०' ( १।२।४६ ) इति सूत्रेण । तेनापि समासे एव । अन्यथा 'रामः' इत्यत्रापि प्रातिपदिकत्वात् सुलोपापत्तिः, इति चेत् सत्यम्, तथापि 'रामः' इत्यादौ प्रत्ययान्त तदादित्वेन न तथा, 'दशदाडिमानि षडपूपाः' समुदाये प्रतिपदस्य प्रत्ययान्ततदादित्वेऽपि समुदाये तदभावेन प्रत्ययान्ततदादित्वाभावमादाय दोषस्तदवस्थ एव ।

वस्तुतः 'हयवरट्'-सूत्रभाष्यानुरोधेन यथा धनवनादौ प्रतिवर्णस्य संज्ञाकरणमनपेक्षितम्, तथैव 'प्रयुक्तानामिदमन्वाख्यानम्'[१] तच्च साधुशब्दानामेव । तेन 'दशदाडिमानि षडपूपाः' 'टस्'-आदिध्वनिगत् शब्दानां चानभिधानेन प्रातिपदिकसंज्ञाया वारणं स्यात् । अर्थवद्ग्रहणाभावे 'अनर्थकाः वर्णाः', 'सार्थकाः वर्णाः' इत्युभयपक्षे 'निपातस्यानर्थकस्य प्रातिपदिकत्वम्' इति वार्त्तिकस्यापि नावश्यकतेति लाघवमपि भवति । अत एव सारस्वते अविभक्तिनाम्' इति सूत्रम् । तत्र सारस्वतव्याकरणस्य चन्द्रकीर्त्तिटीकायां[२] तु 'टसादि' ध्वनिगत् निरर्थकवर्णानां प्रातिपदिकसंज्ञावारणार्थम् अर्थवद्ग्रहणं प्रदर्शितम् । एवमेव पाणिनीयव्याकरणेऽपि संस्कृतेतरप्राकृतादिभाषान्तरस्थ निरर्थकशब्दानां प्रातिपदिकसंज्ञापत्तिरिति प्रस्तोतव्यमासीत् । पूर्वयुक्त्या एतादृशशब्दानामपि संज्ञाकार्यवारणे फलं तु चिन्त्यमेव ।

---

## समासग्रहणे विचारः

१—सूत्रार्थ निदर्शनम् ।

---

१. ष्णान्ताषट् ( १।१।२४ ) इतिसूत्रस्थस्य यथा लक्षणामप्रयुक्ते इति वचनस्यव्याख्याप्रसङ्गे प्रदीपे २०७ तमे पृष्ठे ।

२. सारस्वतव्याकरणस्य चन्द्रकीर्त्तिटीकायाम् 'अविभक्तिनाम्' (२) इति सूत्रे ६८-६९ तमपृष्ठयोः ।

२—दीक्षितमतेन 'यत्रसंघाते०' इति नियमाकारः, 'कृतद्धित०' सूत्रे समासग्रहणस्य फलम् ।

३—शब्दरत्ने 'कृतद्धित०' इति सूत्रे समासग्रहणस्य 'अर्थवत् पूर्वावयक०'-नियमाकारः फलम् ।

४—'यत्र संघाते०' इति नियमाकारे वैयाकरणानां सम्मति दानम् ।

५—'अर्थवत्पूर्वावयवक०'-नियमाकारे शब्दशास्त्रज्ञानां भावप्रदर्शनम् ।

६—युक्तायुक्तत्वसमीक्षणाम् ।

'कृतद्धितसमासाश्च' ( १।२।४६ ) इति सूत्रे कृत् = कृत्प्रत्ययः, तद्धितः = तद्धितप्रत्ययः, समासः, चकारवलेन ( १।२।४५ ) इति पर्वसूत्रतः प्रातिपदिकसंज्ञायाः ग्रहणम् । 'अर्थवद्०' ( १।२।४५ ) इति पूर्ववर्तिनः सूत्रात् 'अर्थवत्' इतीदं पदमप्यनुवर्तते । केवलानां कृत्-तद्धित्प्रत्ययानां निरर्थकत्वेन सप्रकृतिककृत्प्रत्ययस्य, तद्धित्प्रत्ययस्य च ग्रहणम् । तेन कृतद्धितान्तौ समासाश्च अर्थवत्त्वे सति प्रातिपदिकसंज्ञां लभन्त इति संपिण्डितोऽर्थो जायते ।

'अर्थवत्०' ( १।२।४५ ) इति सूत्रे 'अप्रत्ययः' इति निषेधेन कृतद्धितान्तानां प्रातिपदिकसंज्ञा न स्यात्, तदर्थं 'कृतद्धितश्च' इति सूत्र्यताम् ? राजन् + ङ०स् + पुरुष-सु इत्यवस्थायां समुदायस्य प्रत्ययान्ततदादित्वाभावेन 'अर्थवत्०' ( १।२ ४५ ) इति सूत्रेणैवास्य प्रातिपदिकसंज्ञासिद्धौ, सूत्रे समासग्रहणं व्यर्थं स्यात्, इति हृदि निधाय भट्टोजिदीक्षितेन समासग्रहणं नियमार्थमुक्तम् । अस्य मतेन नियमस्वरूपं च—'यत्र संघाते पूर्वो भागः पदं तस्य यदि प्रातिपदिकसंज्ञा तर्हि समासस्यैव' इति । तेन 'राज्ञः पुरुषः' इत्यत्र समासाभावपक्षे वाक्यस्य प्रातिपदिकसंज्ञा न भवति । अस्य नियमस्य 'कृतद्धित०' ( १।२।४६ ) इति सूत्रे विधिमुखेन प्रवृत्तिर्भवति । अतएव 'राज्ञः पुरुषः' 'राजपुरुषः' इति समासस्थले प्रकृतिसूत्रेण प्रातिपदिकसंज्ञा सिद्धयति । 'अर्थवत्०' ( १।२।४५ ) इति सूत्रे तु निषेधमुखेन नियमस्य प्रवृत्तिः । अतोऽत्र सूत्रे समासग्रहणस्य चारितार्थ्यं जायते । ततश्च 'अर्थवत्०' ( १।२।४५ ) इति सूत्रस्य धातुभिन्नं प्रत्ययभिन्नं प्रत्ययान्ततदादिभिन्नं यत् पूर्वभागपदघटितसंघातातिरिक्तार्थवद्च्छब्दस्वरूपं तत् प्रातिपदिकसंज्ञं स्यादित्यर्थो जायते । अयमेव मनोरमाकाराशयः[१] ।

१. प्रौढमनोरमायाम् 'कृतद्धित०' इति सूत्रे ३५६-३६४ तमपृष्ठपर्यन्तम् ।

किन्तु भट्टोजिदीक्षितमतेन 'गवित्ययमाह' इत्यत्र 'गो' इत्यस्य सुबन्तत्वाभावेनापदत्वे नियमाप्राप्तेः प्रातिपदिकत्वाप्राप्तिः। एवं 'वृषण् वसु' इत्यत्र 'वृषण्वस्वश्वयोः' इति वार्तिकेन पूर्वभागेन भत्वेन तत् साजात्येन पूर्वो भागः पदमित्यर्थलाभासम्भवश्च। 'गवित्ययमाह' इत्यत्र अनितिपरस्यापि प्रयोगसत्वेन भाष्ये[1]—अर्थवत् समुदायानां समासग्रहणं नियमार्थमुक्तम्। तच्च स्वातन्त्र्येण प्रयोगार्हं एव गृह्यते। अत उक्तस्थले प्रातिपदिकसंज्ञा संपाद्यते। तेन 'अर्थवत्-पूर्वावयवकः, अर्थवदुत्तरावयवकः अर्थवांश्चासौ समुदायस्तस्य चेत् प्रातिपदिकसंज्ञा तर्हि समास एव' इति रत्नकारेण[2] निगदितम्।

दीक्षितेन यद्नियमस्वरूपमङ्गीतकृतं तत् पदमञ्जरीकारेण[3] पूर्वमेव प्रतिपादितम्। एवं प्रौढमनोरमाकारतः परवर्तिना[4] तत्वबोधिनीकारेणापि स्वीकृतः।

किन्तु भाष्यकार[5], काशिकाकार[6], न्यासकार[7]-रूपावतारकार[8]-प्रसादटीकाकार[9]प्रभृतिरत्नकारतोदीक्षिततश्च पूर्ववर्तिभिराचार्यैस्तथा शब्देन्दुशेखरकार[10] भैरवीकार[11]-भावप्रकाशकार[12]प्रभृतिपरवर्तिविद्वद्भिश्चैष विपरीतपक्ष एवोपस्थापितः।

---

१. भाष्येऽर्थवत् सूत्रे ४५ तमे पृष्ठे।
२. शब्दरत्ने 'कृतद्धित०' इति सूत्रे ३५६-३६४ तमपृष्ठपर्य्यन्तम्।
३. पदमञ्जर्याम् 'कृतद्धित०' इति सूत्रे ३४४-३४५ तमयोः पृष्ठयोः।
४. तत्वबोधिन्याम् 'कृतद्धित०' इति सूत्रे ४८ तमे पृष्ठे।
५. भाष्ये 'कृतद्धित०' सूत्रे ५२ तमे पृष्ठे।
६. काशिकायाम् 'कृतद्धित०' इति सूत्रे ४४४ तमे पृष्ठे।
७. न्यासे 'कृतद्धित०' इति सूत्रे ३४४—३४५ तमयोः पृष्ठयोः।
८. रूपावतारे 'कृतद्धित०' इति सूत्रे १४५ तमे पृष्ठे।
९. प्रसादटीकायाम् कृतद्धित०' इति सूत्रे २३९ तमे पृष्ठे।
१०. लघुशब्देन्दुशेखरे 'कृतद्धित०' इति सूत्रे १६६ तमपृष्ठतः १७० तमपृष्ठपर्य्यन्तम्।
११. भैरव्याम् ,कृतद्धित०' इति सूत्रे ३५६ तमपृष्ठतः ३६४ तमपृष्ठपर्यन्तम्।
१२. भावप्रकाशे 'कृतद्धित०' इति सूत्रे ३५६ तमपृष्ठतः ३६४ तमपृष्ठपर्यन्तम्।

अत्र मतद्वये भाष्यादिसम्मतेन रत्नकारोक्तमेव साधु। यद्यपि 'अथर्वत्समुदायानाम्' इति नियमस्वरूपस्वीकारे 'सरूप०' (१।२।६४) इति सूत्रस्थस्य सुबन्तानाम्० इति प्रदर्शितनियमस्य विरोधो भवति। किन्तु तत्रापि भेदसंसर्गद्वारकार्थवन्तः सुबन्ता एव गृह्यन्ते नानर्थकाः। तेन सुबन्तानामित्यस्यापि अर्थवत्समुदायानामेवान्तर्भावः कैयटेनाप्येतदेव[1] स्पष्टीकृतमस्ति। यद्यपि यथा 'राजन्+ङस्' इत्यत्र 'पुरुष+सु' इत्यत्र च पृथक् पृथक् प्रत्ययान्ततदादित्वम् तथैव समुदिते 'राजन्+ङस्+पुरुष+सु' इत्यत्रापि। एकस्मिन् क्षत्रिये क्षत्रियव्यवहारवत् समुदितेऽपि क्षत्रियव्यवहारस्तद्वत् प्रत्ययान्ततदादित्वेन भवितव्यम्। एवमेव 'राजन्+ङस्+पुरुष+सु' इत्यत्र प्रातिपदिकत्वलाभाय कृतद्धितादिवत् समासग्रहणमपि विध्यर्थमेवास्तु इत्यपि वक्तुं शक्यते। किन्तु 'राजन्+ङस्, पुरुष+सु' इत्यवस्थायां ङस्—प्रत्ययः सु—प्रत्ययश्च सहैव नोपस्थितौ येन प्रत्ययान्ततदादित्वं भवेत्। अतो नियमस्वीकार एवौचित्यमावहति। यद्यपि सरस्वती कण्ठाभरणस्यटीकाकारेण श्रीनारायणशास्त्रिणा[2] प्रतिप्रसवार्थमिदमित्युक्तम्, किन्तु तस्य मतेन वाक्यस्यापि प्रातिपदिकत्वापत्तिः स्यात्।

यद्यपि 'अर्थवदधातुरसमासेऽप्रत्ययः प्रातिपदिकम्' इत्यस्य धातुभिन्नं समासातिरिक्तस्थले प्रत्ययभिन्नं प्रत्ययान्ततदादिभिन्नम् अर्थवच्छब्दस्वरूपं प्रातिपदिकम् इत्यर्थेऽपि दोषाभावः, तथापि प्रत्यय विशिष्टानां शब्दानां कृते कृतद्धितसूत्रकरणेन तत्रैव प्रत्ययविशिष्टस्य समासस्थलस्य विधानस्यौचित्येन सूत्रकारेण च 'कृतद्धित०' (१।२।४६) इति सूत्र एव समासग्रहणकरणेन तत्रैव समासग्रहणनियमस्य सापेक्षत्वम्। अर्थवत्सूत्रे तथाकरणं तु शाब्दिकानां परम्परा-विरुद्धम्।

## भूवादिग्रहणविचारः

१—सूत्रार्थः।

२—भूवादयो धातवः इत्यत्र भूवादिग्रहणेन हिरुक्, पृथक्-प्रभृतिक्रियावाचकाव्ययानां धातुत्वाभावः, भट्टोजिदीक्षितमतेन।

---

१. सरूपसूत्रे ८३ तमे पृष्ठे कैयटेनापि तथैव प्रतिपादितम्।

२. सरस्वती कण्ठाभरणे 'कृतद्धित०' ष्फङ्याद्यू ङः। इति सूत्रे षष्ठे पृष्ठे।

३—शब्दरत्नकारमतेन आणवयति, वट्टयति, इत्यपभ्रंशशब्दस्य धातुत्वाभावो भूवादिग्रहणफलम् ।

४—हिरूक्-पृथक् इति फलमादाय वैयाकरणानां सम्मतिप्रदर्शनम् ।

५—आणवयति, वट्टयति इत्युदाहरणयोर्वैयाकरणानां सम्मतिप्रदर्शनम् ।

६—अपाणिनीयवैयाकरणानामस्मिन् विषये विचारदानम् ।

७—समीक्षणम् ।

८—वस्तुत उक्त्या स्वमतदानम् ।

क्रियावाचकत्वे सति भूवादिगणपठितत्वं धातुत्वमिति 'भूवादयो धातवः' ( १।३।१ ) इति सूत्रस्य परिष्कृतार्थः ।

तत्र सूत्रे प्रथमोपात्तभूवादिग्रहणं किमर्थम् ? यतो हि क्रियावाचकत्वरूपार्थंकरणेनैव धातूनां संग्रहः स्यात् । गणनिर्देशार्थमिति स्वीकारे 'भ्वादयो धातवः' इति सूत्रस्वरूपेण भवितव्यम् इह मतमतान्तराणि प्रस्तुत्य परिक्षिष्यामहे ।

तत्र मनोरमाकारमतानुसारेण[1] भूवादिग्रहणाभावे क्रियावाचकत्वमात्रस्य धातुत्वस्वीकारे 'हिरूक्' 'पृथक्' इत्याद्यव्ययानां क्रियासमानाधिकरणत्वेन लिङ्गाद्यनन्वयित्वेन तदर्थस्य क्रियात्वेन धातुत्वापत्तिः । अव्ययेषु पाठसामर्थ्येन धातूत्वाभावस्तु न, अकजर्थं तत्र पाठस्य चारितार्थ्ये दोषस्तदवस्थ एव । किन्तु हिरूगादीनां क्रियाकाङ्क्षादर्शनेन क्रियावाचकत्वाभावेन तत्र न धातूत्वमिति वक्तुं शक्यते, अत एव 'शिश्ये' इति भावार्थतिङन्तस्य धातुत्वापत्तिः । सति धातुत्वे 'आदेच उपदेशेऽशिति' ( ६।१।४५ ) इत्यात्वापत्तिः । आत्वं ह्यनैमित्तिकं धातुत्वनिमित्तकं च । तस्मात् 'शिश्ये' इति भावार्थतिङन्तस्य धातुत्वापत्तिवारणाय भूवादिग्रहणमिति ।

शब्दरत्नकृता[2] तु 'शिश्ये' इत्यत्र प्रत्ययस्यैव धातुत्वापत्तिः । तिङन्तस्योपदेशाभावेन नात्वप्रसक्तिः । अशितिप्रसज्यप्रतिषेधेऽपि शित्परत्वयोग्यस्यैवात्वविधाने 'शिश्ये' इत्यादौ न दोषः । एवम् अन्यानभिहितक्रियावाचकत्वेन वा—

---

१. प्रौढमनोरमायाम् 'भूवादि०' इति सूत्रे ९० तमपृष्ठतः ९४ तमपृष्ठे ।

२. शब्दरत्ने 'भूवादि०' इति सूत्रे ९० तमपृष्ठतः ९५ तमपृष्ठे ।

सादृश्यस्य ग्रहणेन नेहापत्तिः। अत 'आणवयति (आज्ञापयति), वट्टयति (वर्तयति) इत्याद्यर्थकापभ्रंशानां धातुत्वे शास्त्र विषयतया साधुत्वापत्तिरिति भूवादिग्रहणस्य फलमुट्टङ्कितम्।

प्रदीप[1]कारेण 'हिरूक्', 'पृथक्' इत्याद्यव्ययानां कृते 'भूवादिपाठः' इति वार्त्तिकस्योत्थानेन, आणवयत्यादीनां च शिष्टप्रयोगाभावेन धातुत्वाभावेऽपि, अव्ययानां कृते समाधानादानेन क्रियावाचिनामव्ययानामेव भूवादिग्रहणस्य फलोपधायकत्वमुक्तम्।

न्यासकारेण,[2] शेखरकारेण,[3] भैरवीकारेण[4], भावप्रकाशकारेण[5] च 'आणवयति', 'वट्टयति' इत्यादौ धातुत्वापत्तिरुक्ता। तत्र भैरवीकारेण-'साधुत्वस्य व्याकरणव्यङ्ग्यजातिविशेषरूपतया यद्याणवयत्यादिषु शास्त्रप्रवृत्तिः स्यात् तदाऽप्रामाण्यज्ञानास्कन्दितासाधुत्वज्ञानं न स्यात्। अस्यामवस्थायां यागादिष्वपि स्यात्-प्रयोग आणवयत्यादीनाम्। भूवादिग्रहणस्य फलम् आणवयत्याद्युपस्थापितम्। सारस्वतव्याकरणस्य[6] प्रसादटीकारेण तु तत्फलं हिरूगादि निगदितम्। मुग्धबोधव्याकरणे[7] सूत्रस्यास्य स्थाने भ्वादिधुः' (११) इति सूत्रितम्।

सरस्वतीकण्ठाभरणस्य[8] टीकाकारेण नारायणशास्त्रिणापि भूवादिग्रहणस्य फलम् आणवयत्यादि दर्शितम्।

---

१. 'भूवादयो धातवः' इति सूत्रस्य भाष्यप्रदीपे १२५ तमपृष्ठे।
२. न्यासे 'भूवादि०' सूत्रे ३९१-३९२ तमपृष्ठयोः।
३. भूवादिसूत्रस्य लघुशब्देन्दुशेखरे ४४ तमेपृठे।
४. भूवादिसूत्रस्य भैरव्याम् ९०-तम पृष्ठतः ९५ तम पृष्ठपर्यन्तम्।
५. भावप्रकाशे 'भूवादि०' इति सूत्रे ९०-९५ तमपृष्ठपर्य्यन्तम्।
६. सारस्वतव्याकरणस्य प्रसादटीकायां 'भ्वादिः' इति सूत्रे द्वितीये तृतीये च पृष्ठे उत्तरार्धे।
७. मुग्धबोधव्याकरणे 'भ्वादिर्धुः' इति सूत्रे विंशे पृष्ठे।
८. सरस्वतीकण्ठाभरणस्य टीकायां 'भूवादिक्रियावचने धातुः' इति सूत्रे पञ्चमे पृष्ठे।

क्रियावाचका अप्याणवयत्यादयो महाभाष्ये[1] भूवादिग्रहणस्य फलत्वेन न गृहीताः । तस्माद् भूवादिग्रहणस्य तत्र किमपि फलं न दृश्यते ।

अत्र मतद्वयं पर्यालोचयामः । तत्र 'हिरुक्', 'पृथक्' इत्यादीनां क्रियाकाङ्क्षादर्शनेन क्रियावाचकत्वाभावाद् धातुत्वं नास्ति । 'शिश्ये' इत्यादौ 'अशित्' इति प्रसज्यप्रतिषेधेऽपि शित्परत्वयोग्यस्यैवात्वविधाने प्रकृते तदप्रवृत्तौ फलाभावेन न धातुत्वम् । 'आणवयति', 'वट्टयति' इत्यादौ शिष्टप्रयोगाभावेन न धातुत्वम् तस्माद् भूवादीनां ग्रहणमदृष्टफलार्थत्वमेव ।

यद्यपि रत्नकार-नागेशादिना आणवयत्याद्युदाहरणं स्वीकृतम् तस्य भैरवीकारेण साधुत्वप्रकारश्च प्रदर्शितः ।

कैयटेन 'हिरुक्', 'पृथक्' इत्यादीनां भाष्येऽसाधुत्वाभावदर्शनात् तेषाम् भूवादिग्रहणफलतया निष्पादितमुदाहरणम्, तथापीत्थं प्रयोगसाधने कृते सति गावी, गोता, गोपोतलिका, गगर्यादिशब्दानां च साधुत्वापत्तिः । तस्मात् 'प्रयुक्तानामिदमन्वाख्यानम्' इत्यभियुक्तोक्तिबलेन, अस्मिन् शब्दानुशासने व्याकरणशास्त्रे 'लघुत्वाच्छब्दोपदेशो गरीयानपशब्दोपदेशः' इत्यादिभाष्येण च 'आणवयति' इत्यादिशब्दानामपभ्रंशत्वाद् व्याकरणशास्त्रे ग्रहणाभावे सति कैयटस्य तत्साधुत्व प्रतिपादनस्वरूपप्रदर्शनं व्यर्थमेव । अत एव 'यथालक्षणमप्रयुक्ते' इति भाष्यवार्त्तिके अप्रयुक्ते लक्षणप्रवृत्त्यभावस्यैव योग्यता' इति कैयटोक्तस्य द्वितीयपक्षस्य समर्थनं संगच्छते । अन्यथा 'प्रियाष्टनः', 'एतच्छ्रितकः' इत्यादिस्थलेऽपि तत्तत्सूत्र-प्रवृत्तौ अस्य प्रयोगस्य कृतेऽनभिधानत्वोक्तिरक्षोपस्थापनमपि व्यर्थं स्यात् । एवं 'हिरुक्', 'पृथक्' इत्यादेरपि धातुत्वरूपतयानभिधानेनैव दोषाभावः । अतः फलं चिन्त्यमेव । अथवा स्पष्टप्रतिपादनार्थमेव ।

वस्तुतस्तु 'भूवादीनाम्' वकारोऽयं मङ्गलार्थः प्रयुज्यते[2] । इति भाष्यवार्त्तिक-स्वारस्येन 'अध्येतारश्च मङ्गलयुक्ता यथा स्युः' इत्याद्यर्थमेव 'भूवादयः' इत्यत्र सूत्रे वा ग्रहणस्य प्रयोजनम् । क्रियावाचित्वार्थकरणेऽपि भूग्रहणं तु गणपठितानां

१. महाभाष्ये 'भूवादिसूत्रे' १२५ तमे पृष्ठे ।

२. भूवादिसूत्रे १११तमेपृष्ठे ।

धातुसंज्ञानिर्देशार्थम् । 'अस्ति च पाठो बाह्यश्च सूत्रात्[१]', 'किमेतस्य ज्ञापने प्रयोजनम् ? पाठेन धातुसंज्ञेत्येतदुपपन्नं भवति' इति भाष्यवचनेन सूत्रे भाष्ये वार्त्तिके गणेषु च ये पठितास्तेऽपि धातुत्वेनाश्रीयन्त इत्येतदर्थमादिग्रहणम् । व्याख्यातं चैतत् सर्वं प्रकृतसूत्रे कैयटेन । वकारनिर्देशविषये 'भुवोवार्थं वदन्तीति' भूवो धातोरर्थं वदन्तीति वा भूवादय इति निर्देशोऽर्थकथनरूपेण । व्युत्पत्या तु समान्येन क्रियासामान्यं ये ब्रूवन्ति ते भूवादय इति ।

यद्यपि क्रियासामान्यरूपार्थस्वीकारे सामान्यक्रियावाचिनाम् अस्ति-विद्यते-प्रभृतीनामेव धातुसंज्ञा स्यात्, न गच्छति- जल्पतिप्रभृतीनाम्, पचत्यादीनां वा, तथापि 'भावे' ( ३।३।१८ ) इति सूत्रेण विहितो घञ् सामान्येन निर्दिष्टो यथा विशेषादपि विधीयते, तथैवात्रापि करणे न क्षतिः । अत्र बहुव्रीहित्वसाधनं पृषोदरादित्वाद् बोध्यम् । अथवा 'भ्वर्थावा वादयः स्मृताः' इत्यनेन भाष्येण भवनं भूः सोऽर्थो येषां ते भ्वर्थाः, एवम्भूता वादयो वात्र संज्ञिनः कथिताः । गतिगन्धनार्थको 'वा' इति धातुः चुराद्यन्तर्गणेऽपि पठितः । इत्थं वा आदिर्येषां ते वादयः । तेन भूवादिकथनेन भूप्रभृतिधातुमादाय 'वा गतिगन्धनयोः' इति चुरादिगणस्थधातुमारभ्य, आगणसमाप्ति ये धातवः पठितास्ते भ्वादयो वादयश्च धातुसंज्ञका भवन्ति-इत्येतत् तात्पर्येण सूत्रे भूवादिनिर्देशः । उपपादितं चैतत् सर्वं भाष्ये[२], कैयटे[३], काशिकायाम्[४], न्यासे[५], पदमञ्जर्याम्[६], प्रक्रियाकौमुद्याम्[७], प्रसादटीकायां[८] च ।

---

१. भूवादिसूत्रे ११२ तमेपृष्ठे ।

२. भाष्ये 'भूवादि०' इति सूत्रे १११ तमे पृष्ठे ।

३. कैयटे 'भूवादि०' इति सूत्रे १११ तमे पृष्ठे ।

४. काशिकायाम् 'भूवादि०' इति सूत्रे ३९१ तमे पृष्ठे ।

५. न्यासे 'भूवादि०' इति सूत्रे ३९१-३९२ तम पृष्ठयोः ।

६. पदमञ्जर्याम् 'भूवादि०' इति सूत्रे ३९१-३९२ तमपृष्ठयोः ।

७. प्रक्रियाकौमुद्याम् 'भूवादि०' इति सूत्रे ३२-३३ तमपृष्ठयोः ।

८. प्रसादटीकायाम् 'भूवादि०' इति सूत्रे ३२-३३ तमपृष्ठयोः ।

## उपदेशशब्दविचारः

१—सूत्रार्थः ।

२—उपदेशशब्दस्यार्थनिर्देशः ।

३—भट्टोजिदीक्षितमतेन 'उपदेश'-शब्दो भावघञन्तः ।

४—हरिदीक्षितनयेन उपदेशशब्दः करणघञन्तः ।

५—युक्तायुक्तत्वसमीक्षणम्, तत्र पाणिनीयवैयाकरणानाम् अपाणिनीयवैयाकरणानां सम्मतिप्रदर्शनं च ।

'उपदेशेऽजनुनासिक इत्' ( १।३।१ ) इति सूत्रे उपदेशे, अनुनासिकः, अच्, इत् चत्वारि पदानि । तत्र उपदेशेऽनुनासिकोऽज् इत्संज्ञक इति सामान्यार्थः । पदेष्वन्यतममाद्यमुपदेशपदम् । सत्स्वनेकेषूपदेशपदार्थेषु कश्चेहोपदेशपदार्थ इति समुदेति जिज्ञासा । संस्कृतवाङ्मये शब्दकोषादिषु[1] च विविधास्तदीयाः अर्थास्त्विमे—

प्रदर्शनम्, अधिन्यस्तकरणम्, कथनम्, ज्ञापनम्, दानम्, स्वीकृतिः, अर्पणम्, उत्सर्गः, करप्रदानम्, निदेशः, आदेशः, अध्यापनम, उपदेशदानम्, उल्लेखः, घोषणा, अङ्कितः, नामग्रहणम्, आह्वानम्, उद्दिष्टकरणम्, निर्णयदानम्, विधानमित्यादिष्वर्थेषु दिशधातुः, उपपूर्वकदिश्-धातुश्च लभ्यते ।

किन्तु लप्स्यमानानां कृत्स्नार्थानां तात्पर्यज्ञानं कस्मिश्चिदेकलक्ष्येऽसम्भवम् । अस्यां स्थितौ 'उपदेशे०' ( १।३।२ ) इति सूत्रे उपदेशशब्दः कस्यार्थस्य वाचकः, कया व्युत्पत्त्या कं प्रत्ययमङ्गीकृत्य तत्स्वरूपावस्थितिश्चेति समस्या ।

पाणिनीयव्याकरणनिकाये भट्टोजिदीक्षितः[2]—'आदेच उपदेशेऽशिति' ( ६।१।४५ ) इत्यत्र 'उद्देशश्च प्रातिपदिकानां नोपदेशः' इति 'उपदेशेऽत्वतः' ( ७।२।६२ ) इति सूत्रे उपदेशशब्द उच्चारणार्थको दृश्यते । तत्रेत्संज्ञाविधावु-

---

१. शब्दकल्पद्रुमे १७४ तमे पृष्ठे एवं 'धात्वर्थविज्ञानम्'-इति ग्रन्थस्य ११५ तमे पृष्ठे ( जू० १८८ तमे पृष्ठे ) उपरिनिर्दिष्टार्थः प्रयुक्तस्थलानां निर्देशनपूर्वकं सोदाहरणं विद्यते ।

२. प्रौढमनोरमायाम् 'उपदेश०' इति सूत्रे ४२ तमपृष्ठतः ४६ तमपृष्ठपर्यन्तम् ।

च्चारणवचना उपदिशिर्गृह्यते' इति येषां स्वरूपज्ञानायापूर्वमुच्चारणं तेषामेवो-पदेशव्यवहारः' इति कैयटोक्त्या[1] च उपदेशशब्द आद्योच्चारणार्थकः, 'उपदेशनमु-पदेशः' इति व्युत्पत्त्या च भावघञन्तः इत्युक्तवान् मनोरमाकारः ।

'उपज्ञा ज्ञानमाद्यं स्यादित्यमरोक्त्या, उपक्रमोपक्रमं तदाद्याचिख्यासायाम्' ( १।४।२१ ) इति सूत्रे तदाद्ये ति निर्देशेन च 'उप' शब्द आद्यर्थकः सिद्धः । एओङ्[2], ऐऔच्, इति प्रत्याहारसूत्रभाष्ये कैयटे चोपदेशशब्द उच्चारणार्थको दृश्यते । एवं पस्पशाह्निके[3] 'वृत्तिसमवायार्थं उपदेशः' इति वार्त्तिकव्यख्याने ( क उपदेशः १ उच्चारणम् । दिशिः उच्चारणक्रियः । उच्चार्यवर्णानाह उपदिष्टा इमे वर्णाः ) एवम् 'अणुदित०[4]' ( १।१।६९ ) इति सूत्रे अनुच्चारणरूपोऽर्थोऽ-नुपदेशपदस्य कैयटेन प्रदर्शितः । तस्माद् आद्योच्चारणमुपदेशशब्दस्यार्थः सिद्धः । 'उपदेश०' ( १।३।२ ) इति सूत्रे समुपात्तोऽच्छब्दोऽच्प्रत्याहारस्य ( स्वरवर्णस्य ) वाचकः, न तु 'आङोऽनुनासिकश्छन्दसि' ( ६।१।१२६ ) इति सूत्रेण विहितस्य कृत्रिमानुनासिकस्य । अत एव 'अभ्र आँ अपः', 'अभ्र आं अटितः' इत्यादौ 'आँ' इत्यस्य नेत्संज्ञा ।

इत्थं प्रौढमनोरमाकारानुसारेण ( उपदेशावस्थायाम् = आद्योच्चारणा-वस्थायाम् अनुनासिकाऽज् इत्संज्ञकार्थो भवतीत्यर्थो निष्पन्नः । अयं 'दीक्षितस्य' न स्वोपज्ञपक्षः । उपदेश शब्दो भाव घञन्त इत्येव मनोरमाकारस्य स्वोपज्ञ पक्षः ।

एतद्विपरीतं शब्दरत्नकारस्याशयस्त्वित्थम्[5]—'प्रत्यक्षमाख्यानमुपदेशः', 'गुणैः प्रापणमुद्देशः' इति 'उपदेश०' ( १।३।२ ) इति सूत्रस्थभाष्योक्त्या उपदेशशब्दार्थः

१. प्रदीपे 'आदेच्०' इति सूत्रे ७०७ तमे पृष्ठे ।
२. भाष्ये प्रदीपे च 'एओङ्, ऐऔच्' इति सूत्रे ७८ तमे पृष्ठे ।
३. भाष्ये पस्पशाह्निकस्य 'वृत्तिसमवायार्थ उपदेशः' इति वार्त्तिकव्याख्याने ५९ तमे पृष्ठे ।
४. अणुदितसूत्रे प्रदीपे ३७१ तमे पृष्ठे ( अनुपदेशात् = अनुच्चारणात् ) ।
५. शब्दरत्ने 'उपदेशेऽज्०' इति सूत्रे ४९-५० तमपृष्ठयोः ।

साक्षात् आख्यानस्य = कथनस्य वाचकः। तेनोपदेशशब्द उपदिश्यतेऽनेनेति व्युत्पत्त्या बाहुलकात् करणघञन्तः सिद्धः।

एवं तावद् आद्यैः सूत्रकारप्रभृतिभिः साक्षाद् आख्यातः = प्रोक्तोऽनुनासिकभूताज् इत्यर्थः सम्पद्यते। विधानार्थक उपदेशशब्द इति पदमञ्जरीकारः। अङ्गीकृते तथार्थे सूत्रकारादिभिर्विहितस्यानुनासिकाजूपस्येत्संज्ञा भवतीत्यर्थो जायते।

इत्थं भट्टोजिदीक्षितनिर्दिष्टस्याऽऽद्योच्चारणरूपार्थस्य मूलं भाष्ये पदमञ्जर्यांञ्चोपलभ्यते। समर्थितश्च सोऽर्थस्तत्त्वबोधिनीकारेणापि। किन्तु व्युत्पत्तिदृष्ट्या भावघञन्तपक्षस्य संगतिर्नोचिता। तथाङ्गीकरणम्—उपदेशनम् = शास्त्रम्। शास्त्रपदेन भाष्ये धातुप्रातिपदिकनिपातागमादेशानामेव गृहीतत्वात् सूत्रस्योपदेशत्वं न स्यात्।

अतो महाभाष्य[1]-काशिका[2]-न्यास[3]-पदमञ्जरी[4]-प्रदीप[5]-प्रक्रिया[6]-कौमुदी प्रसादटीका[7] - रूपावतार[8] - चक्रपाणिविर[9]चितमनोरमाखण्डन-प्रक्रियासर्वस्व[10]

---

१. उपदेशेऽज्० इति सूत्रभाष्ये १२७-१२८ तमयोः पृष्ठयोः।
२. काशिकायाम् 'उपदेशेऽज्०' इति सूत्रे ३९३ तमे पृष्ठे।
३. न्यासे 'उपदेशेऽज्०' इति सूत्रे ३९३ तमे पृष्ठे।
४. पदमञ्जर्याम् 'उपदेशेऽज्०' इति सूत्रे ३९३ तमे पृष्ठे।
५. प्रदीपे 'उपदेशेऽज्'० इति सूत्रे १२८ तमे पृष्ठे।
६. प्रक्रियाकौमुद्याम् 'उपदेशेऽज्०' इति सूत्रे १५-१६ तमयोः पृष्ठयोः।
७. प्रसादटीकायाम् 'उपदेशेऽज्'० इति सूत्रे १५-१६ तमयोः पृष्ठयोः।
८. रूपावतारे 'उपदेशेऽज्०' इति सूत्रे द्वितीये पृष्ठे (धातुसूत्र०)।
९. मनोरमाखण्डने 'उपदेशेऽज्०' इति सूत्रे ४ खण्डे 'भाष्यादिषु करणे घञिति तु प्रौढिवाद इति केचित्। तत्र भाष्यकारैः करणघञन्तस्योपदेशशब्दस्य लोकेऽपि साधुत्वस्वीकारात् तदनुरोधेन करणघञोऽवश्यस्वीकर्तव्यत्वात्।'
१०. प्रक्रियासर्वस्वे 'उपदेशे०' इति सूत्रे चतुर्थे पृष्ठे।

सिद्धान्तसुधानिधि[१]-प्रभृतिषु ग्रन्थेषु, नागेशभट्ट[२]-भैरवीकार[३]-वैद्यनाथपायगुण्डे[४]-प० राजजगन्नाथ[५] 'सरस्वती[६] कण्ठाभरणकारादिभिर्विद्वद्भिश्च समर्थितः करणघञन्त एव 'उपदेश'-शब्दो मान्यः प्रतीयते। यद्यपि भट्टोजिदीक्षितो भाष्योक्ते करणघञन्ते 'प्रौढिवादोक्तिः', अगतिकगतिः' इत्यादिकथनद्वाराऽरुचि प्रदर्शितवान्, तथापि विचारनिकषे करणघञन्तोपेक्षा नौचित्यमावहति। स्वीकृते भावघञन्तपक्षे—

'धातुसूत्रगणोणादिः, वाक्यलिङ्गानुशासनम्।
आगमाः प्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥' इति

परिगणितोपदेशपदार्थेषु सूत्रस्य संग्रहो न स्यात्, 'उपदेशन'-पदेन धातुप्रातिपदिकनिपातागमादेशानामेव भाष्ये स्वीकृतत्वात्। हलश्चेति सूत्रेण वाहुलकात् करणे घञ् इति भाष्यपक्षं निराकृतवान् भट्टोजिदीक्षितः 'वाहुलकं त्वगतिकगतिः' इति। किन्तु प्रत्याहारशब्दव्युत्पत्तिप्रसङ्गे तु तेन स्वयमपि बाहुलकपक्षोऽङ्गीकृत एवेति तदीयं भाष्यादिप्रतिवचनमसाम्प्रतम्।

अन्यच्च—बाहुलकरूपाया भाष्योक्तेरवहेलनं प्रौढिवादोक्त्या भट्टोजिदीक्षितेन यत् कृतम् तदविचारितरमणीयम्, यथोत्तरं मुनीनां प्रामाण्यम्' इति स्वीकृतस्य प्रमाणशीर्षण्यस्य महाभाष्यस्याधरीकरणात्। वाहुलकपक्षः कथमगतिकगतिरित्यत्र तेन किमपि प्रमाणमपि नोपन्यस्तम्।

एतदतिरिक्तम् 'आदेच०' (६।१।४५) इति सूत्रस्थं भाष्यं[७] कैयटञ्चादाय स्वपक्षोपस्थापनप्रयासो दीक्षितस्य, किन्तु तत्रत्य-भाष्ये उपदेशशब्दप्रसङ्गे-कर्मघञ-

१. व्याकरणसिद्धान्तसुधानिधौ 'उपदेशे०' इति सूत्रे ६६४ तमे पृष्ठे।
२. लघुशब्देन्दुशेखरे 'उपदेशे०' इति सूत्रे २४ तमे पृष्ठे।
३. भैरव्याम् 'उपदेशे०' इति सूत्रे ४९-५० तमयोः पृष्ठयोः।
४. भावप्रकाशे 'उपदेशे'० इति सूत्रे ५० तमे पृष्ठे।
५. कुचमर्दिन्याम् 'उपदेशे'० ४ पृष्ठतः ६ पृष्ठपर्य्यन्तम्।
६. सरस्वतीकण्ठाभरणे 'अजुपदेशात्' (१।२।७) इति सूत्रे ६६ तमे पृष्ठे।
७. भाष्ये प्रदीपे च 'आदेच'० इति सूत्रे ७०२–७०३ तमयोः पृष्ठयोः।

न्तस्य करणघञन्तस्य चेति पक्षद्वयस्यैवोपपादनं दृश्यते, न तु भावघञन्तपक्षस्य। 'उपदेशेऽत्वतः' (७।३।६२) इत्यत्र भाष्ये कैयटे तूपदेशशब्दव्युत्पत्तिविषये मौनमेवालम्बितम्। 'एकाच् उपदेशे०' (७।२।१०) इत्यत्रत्ये भाष्ये[1] यद्यप्युपदेशशब्दविषये किमपि नोक्तम्, तथापि भास्यस्थे प्रदीपे 'इत्संज्ञासूत्रे करणसाधनम्' एतत्सूत्रे भावसाधनम् इत्युक्त्वा सिद्धान्तरूपेण-भिदि, बेभिदि वा प्रतिपादनवचनग्रहणात् 'उच्चारणवचनेऽप्युपदिशौ गृह्यमाणे प्रत्यक्षमाख्याने वा न दोषः' इत्येवुक्तं न तु उच्चारणवचने एव भावघञन्तेवेति। प्रकृतसूत्रस्थ भाष्यवचनस्य तत्रत्य कैयटवचनस्य च स्पष्टमवहेलनम्, तस्यापरा भ्रान्तिः। तेन रत्नकारसमर्थितकरणघञन्त एव मान्यः।

---

## निगरणार्थविचारः

१—सूत्रार्थः।
२—भट्टोजिदीक्षितमतेन निगरणपदेन भक्षणं पानं च गृह्यते।
३—शब्दरत्नकारमतेन निगरणशब्देन भक्षणमात्रस्य ग्रहणम्।
४—निगरणशब्दस्य भक्षणार्थ-पानार्थयोर्वैयाकरणानां सम्मतिः।
५—लक्ष्ये भक्षणार्थकधातूनां पाने गतार्थत्व प्रदर्शनपूर्वकं समीक्षणाम्।

'निगरणचलनार्थेभ्यश्च' (१।२।८७) इत्यत्र सूत्रे 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' (१।३।८६) इत्यतः 'णे' इत्यनुवर्तते। तेन निगरणार्थेभ्यश्चलनार्थेभ्यश्च धातुभ्योण्यन्तात् परस्मैपदं भवतीत्यर्थः सम्पद्यते।

अत्र सूत्रे निगरणार्थेन यथा 'भुज्' 'अश्'-प्रभृतयो धातवो गृह्यन्ते, तथैव पिबत्यर्थकस्य पा' धातोरपि ग्रहणं स्यात् एवम्—'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' (१।३।८९) इत्यस्मिन् सूत्रेऽपि निगरणार्थकस्य 'पा'—धातोरेव परस्मैपदाभावो विधीयते। यद्यवि द्रव-द्रव्यस्य गलविलाधःकरणं पानम्, अन्नादेर्गलविलाधः करणं भक्षणम्, तथापि द्रव-द्रव्यादीनामुपलक्षणत्वेन सामान्येन गलाधःकरणमेव निगरणशब्दार्थः अत एव 'न पीयतां नाम चकोरजिह्वया'

---

१. 'एकाच०' सूत्रस्थ प्रदीपे ११३ तमे पृष्ठे।

इत्यस्मिन् श्लोके 'पीयताम्' इत्यत्र 'निगरणचलनार्थेभ्यश्च' ( १।३।८७ ) इत्यनेन परस्मैपदे प्राप्ते 'न पादम्याङ्यसपरिमुहरुचिनृतिवदवसः' ( १।३।८९ ) इति निषेधेनात्मनेपदमिति भट्टोजिदीक्षिताशयः ।[1]

शब्द[2]रत्नकारमतेन तु पानं नाम पिपासानिवृत्यनुकूलो व्यापारः । भक्षणं नाम क्षुन्निवर्तको व्यापारः । सर्वेषामिन्द्रियाणां च बुभुक्षापिपासा' इत्येतरेयोपनिषदि बुभुक्षा पिपासाशब्दयोः पृथक्-पृथग् उपादानत्वेन पृथक्-पृथगुपन्यासः । अन्यथैकेनैव उभयार्थे लब्धे उभयपदोपादानस्य वैयर्थ्यं स्यात् । तस्माद् नात्र 'निगरणचलनार्थेभ्यश्च' ( १।३।८७ ) इत्यनेन परस्मैपदप्राप्तिः न वा 'न पादम्याङ्यसपरिमुहरुचिनृतिवदवसः' ( १।३।८९ ) इति सूत्रे निगरणार्थक 'पा'—धातुरिति ।

काशिकाकारेण[3] निगरणशब्दस्याभ्यवहारार्थः कृतः एवम्—'नपादभ्याङ्य०' ( १।३।८९ ) इति सूत्रेऽपि निगरणार्थक—'पा'—धातोरेव ग्रहणमस्तीति ।

पदमञ्जरीकारेणापि[4] 'लुग्विकरण०' इति परिभाषया पिबत्यर्थक—'पा'—धातोः 'नपादभ्याङ्यसपरिमुहरुचिनृतिवदवसः' ( १।३।८९ ) इत्यस्मिन् सूत्रे गृहीतत्वेन रक्षणार्थक 'पा'—धातोश्चाग्रहणेन अकर्मकत्व-विवक्षायाम् 'अणावकर्मकात्चित्वत्कर्तृकात्' ( १।३।८८ ) इति परस्मैपदकरणे न क्षतिरिति निगदितम् । इतः पूर्वं न्यासकारेणापि[5] पानार्थकस्य 'पा'—धातोरेव परस्मैपदाभावः प्रदर्शितः नागेशेनापि[6] निगरणार्थक 'पा'—धातोः 'न पादभ्याङ्य०' ( १।३।८९ ) इति सूत्रे ग्रहणम् । तस्य निगरणार्थकत्वं च यथा भट्टोजिदीक्षितेन निर्दिष्टं तेन तथैव आपादितम् ।

---

१. प्रौढमनोरमायाम् 'निगरण०' इति सूत्रे ७४५–७४५ तमपृष्ठयोः ।
२. शब्दरत्ने 'निगरण०' इति सूत्रे ७४५–७४६ तमपृष्ठयोः ।
३. काशिकायाम् 'निगरण०' इति सूत्रे ४८ पृष्ठे ।
४. पदमञ्जर्याम् 'निगरण०' ऐति सूत्रे ४८९–४९० तमपृष्ठयोः ।
५. न्यासे 'निगरण०' इति सूत्रे ४८९–४९० तमपृष्ठयोः : ।
६. बृहच्छब्देन्दुशेखरे 'निगरण०' इति सूत्रे १९५२ तमे पृष्ठे ।

अत्र मतद्वये कतरः पक्ष उचित इत्यत्र विचारोऽपेक्षते। तथा हि अथर्ववेदे—'देवा अमृतानशानाः' ( २।१।५ ) इत्यत्र 'अशानाः' इति प्रयोगो दृश्यते। तत्रामृतस्य भक्षणं न क्वापि प्रसिद्धं किन्तु पानमेव। तस्माद् 'अश्'—धातोः पर्यायत्वं 'पा'—धातावप्यस्ति', तेन 'पा'—धातोर्निगरणार्थकत्वं सिद्ध्यति।

पाराशरगृह्यसूत्रे 'अपोऽशान्' ( २।३ ) इति प्रयोगः। अत्रापि 'अप' इत्यस्य अशनमसम्भवः। तेन पानस्य पर्यायत्वेनैव 'अशान' इत्यस्य ग्रहणाम्।

छान्दोग्ये[1] 'सह व्याधिनानाशितुं दध्रे तमाचार्य जायो वाच ब्रह्मचारिन्नशान किं न नाश्नासीति' ( ४।१०।३ ) इति मन्त्रे 'अशान' इति भोजनार्थे न पानार्थे।

वाल्मीकिरामायणे[2] —

'ततस्तु ता प्राश्य तमुतमस्त्रियो महीपतेरुत्तमपायसं पृथक्' ( १।१६।३१ ) इत्यत्र प्राश्येत्यस्य पानम्, भोजनं चेत्यर्थद्वयं भवितुमर्हति। यतो हि पायसस्य पानं भक्षणं च सम्भवतीति। एवम्—

क्व नु वत्स्यति धर्मात्मा वृक्षमूलमुपाश्रितः।
सोऽत्यन्तसुखितः सूत किमशिष्यति राघवः[3] ॥ २।५८।५

इति श्लोके 'किमशिष्यति' इत्यस्य किं खादिष्यति इत्येवार्थः।

कात्यायनश्रौतसूत्रे 'तदाशितायै पयसा' ( ४।६।१२ ) इति मन्त्रे 'आशितायै' इत्यस्य पानमेवार्थो भविष्यति। यतो हि 'पयसः' पानमेव भवति न भक्षणम्।

---

१. छान्दोग्ये ४०२ तमे पृष्ठे।

२. वाल्मीकिरामायणे २६ तमे पृष्ठे।

३. वाल्मीकिरामायणे २०० तमे पृष्ठे।

अशनशब्दस्य भक्षणमन्नं वार्थं इति हेमचन्द्रेण[१] प्रतिपादित-मित्युक्तम्। तत्र नागानन्दोक्त[२]—

'शीतं निर्झरवारिपानमशनं कन्दाः सहायाः मृगाः।'

इति श्लोकेऽशनशब्दस्य भोजनमेवार्थः। यतो ह्यत्र 'वारि-पानम्' इति स्वतन्त्रमेवोदाहृतम्। तथैव सुश्रुते[३]—

विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः।
मनोज्ञं शुचिनात्युष्णं प्रत्यग्रमशनं हितम्॥

इत्यत्र अशनशब्दस्य पानम् भक्षणं चार्थौ भवितुमर्हति। यतो हि मिष्टरसादिभिः स्वाद्यमान रस एव यदि स्यात्, तदा त्वशनशब्दः पानार्थकः। यदि मधुर रसादिभिः संस्कृतम् अन्नादिद्रव्यम्, तदा तु भक्षणमेवार्थः। तेनात्रत्याशनशब्दो भक्षणपानरूपोभयार्थकौ। प्रत्यवसान-शब्दस्यापि भोजनमेवार्थं इति हेमचन्द्रेण[४] निगदितम्। वैद्यकरत्नमालाकारेणापि[५]—

'जग्धिः प्रत्यवसानं च भक्षणं भोजनाशने।'

इत्यत्र जग्धिप्रत्यवसानयोर्भोजनाशनप्रभृतयः पर्यायत्वेनोल्लिखिताः। प्रत्यवसित-मित्यस्य भक्षितमर्थोऽमरकोषेऽप्यस्ति[६]। किन्तु शब्देन्दुशेखरे[७] प्रत्यवसानशब्दस्य पानमप्यर्थो भवतीति नागेशेन समाहितम्। अत एव 'धापयेते' इत्यस्य प्रत्यवसानार्थत्वात् शिशोः कर्मता। भाष्ये 'नपादम्याङ्यसपरिमुहरुचिनृति-वदवसः' (१।३।८९) इति सूत्रे' पादिषु धेट् उपसंख्यानं कर्त्तव्यम्' इति वार्त्तिकस्योदाहरणं 'धापयेते शिशुमेकं समीचीति दत्तम्। कौमुद्याम् 'गतिबुद्धि प्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्तासणौ' (१।४।५२) इति सूत्रे 'शत्रून-गमयत् स्वर्गम् इत्युदाहृतश्लोके आशयच्चामृतं देवान् 'इत्यत्र 'आशयत्' इत्यस्य पानमर्थः। स च प्रत्यवसानार्थः। तेन 'पा'-धातोर्निगरणार्थत्वं सिद्धयति।

---

१. २. ३. शब्दकल्पद्रुमे प्रथमभागे १३६ तमे पृष्ठे संगृहीतम्।
४. ५. शब्दकल्पद्रुमे तृतीयभागे २७१ तमे पृष्ठे संगृहीतम्।
६. अमरकोषे ४०३ तमे पृष्ठे (३।१।११०)।
७. बृहच्छब्देन्दुशेखरे 'धेट् उपसंख्यानम्' इति वार्त्तिके १९५३ तमे पृष्ठे।

इत्थं निगरणार्थकशब्दस्य क्वचिद् भक्षणार्थे, क्वचिच्च पानार्थे प्रयोगदर्शनेन 'पा'-धातोर्निगरणार्थकत्वस्वीकारे न क्षतिः। अत एव वङ्गभाषायां 'जल खावे' इति प्रचलितः प्रयोगः। यद्यपि यत्र तत्र भोजने पाने च भेदः स्पष्ट एव, तथापि 'गॄ' धातोः संगिलनमर्थः। स तु भोजने पाने वा सामान्येन प्रयुज्यते। अत एवास्य सामान्येन गलबिलाधः करणार्थत्वं मत्वा दीक्षितेन तथा प्रतिपादितम्। तेनास्यैव मतं युक्तम्। किन्तु 'पा'-धातोर्निगरणार्थत्वेऽपि 'न पीयतां नाम चकोरजिह्वया' इति श्लोके 'पीयताम्' इत्यत्र 'निगरण०' (१।३।८७) इति सूत्रेण परस्मैपद प्राप्तिप्रदर्शनम् 'नपादम्याङ्०' (१।३।८९) इत्यनेन तन्निषेधकरणं वा दीक्षितस्य नोचितम्। यतो ह्यनेन सूत्रद्वयेन ण्यन्तानामेव कर्तृगे कियाफले विधिनिषेधः। पीयतामिति तु न ण्यन्तप्रयोगो न च कर्तृगं क्रियाफलम्। अतस्तत्र एतयोः सूत्रयोः प्राप्त्यैव नास्ति।

---

## कारकपदार्थविचारः

१—भट्टोजिदीक्षितमतेन 'क्रियान्वयित्वं कारकत्वमिति कारकस्वरूपम्।
२—क्रियान्वयित्वस्वरूपस्य विषये मनोरमाकारतः पूर्ववर्तिवैयाकरणानां परवर्ति वैयाकणस्य च सम्मतिप्रदर्शनम्।
३—शब्दरत्नकारमतेन क्रियाजनकत्वं कारकत्वं कारकस्य स्वरूपम्।
४—क्रियाजनकत्वे पक्षे शब्दशास्त्रज्ञानां स्वीकृतिः।
५—अपाणिनीये व्याकरणे कारकपदार्थे विचारप्रदर्शनम्।
६—समीक्षणम्।

'कारके' (१।४।२३) इतीदमधिकारसूत्रम्। कारकस्याऽऽकडारीयत्वेऽपि कर्तृकर्मादिविशिष्टसंज्ञाभिः सह समावेशः। तेन 'ग्रामे वासः' इत्यादावधिकरणत्वबलेन सप्तमी, कारकत्वबलेन च कृदुत्तरपदप्रकृतिस्वरश्च सिद्ध्यति।

तत्र मनोरमाकारमतेन[1] अन्वर्थसंज्ञया करोतीति कारकम्, यद्वा करोति कर्तृकर्मादिव्यपदेशान् इति व्युत्पत्त्या कारकशब्दः क्रियापरः। तेन क्रियान्वयित्वं

---

१. प्रौढमनोरमायाम् 'कारके' इति सूत्रे ७८३–७८ तमपृष्ठपर्यन्तम्।

कारकत्वम् । मानञ्चात्र 'यावद् ब्रूयात् क्रियायामिति तावत् कारके' इत्येतदीय सूत्रभाष्यमेव । 'कारकाद्दत्तश्रुतयोः' ( ६।२।१४८ ) इत्यादौ कारकशब्दे स्वरितत्वप्रतिज्ञाबलेन कर्त्रादिषट्त्वमेव गृह्यते । अत एव 'नट—श्रुतम्' इत्यादौ न दोषः । नेदं भट्टोजिदीक्षितस्य स्वकीयोद्भावनम्, अपि तु भाष्ये[१], प्रदीपे[२] चास्य सङ्केतः । तत्त्वबोधिनीकारेणाप्यस्य[३] पक्षस्यैव समर्थनं कृतम् ।

शब्दरत्नकृता[४] तु 'घटत्ववतां घटत्ववत्ता' इतिवत् कारकाणां भावनान्वय इति वाक्येन बोधो न स्यात् । यतोह्युद्देश्यतावच्छेदकविधेययोरैक्ये शाब्दबोधो न भवति । अतो भाष्यादिव्याख्यानबलेन 'क्रियाजनकत्वं कारकत्वमित्येवगृह्यते । तच्च सक्षात् परम्परया च गृह्यते । अस्य पक्षस्य सङ्केतो भाष्ये[५], काशिकायाम्,[६], न्यासे[७], पदमञ्जर्याम्[८], प्रदीपे[९], प्रसादटीकायां[१०], सरस्वतीकण्ठाभरणे[११] चास्ति । भाष्ये 'सप्तमीपञ्चम्यौ कारकामध्ये' ( २।३।७ ) इति सूत्रे 'नान्तरेण साधनं विना क्रियायाः प्रवृत्तिर्भवति' इति वचनेन कारकं विना क्रियाप्रवृत्त्यभावेन क्रियाप्रवर्तकं कारकं निष्पन्नम् प्रदीपे[१] तु शक्तिः

---

१. 'कारके इति सूत्रे २४२ तमे पृष्ठे ।
२. प्रदीपे 'कारके' इति सूत्रे २४२ तमे पृष्ठे ।
३. तत्त्वबोधिन्याम् 'कारके' इति सूत्रे १५६ तमे पृष्ठे ।
४. शब्दरत्ने 'कारके' इति सूत्रे ७८३—७८७ तमपृष्ठपर्य्यन्तम् ।
५. भाष्ये 'कारके' इति सूत्रे २४६ तमे पृष्ठे 'तस्यानिवर्तकं कारम्' ।
६. काशिकायाम् कारके' इति सूत्रे ५३३ तमे पृष्ठे ।
७. न्यासे 'कारके' इति सूत्रे ५३३ तमे पृष्ठे ।
८. पदपञ्जर्याम् 'कारके' इति सूत्रे ५३३ तमे पृष्ठे ।
९. प्रदीपे 'कारके' इति सूत्रे २४६ तमे पृष्ठे ( सर्वेषां कारकाणां.......... कर्तृत्वम् ) ।
१०. प्रसादटीकायाम् 'कारके' इतिसूत्रे ३८७ तमे पृष्ठे ।
११. सरस्वतीकण्ठाभरणे 'क्रियानित्तं कारकम् इति सूत्रे ११ तमे पृष्ठे ।

कारकमित्युक्तम्। उद्योतेऽपि 'क्रियाजनकत्व'-पक्षस्यैव समर्थनं विद्यते।

हैमव्याकरनेऽपि[2] 'क्रियाहेतुः कारकम्' (२।२।१) इति सूत्रितम्। तेन जनकत्वमर्थो लभ्यते। सिद्धान्तसुधानिधौ[3]-सङ्केतविशेषसम्बन्धेन संज्ञापरकम्, कारकशब्दो वा कारकत्वमिति प्रतिपादितम्।

समीक्षात्मकदृष्ट्या विचारे क्रियान्वयित्वम्, क्रियाजनकत्वं वोभयविधकारकत्वस्वीकारे न क्षतिः। लक्ष्येऽपि न काचन विप्रतिपत्तिः। भाष्ये उभयविधव्याख्यानात्। तथाप्युद्देश्यतावच्छेदकविधेययोरैक्ये नैयायिकाः शाब्दबोधं न स्वीकुर्वन्ति। तस्मात् सर्वविधनिर्दुष्टत्वेन क्रियाजनकत्वपक्षस्यैवौचित्यम्।

## अर्थग्रहणविचारः

१—सूत्रार्थः।

२—भट्टोजिदीक्षितमतेन 'पूर्व०' इति सूत्रे अर्थशब्दोऽभिधेयपरः तेन सदृशादिशब्देन तस्य सम्बन्धः तस्य पृथगुपादानात्।

३—अभिधेयपरकत्वार्थविषये वैयाकरणानां सम्मतिः।

४—रत्नकारनये तु 'पूर्व०' इति सूत्रेऽर्थग्रहणं व्यर्थमेव।

५—अपाणिनीयव्याकरणे तत्स्वरूपम्।

६—'पूर्व०' इतिसूत्रे अर्थग्रहणानर्थक्ये शब्दशास्त्रज्ञानां विचारदानम्।

७—लक्ष्यनिर्देशनद्वारा युक्तायुक्तत्व समीक्षणम्।

'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' (२।१।३१) इति सूत्रे पूर्वसदृशादिशब्दा अत्र प्रथमार्थे तृतीयान्तः। 'तृतीया तत्कृतार्थेन गुणवचनेन' (२।१।३०) इत्यतः तृतीयेत्यस्यानुवृत्तिरायाति। 'नापि केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः' इति प्रसिद्धया प्रकृतेराक्षेपः। सा च शब्दस्वरूपा। आक्षिप्तं

---

१. प्रदीपे 'सप्तमी०' इतिसूत्रे ४९२ तमे पृष्ठे (शक्तिः कारकमिति पक्षाश्रयेण वार्तिकं प्रत्याचष्टे नान्तरेण साधनमिति। शक्तिमित्यर्थः।

२. हैमे 'क्रियाहेतुः०' इति सूत्रे २०९ तमे पृष्ठे।

३. सिद्धान्तसुधानिधौ 'कारके' इति सूत्रे ८०४ तमे पृष्ठे।

शब्दस्वरूपम् अनुवृत्ततृतीयया सम्बद्ध्यते । तत्पुरुषाधिकारे पठितमिदं सूत्रमस्ति । अतः तृतीयान्तप्रकृतिकशब्दाः, पूर्वंदृशादिशब्दैः सह समस्यन्ते । तच्च तत्पुरुष-संज्ञकं भवतीत्यर्थो जायते तेन 'माषोनम्', 'कार्षापणोनम्' इत्यादिप्रयोगाः सिद्धयन्ति ।

अत्र भट्टोजिदीक्षितमतानुसारेण[१] 'तृतीया०' ( २।१।३० ) इति सूत्रेऽर्थग्रहणं समास-सिद्धयर्थम् । अत्र सूत्रे त्वर्थशब्दोऽभिधेयपरः । तस्य 'ऊन' शब्देनैव सम्बन्धो भवति, न तु पूर्वादिशब्दैः । यतो हि सम-सदृशादिशब्दाः पृथग् उच्चार्यन्ते ।

काशिकायां[२] माषोनम्, कार्षापणोनम् इत्युदाहरणदानेनार्थशब्दस्याभिधेयपरत्वं लक्ष्यते । एतदेव पदमञ्जरीकारस्य[३] पक्षः । प्रसादटीकाकारेणाप्यूनार्थस्य[४] पापोनः' पापहीन इत्याद्युदाहरणं दत्तम् । येनाभिधेय-परत्वमेव समर्थ्यते ।

शब्दरत्नकाराऽनुसारेण[५] त्वत्रत्यार्थग्रहणं व्यर्थम् । 'तृतीया०' ( २।१।३० ) इति सूत्रस्थ-भाष्येऽप्यत्रत्यम् अर्थग्रहणं खण्डितमेव । 'ऊनार्थकलहं तृतीयायाः' ( ६।१।१५३ ) इति सूत्रे प्रतिपदोक्तरूपेणोनार्थपददानेन तत्रत्यार्थशब्दस्यार्थ परत्वेऽपि, अत्रत्यार्थग्रहणस्याभिधेयपरत्वं नास्ति । यतो हि 'ऊनार्थकलहं तृतीयायाः' ( ६।२।१५३ ) इत्यत्र तृतीयाया इत्युक्त्या प्रतिपदोक्तपरिभाषाया अप्रवृत्तिरेव । अतः 'उपादानविकलः' इत्युदाहरणं संगच्छते तत्र सूत्रे ।

'प्रदीपे'[६] त्वर्थग्रहणमनर्थकमेव प्रतिपादिततम् । नागेशेन[७] तु चिन्त्यप्रयोजन-

---

१. 'प्रौढमनोरमायाम्' पूर्वसदृश०' इति सूत्रे षष्ठे पृष्ठे ।
२. काशिकायाम् 'पूर्वसदृश०' इति सूत्रे ४७ तमे पृष्ठे ।
३. पदमञ्जर्याम् 'पूर्वसदृश०' इति सूत्रे ४७ तमे पृष्ठे ।
४. प्रसादटीकायाम् 'पूर्वसदृश०' इति सूत्रे ७९५ तमे पृष्ठे ।
५. शब्दरत्ने 'पूर्वसदृश०' इति सूत्रे षष्ठे पृष्ठे ।
६. प्रदीपे 'पूर्वसदृश०' इति सूत्रे ३७४ तमे पृष्ठे ।
७. बृहच्छब्देन्दुशेखरे 'पूर्वसदृश०' इति सूत्रे ९९७–९९८ तमपृष्ठयोः ।

मुक्तम् । मुग्धबोधव्याकरणे[1] 'तत्पुरुषसमासे ऊनार्थग्रहणाद् एकोनः, पुण्यहीनः, विकाररहितेति सिद्धयति' इत्युक्तम्, तेन अभिधेयपरकत्वमर्थशब्दस्यायाति ।

समीक्षात्मकदृष्ट्या विचारेऽत्र सूत्रेऽर्थशब्दोऽभिधेय पर एव । यतो हि कस्यचिदपि शब्दस्य कृते उचितानुचितविवेके लक्ष्यस्यैव प्रामाण्यम् । तत्रार्थशब्दस्य कोषादौ विषयः, याञ्च्या, धनम्, कारणम्, वस्तु, शब्दप्रतिपाद्यः, अभिधेयः, निवृत्तिः प्रयोजनम्, प्रकारादयोऽनेकेऽर्था निगदिताः, तेष्वत्रत्यार्थग्रहणमभिधेयपरकं सिद्धयति । यतो हि लक्ष्यग्रन्थेऽनेकस्थले ऊनार्थशब्दानां तृतीयान्तेन समस्तप्रयोगो लक्ष्यते । यथा वाल्मीकि रामायणे[2]—'निशा नक्षत्रहीनेव' इत्यस्मिन् श्लोके ऊनार्थकहीनशब्देन सह समासः । मनुस्मृतावपि[3]—'हीनजातिस्त्रियं मोहात्' एवं महाभारते[4]—'प्रार्थयन्तिजनाः सर्वे पतिहीनां तथास्त्रियम्' इत्यत्र च ऊनार्थेन समासो दृश्यते । कालिकापुराणेऽपि—

जातिहीनं वित्तहीनं रूपहीनमदक्षिणम् ।
हीनाङ्गमतिरिक्ताङ्गं तेन दोषेण नाक्षिपेत् ॥अ० ४४॥

इत्यत्र तृतीयार्थेनोनार्थेन सह समासः । अत एव तत्त्वबोधिनी कारेण 'ऊन' इत्यस्यावरोऽपि पर्य्यायो दर्शितः तेन 'अवरस्योपसंख्यानम्' इति वार्त्तिकं व्यर्थमित्युक्तम् ।

'आचारहीनं न पुनन्तिवेदाः' (मनु० ३।१६५) इत्यादौ च हीनशब्दस्य तृतीयान्तेनाऽऽचारशब्देन सह समासो भवति । यद्यपि भाष्ये[5] 'तृतीयातत्०' ( २।१।३० ) इति सूत्रे तत्रत्यार्थग्रहणं खण्डितम् । किन्तु तद्भाष्यस्यैकदेशित्वमेव

---

१. मुग्धबोधे 'तत्पुरुषसमासे' ४६ तमे पृष्ठे ।
२. वाल्मीकीयरामायणे २१३ तमे पृष्ठे ( ६६ सर्गे २४ तमः श्लोकः )
३. मनुस्मृतौ तृतीयाध्यायस्य पञ्चविंशतितमः श्लोकः ।
४. महाभारते आदि पर्वणि १५८ तमाध्यायस्य ( वकवधे द्वादशः श्लोकः )
५. भाष्ये 'तृतीया०' इति सूत्रे ३७४ तमपृष्ठे ( पूर्वसदृशसमोनार्थग्रहणं न कर्त्तव्यं भवति ) ।

लक्ष्यते, अन्यथोदाहृतानां प्रयोगाणां सिद्धिर्न स्यात्। कैयटेन[1] नागेशेन[2] च प्रकृतसूत्रभाष्ये 'ऊन' इत्यस्यार्थपरत्वं स्वीकृतम्। अथवा तृतीयेति सूत्रस्यार्थशब्देन स्वरूपं गृहीत्वा तथा प्रयोजनं तथात्रत्यार्थग्रहणस्य स्वरूपं गृहीत्वा समासेऽर्थग्रहण-मनर्थकमेतत्तात्पर्यैणैवार्थग्रहणं न कर्त्तव्यमित्यत्रत्यार्थग्रहणस्य भाष्यकृत्खण्डित-वचनस्य तात्पर्यम्। ध्वनितं च कैयटेन[3] तत्रैव। न तु सामान्येन निष्प्रयोजन-त्वम्। अतोरत्नकारोक्तमेवाकिञ्चत्करम्।

## प्रातिपदिकार्थविचारः

१—सूत्रार्थः।

२—भिन्न-भिन्नप्रातिपदिकार्थस्वरूपे वैयाकरणानां विचारदानप्रदर्शनम्।

३—भट्टोजिदीक्षितमतेन नियतोपस्थितिकः प्रातिपदिकार्थ इति प्रातिपदिकार्थ-स्वरूपम्।

४—दीक्षितोक्तस्वरूपे विदुषां सम्मतिः।

५—शब्दरत्नकारमतेन 'प्रवृत्तिनिमित्ततदाश्रयश्च' इति प्रतिपादिकार्थस्व-रूपम्।

६—प्रवृत्तिनिमित्ततदाश्रयश्चेति पक्षे वैयाकरणानां सम्मतिः।

७—अपाणिनीयव्याकरणे प्रातिपदिकार्थपदेन गृहीत स्वरूपनिदर्शनम्।

८—युक्तायुक्तत्वसमीक्षणम्।

'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (२।३।४६) इत्यनेन सूत्रेण

---

१. 'पूर्वसदृश०' इति सूत्रे प्रदीपे ३७४ तमे पृष्ठे (पूर्वसूत्रे अर्थशब्देन समासस्य साधितत्वादिहार्थग्रहणमूनेनाभिसंबध्यमानं तदर्थानां विकलादीनां समासं साधयति)।

२. 'पूर्वसदृश०' इति सूत्रे उद्योते ३७४ तमे पृष्ठे 'ऊनशब्दोऽर्थपरः अर्थेन समासासम्भवाच्च तद्वाचिनां ग्रहणं तच्चाविशेषात्सर्वेषामिति भावः।

३. 'पूर्वसदृश०' इति सूत्रे प्रदीपे ३७४ तमे पृष्ठे 'अर्थप्रधानत्वान्निर्देशस्योनार्था-नामन्तरेणाप्यर्थग्रहणं समासस्य सिद्धत्वात्।'

प्रातिपदिकार्थमात्रे, लिङ्गमात्राद्याधिक्ये, परिमाणमात्रे वचनमात्रे च प्रथमा विभक्तिर्भवति ।

तत्र कोऽसौ प्रातिपदिकार्थपदार्थो यत्र प्रथमा विधीयत इति जिज्ञसायामिह विदुषां सम्मतिप्रदर्शनपूर्वकं विचारः प्रस्तूयते। तथाहि अस्यापरपर्य्यायः-नामार्थः, अभिधेयार्थोवा। अन्वर्थसंज्ञया[1]—पदं-पदं प्रतिपदम्, तस्यार्थः प्रातिपदिकार्थ इति तु वक्तुं नोत्सहते। यतो हि सुप्तिङन्तं पदम् भवति। तत्र धातुभिन्नस्य शब्द-स्वरूपस्य पदत्वं प्रातिपदिकं विना न सम्भवति। अतः प्रतिपदमर्हतीति ठञि-प्रातिपदिकम्। यस्यार्थः प्रातिपदिकार्थः।

अत्र विचार प्रसङ्गे धातुभिन्नस्य, प्रत्ययभिन्नस्य, प्रत्ययान्त-तदादिभिन्नस्य अर्थवतः शब्दस्वरूपस्य कृदन्ततद्धितान्त-समस्तपदस्य, कृतद्धितसूत्रे चकारग्रहणेन 'अनर्थकस्य निपातस्य प्रातिपदिकसंज्ञा वक्तव्या'[2] इति भाष्यवार्त्तिकेन च स्वार्थ-द्रव्य-लिङ्ग-संख्या-कारकेति सर्वेषां प्रातिपदिकार्थपदेन ग्रहणं भवति। 'अनेकमन्यपदार्थे'[3] (२।२।२४), 'कालाः[4] परिमाणिना' (२।२।५) इति सूत्रे भाष्ये च 'अभिहितः सोऽर्थोऽन्तरभूतः प्रातिपदिकार्थ इत्युक्तम्। तत्राभि-हितः = उक्त इत्यर्थस्वीकारे उक्तार्थे सर्वत्र प्रथमा। उक्तार्थश्च कारकपदार्थः तत्र सर्वत्र प्रथमाप्राप्तावपि कर्मादिसंज्ञार्थं 'कर्तुरीप्सिततमं कर्म' (१।४।४९) इति सूत्रारम्भणान्यकारकस्य विवक्षायाम्, सम्बन्धस्य च प्रतीतौ प्रथमाभावः। अतः कर्मादिकारकस्य सम्बन्धस्य चाप्रतीतौ विभक्त्यर्हे शब्दस्वरूपे प्रातिपदिकार्थता तद्योगे च प्रथमा। अस्य सामान्यप्रातिपदिकार्थस्वरूपस्य सत्ता स्वीकारे षोढा प्रातिपदिकार्थः सम्पद्यते। तत्र पञ्चकं प्रातिपदिकार्थ इति भट्टोजिदीक्षित-स्याधोलिखितकारिकातो गम्यते। सा च '—

---

१. 'कारके' इति सूत्रे भाष्ये २४२ तमे पृष्ठे 'अन्वर्थसंज्ञया यथा विज्ञायेत' इत्युक्तम्।

२. 'अर्थवत्०' इति सूत्रे भाष्ये ४९ तमे पृष्ठे।

३. 'अनेकमन्यपदार्थे इति सूत्रे भाष्ये ४५० तमे पृष्ठे।

४. 'कालापरिमाणिने' ति सूत्रे भाष्ये ४२० तमे पृष्ठे।

एकं द्विकं त्रिकं चेति चतुष्कं पंचकं तथा ।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥

इति । यस्य व्याख्यानं भूषणे दृश्यते । किन्तु सामान्येन प्रातिपदिकार्थ-पदार्थस्य स्वीकारे 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ( २।२।४६ ) इति सूत्रे लिङ्गादिशब्दोपादानानर्थक्यमतो भिन्न-भिन्नाचार्यैभिन्न-भिन्नपक्षस्य समर्थनं विहितम् ।

अत्र 'एकम्' इति व्याडिवाजप्यायनयोः पक्षः । तत्रापि 'आकृतिः' इति वाजप्यायनः,[१] द्रव्याभिधानमिति' व्याडिः[२] । भूषणसारेऽपि उदाहृतम्—

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् ।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति[३] ॥

एवं भट्टपादेनापि —

अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः ।
आकृतेः प्रथमज्ञानात् तस्या एवाभिधेयता[४] ॥ इत्युक्तम् ।

काशिकाकारमतेन,[५] प्रक्रियाकौमुदीकारमतेन[६], प्रसादकारमतेन[७], रूपावतारकारमतेन[८] च प्रातिपदिकार्थः = सत्ता, तेनानर्थकस्य निपातस्य प्रथमा । अतो ऽध्यागच्छति, 'प्रलम्बते' इति सिद्धयति । तत्र समुपलभ्यमानेषु ग्रन्थेषु पाणिनिव्याकरणनिकाये काशिकातः पूर्वं सत्तार्थो नोपलभ्यते ।

---

१. 'सरूप०' इति सूत्रे भाष्ये ९० तमे पृष्ठे ।
२. 'सरूप०' इति सूत्रे भाष्ये ९४ तमे पृष्ठे ।
३. वैयाकरणभूषणसारे नामार्थनिर्णये ७८ तमे पृष्ठे ।
४. वैयाकरणभूषणसारस्य सरलाटीकायाम् ७७ तमे पृष्ठे सङ्कलितः ।
५. काशिकायाम् 'प्रातिपदिकार्थ०' इति सूत्रे २०१ तमे पृष्ठे ।
६. प्रक्रियाकौमुद्याम् 'प्रातिपदिकार्थ०' इति सूत्रे ३८० तमे पृष्ठे ।
७. प्रसादटीकायाम् 'प्रातिपदिकार्थ०' इति सूत्रे ३८० तमे पृष्ठे ।
८. रूपावतारे 'प्रातिपदिकार्थ०' इति सूत्रे सप्तविंशति पृष्ठे ।

न्यासकारमतेन,[1] पदमञ्जरीकारमतेन[2] च सत्ताग्रहणमुपलक्षणम्। अतः योऽर्थः सन्नेव केवलं न जात्यादिरूपो लिङ्गसंख्याकारकान्वयी वा स प्रातिपदिकार्थः।

अथवाऽन्वयव्यतिरेकाभ्यां यस्य योऽर्थः प्रतीयते, यमर्थं प्रातिपदिकं न व्यभिचरिष्यति स प्रातिपदिकार्थः। अथवा कैयटाऽनुसारेण यत्रार्थान्तरनिरपेक्षः शब्दस्य प्रवृत्तिः स प्रातिपदिकार्थः।

सरूपसूत्रे 'नह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः। उभयोरुभयं पदार्थः। कस्यचित् किंचित् प्रधानभूतम्, किंचिद्द्रव्यभूतम्। आकृतिपदार्थकस्याऽऽकृतिः प्रधानभूता द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतम् आकृतिर्गुणभूता' इति भाष्यसिद्धान्तेन[3] 'द्विकम्' इति पक्षस्य पुष्टिर्भवति। 'तत्रोपपदं सप्तमीस्थम्' (३।१।९२) इति सूत्रस्थ 'उपपदसंज्ञायां समर्थवचनम्' इति वार्त्तिकस्य[4] प्रदीपे 'चतुष्कम्' पञ्चकम्' इति पक्षस्य च निर्देशः। एवम्—

ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते, पृथगवस्थिते ॥ १।५५ ॥

इति वाक्यपदीयेन शब्दशक्तेः प्रातिपदिकत्वस्वीकारे षोढा पक्षस्य सिद्धिर्भवति।

भट्टोजिदीक्षितमतेन[5] तु नियतोपस्थितिकः प्रातिपदिकार्थः। यस्मिन् प्रातिपदिक उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थः। तेन 'कुमारी' 'वृक्षः' प्रभृतिशब्दानां प्रातिपदिकार्थत्वम्। लिङ्गग्रहणस्योदाहरणं तु तटः, तटी, तटम् इति।

यतो हि 'तटः', 'तटी', 'तटम्' इत्यादौ कदाचित् पुंस्त्वस्य, कदाचित् स्त्रीत्वस्य, कदाचित् नपुंसकत्वस्य भानेन नियतोपस्थितिकत्वाभावेन न प्राति-

---

१. न्यासे 'प्रातिपदिकार्थ०' इति सूत्रे २०१ तमे पृष्ठे।
२. पदमञ्जर्याम् 'प्रातिपदिकार्थ०' इति सूत्रे २०१ तमे पृष्ठे।
३. सरूपसूत्रे भाष्ये ९८-९९ तमपृष्ठयोः।
४. 'तत्रोपदम्०' इति सूत्रे कैयटे ११९ तमे पृष्ठे।
५. 'प्रौढमनोरमायाम् 'प्रातिपदिकार्थ०' इति सूत्रे ७५७-७६०तमपृष्ठपर्यन्तम्।

पदिकार्थः । भट्टोजिदीक्षितात् पूर्वं कैयटेन लिङ्गग्रहणस्येदमुदाहरणं दत्तम् । अस्य समर्थनं तत्त्वबोधिनीकारेणापि[1] कृतम् ।

भाष्कारेण[2] तु 'कुमारी', 'कुण्डम्', 'वृक्षः' इति लिङ्गग्रहणस्योदाहरणं दत्तम् । पूर्वोक्तेषूदाहरणस्थलेषु भट्टोजिदीक्षितमतेन नियतोपस्थितिकत्वादेव प्रथमा सिद्धौ भाष्यकारस्य लिङ्गग्रहणस्योदाहरणासंगतिर्भवेत् । अतः प्रवृत्तिनिमित्तं तदाश्रयश्चेति द्विकं प्रातिपदिकार्थं इति हरिदीक्षितस्य[3] पक्षः । अन्यमतस्यसमर्थनं[4] नागेशेन, वैयाकरणसिद्धान्तकौमुद्याः[5] दाधिमथटीकाकारेण च कृतम् । अयमेव पक्षो भाष्यसम्मतत्वाद् मान्यः प्रतिभाति ।

सामान्येनप्रातिपदिकार्थस्वरूपस्वीकारे त्वर्थे प्रथमा इत्येव सारो यो मनोरमायामुक्तः स एवोचितः । अत एव चान्द्रव्याकरणेऽपि[6] 'अर्थमात्रे प्रथमा' ( २।१।९३ ) इत्येव सूत्रम् । सरस्वतीकण्ठाभारणस्य टीकाकारेण नारायणशास्त्रिणा[7] अर्थवत् सूत्रे स्वार्थः, द्रव्यम्, लिङ्गम्, संख्या, शक्तिः, द्योत्यश्चेति समुच्चयार्थः प्रातिपदिकार्थं उक्तः । वोपदेवेनापि—

उणाद्यन्तं कृदन्तं च तद्धितान्तं समासजम् ।
शब्दानुकरणं चैव नाम पञ्चविधं स्मृतम् ॥

इत्युक्तम् । सारस्वतेऽपि[8] 'अविभक्तिनाम्' इति कथनेन सामान्यस्यैव ग्रहणम् । तेन लिङ्गादीनां प्रातिपदिकार्थे एव गतार्थतेति । किन्तु भाष्यव्याख्यानुसारेण तु शब्दरत्नाकारोक्तमतम् एव युक्तितरम् ।

---

१. तत्वबोधिन्याम् 'प्रातिपदिकार्थ०' इति सूत्रे १५७ तमे पृष्ठे ।
२. 'प्रातिपदिकार्थ०' इति सूत्रे भाष्ये ५१३ तमे पृष्ठे ।
३. शब्दरत्ने 'प्रातिपदिकार्थ०' इति सूत्रे ७५७-७६१ तमपृष्ठपर्यन्तम् ।
४. लघुशब्देन्दुशेखरे 'प्रातिपदिकार्थ०' इति सूत्रे ४२५-४२८ तमपृष्ठपर्यन्तम् ।
५. दाधिमथे 'प्रातिपदिकार्थ०' इति सूत्रे १५७ तमे पृष्ठे ।
६. चान्द्रे 'अर्थमात्रे०' इति सूत्रे १८३ तमे पृष्ठे ।
७. 'अर्थवत्०' इति सूत्रे सरस्वतीकण्ठाभरणस्य टीकायां सप्तमे पृष्ठे ।
८. सारस्वते 'अविभक्तिनाम०' इति सूत्रे ६८-६९ तमयोः पृष्ठयोः ।

## परिमाणग्रहणविचारः

१—'प्रातिपदिकार्थ०' इति सूत्रे परिमाणग्रहणं द्रोणो व्रीहिः परिछेद्य-परिछेदकभावेनान्वयार्थं भट्टोजिदीक्षितनयेन।

२—शब्दरत्नकारमतेन 'प्रातिपदिकार्थ०' इति सूत्रे परिमाणग्रहणं द्रोणो व्रीहि इत्यत्र प्रथमा सिद्ध्यर्थम्।

३—भट्टोजिदीक्षितोक्त मतस्य कृते वैयाकरणानां सम्मति दानम्।

४—शब्दरत्नकारोक्तमते वैयाकरणानां भावप्रदर्शनम्।

५—अपाणिनीयव्याकरणेऽत्र विषये विचारः।

६—युक्तायुक्तत्वसमीक्षणाम्।

७—स्वमतप्रदर्शनम्।

'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (२।३।४६) इति सूत्रेण प्रातिपदिकार्थमात्रे, लिङ्गमात्राधिक्ये, परिमाणमात्रे, वचनमात्रे च प्रथमा विधीयते।

प्रातिपदिकार्थमात्रस्योदाहरणम् 'उच्चैः', 'स्त्री', 'पुमान्', इत्यादि। लिङ्गमात्राधिक्यस्य तटाद्युदाहरणम्। परिमाणमात्रस्य 'द्रोणो व्रीहिः' इत्युदाहरणम्। वचनमात्रस्य एकं द्वयाद्युदाहरणम्।

तत्र दीक्षितमतानुसारेण[1] नियतोपस्थितिकः प्रातिपदिकार्थः। तस्य तथात्व-स्वीकारे 'द्रोण'-शब्दस्यापि नियतोपस्थितिकतया तत्रापि प्रातिपदिकार्थबलेनैव प्रथमा-सिद्धौ सूत्रे परिमाणग्रहणवलेन 'द्रोणो व्रीहिः' इत्यत्र द्रोणशब्दे प्रथमा-साधनं तु परिच्छेद्य परिच्छेदकभावेनान्वयार्थम्।

शब्दरत्नकारोक्तमतानुसारेण[2] तु प्रवृत्तिनिमित्ततदाश्रयरूपप्रातिपदिकार्थ-स्वीकारे परिमाणरूपार्थे 'द्रोण'—शब्दे प्रातिपदिकार्थत्वादधिकमाने प्रथमा न स्यात्। तत्र प्रथमा-सिद्ध्यर्थं परिमाणग्रहणम्। व्रीह्यादिपदेन सहान्वयस्तु लक्षणया भविष्यति।

---

१. प्रौढमनोरमायाम् 'प्रातिपदिकार्थ०' इति सूत्रे ७६१-७७० तमपृष्ठपर्यन्तम्।
२. शब्दरत्नस्य 'प्रातिपदिकार्थ०' इति सूत्रे ७६१-७७० तमपृष्ठपर्यन्तम्।

भट्टोजिदीक्षितोक्तस्य समर्थनं तत्वबोधिनीकारेण[१], रत्नकारोक्तस्य समर्थनं नागेशेन[२], भैरवीकारेण[३], दाधिमथादिना[४] च कृतमस्ति ।

षोढा प्रातिपदिकार्थस्वीकारे सारस्वतव्याकरणस्य[५], चान्द्रव्याकरणस्य[६], मुग्धबोधव्याकरणस्य[७], सरस्वतीकण्ठाभरणस्य[८] नारायणशास्त्रिकृतटीकाद्यनुसारेण च प्रातिपदिकार्थस्वीकारे, प्रकृतसूत्रस्थ परिमाणग्रहणं निष्प्रयोजनमेव ।

वाजप्यायन-व्याडि-पाणिनि-भाष्यकार-वाक्यपदीयकार-काशिकाकार-पदमञ्जरीकार-रूपावतारकार-प्रक्रियाकौमुदीकार-प्रसादटीकाकारप्रभृतीनां विद्वद्धौरेयाणां मतानुसारेण[९] प्रातिपदिकस्वरूपस्वीकारे तु सूत्रे परिमाणग्रहणं प्रथमा सिद्ध्यर्थमेव । अत एव महाभाष्ये परिमाणग्रहणस्य 'द्रोणः', 'खारी', 'आढकम्' इत्यत्र प्रथमासिद्धिरिति फलदानस्य साफल्यम् । भट्टोजिदीक्षितस्य स्वोपज्ञोदाहरणे 'द्रोणो व्रीहिः' इत्यत्र व्रीहिपदोत्तरं यथा प्रथमा, तथैव द्रोणपदोत्तरमपि स्यादिति तु वक्तुं न शक्यते । यतोह्यभेदान्वयस्थले विशेष्य-विशेषणवाचकपदयोः समानविभक्तिकत्वनियमो भवति, यथा 'नीलो घटः' ।

वस्तुतस्तु प्रकृते द्रोणशब्दो व्रीहिशब्दं प्रति न विशेषणम्, अपि तु द्रोणशब्दः परिमाणपरः, तस्य व्रीह्यादिशब्देन सह परिमितत्वद्योतन एव तात्पर्यम् । अतोऽत्र

---

१. तत्त्वबोधिन्याम् 'प्रातिपदिकार्थ०' इति सूत्रे १५७ तमे पृष्ठे ।

२. लघुशब्देन्दुशेखरे 'प्रातिपदिकार्थ०' इति सूत्रे ४२९-४३१ तमपृष्ठपर्यन्तम् ।

३. भैरवीटीकायाम् 'प्रातिपदिकार्थ०' इति सूत्रे ७६१-७७० तमपृष्ठपर्यन्तम् ।

४. दाधिमथटीकायाम् 'प्रातिपदिकार्थ०' इति सूत्रे १५७ तमे पृष्ठे ।

५. सारस्वतव्याकरणे 'अविभक्तिनाम्०' इति सूत्रे ६८-६९ तमयोः पृष्ठयोः ।

६. चान्द्रव्याकरणे १८३ तमे पृष्ठे ।

७. मुग्धबोधव्याकरणे 'त्यर्थसम्बुद्ध्युक्तार्थेप्री०' ( २८१ ) इति सूत्रे २६३-२६७ तमपृष्ठपर्यन्तम् ।

८. सरस्वतीकण्ठाभारणस्य टीकायाम् 'अर्थवत्०' इति सूत्रे सप्तमे पृष्ठे ।

९. वाजप्यायन-व्याडि-पाणिनि-भाष्यकारप्रभृतिभिर्विद्वद्धौरेयैर्यथा प्रातिपदिकस्वरूपं स्वीकृतं तस्य व्याख्यानं 'प्रातिपदिकार्थपदार्थ विचारः' इति निबन्धे कृतं मयेति ।

प्रथमां विहाय षष्ट्यापत्तिः, तद्वारणाय प्रथमा सिद्धयर्थं परिमाणग्रहणमिति शब्द-रत्नकारोक्तमतमेवादरणीयम् ।

मन्मते तु 'द्रोणः', 'खारी', 'आढकम्' इत्यादिषु स्वतन्त्रप्रयोगस्थलेष्वेतादृश-शब्दानां परिमाणपरकत्वेन प्रातिपदिकार्थाधिक्य बोधनेन प्रथमा सिद्धयर्थं परिमाणग्रहणम् । 'द्रोणो व्रीहिः' इत्यादिस्थले तु 'द्रोणपरिमितो व्रीहिः' इति बोधेऽपि परिमाणवाची द्रोणशब्दस्य व्रीहिं प्रति विशेषणताऽस्त्येव । सा चाऽभे-देनैव । यथा 'नीलो घटः' इत्यत्र नीलपदस्य नीलद्रव्ये शक्तिः, तथैव 'द्रोणो व्रीहिः' इत्यत्र द्रोणशब्दस्य द्रोणपरिमाणे द्रव्ये शक्तिः । एवं यथा नीलद्रव्यार्थं-वाचकनीलशब्दस्य घटेनाभेदान्वये नीलाभिन्नो घट इति बोधः, तथैव परिमाण-वाचकद्रोणशब्दस्य व्रीहिपदेनाभेदान्वये 'द्रोणाभिन्नो व्रीहिः' इति बोधे द्रोणशब्दे समानविभक्तिकत्व नियमेनैव प्रथमा स्यात् । एतादृशस्थलकृते सूत्रे परिमाणग्रह-णम्, परिच्छेद्यपरिच्छेदकभावेनान्वयार्थमेव । नीलाभिन्नो घट इत्यस्य नीलरूप-विशिष्टो घट इत्यपि यथा बोधः, 'द्रोणो व्रीहिः' इत्यस्य द्रोणविशिष्टव्रीहिरिति बोधाभावेन न तादृशी व्यवस्थेति वक्तुं नोचितम् । यतो हि 'नीलाभिन्नो घटः' इत्यस्य यथा नीलरूपविशिष्टो घट इत्यपि बोधः, तथैव द्रोणाभिन्नो व्रीहिरित्यस्य 'द्रोणपरिमाणविशिष्टो व्रीहिः' इति बोधे न कश्चन दोषः । एवं यथा नीलादि-शब्दस्य 'सत्वे निविसतेऽपैति' इति बोतो गुणवचनात्' ( ४।१।४४ ) इति सूत्र भाष्यस्थ गुणलक्षणे गतार्थत्वेन विशेषणता सम्भवः, तथैव द्रोणादिशब्देऽप्यस्त्येव । यथा नीलरूपः कस्यचिद् द्रव्यस्यैव भवति न स्वतन्त्रः, तथैव द्रोणपरिमाणमपि कस्यचिद् द्रव्यस्यैव । भाष्यस्वारस्येन 'द्रोणः', 'खारी' इत्यत्र प्रथमा-सिद्धयर्थं परिमाणग्रहणम् । तद् विरुद्धं 'द्रोणो व्रीहिरित्यत्र परिच्छेद्य-परिच्छेदकभावेना-न्वयार्थं फलकथनं त्वनुचितमेव । यतो हि 'द्रोणो व्रीहि' इत्यत्र द्रोणपदस्य प्रथमा सिद्धिस्तु समानविभक्तिकत्व नियमेन, परिच्छेद्य-परिच्छेदकभावेनान्वयस्तु लक्षणयापि स्यात् । अतो युक्तं भाष्योक्तमेव फलम् । तेन 'अर्थे प्रथमा' इति पक्षे 'गौर्वाहीकः', 'सिंहोमाणवकः' इति वत् 'द्रोणो व्रीहिः' इत्यत्र द्रोणशब्दस्य तत्प-रिमिते उपचारे 'द्रोणो व्रीहिः' इति सिद्धे परिमाणग्रहणस्य प्रत्याख्यानं दीक्षितस्य संगच्छत इति ।

मनोरमाखण्डनकारेण चक्रपाणिना[1] द्रोणो व्रीहिमानयेत्यादाविवेहापि द्रोण-पदस्य तत्परिमितलक्षणयैवोपपत्तौ प्रथमायाः परिमाणे मानाभावात् प्रथमा-सिद्धयर्थं परिमाणग्रहणमिति सुधियो विभावयन्तु ।

## नित्यग्रहणविचारः

१—सूत्रार्थः ।

२—भट्टोजिदीक्षितमतेन 'नित्यं०' इति सूत्रे नित्यग्रहणं तक्रकौण्डिन्यन्यायस्यानित्यत्व प्रतिपादनार्थम् ।

३—शब्दरत्नकारमतेन 'नित्यं०' इति सूत्रे नित्यग्रहणं व्यर्थम् ।

४—काशिकाकारेण न्यासकारेण च नियमार्थमुक्तम् ।

५—नित्यग्रहणस्य व्यर्थत्वोपपादने वैयाकरणानां सम्मतिः ।

६—युक्तायुक्तत्व समीक्षणम् ।

गत्यर्थो कुटिलगमनस्य यत्र भानं तत्रैव 'नित्यं कौटिल्ये गतौ' ( ३।१।२३ ) इत्यनेन सूत्रे यङ् विधीयते, न क्रियासमभिव्याहारे इति सूत्रार्थः ।

अत्र सूत्रे नित्यशब्दोऽवधारणार्थः । तेन तक्रकौण्डिन्यन्यायोऽनित्य इति । अत एव पूजितो यः सुरासुरैः इत्यादौ भूतार्थे क्त प्रत्ययो भवति । अन्यथा स मतिबुद्धिपूजार्थेभ्यः ( ३।२।१८८ ) इति सूत्रे वर्तमानेन क्तेन बाध्येत । ततश्च कर्तरि तृतीया न स्यात् । वर्तमाने क्त प्रत्यये तु क्तस्य च वर्तमाने ( २।३।६७ ) इति षष्ठी स्यादिति मनोरमाशयः[2] ।

---

१. प्रौढमनोरमाखण्डने प्रातिपदिकार्थे इति सूत्रे ६५ तमे खण्डे अत्र परिमाणं प्रातिपदिकार्थः । तत्र च प्रकृत्यर्थोऽभेदेन प्रकारस्तद्धितार्थदेवतायामिव । तेन द्रोणो व्रीहिरित्यत्र द्रोणाभिन्नपरिमाणपरिच्छिन्नव्रीहिरित्यर्थ इति केचित् । तन्न द्रोणोव्रीहिमानयेत्यादाविवेहापि द्रोणपदस्य तत्परिमित लक्षणयैवोपपत्तौ प्रथमायाः परिमानार्थत्वे मानाभावात् । 'तन्मात्रेविधीयमानप्रथमेदमस्यादिविपरिमाणमात्राधिक्ये प्रथमाविधानेन तत्सार्थक्यात् ।'

२. प्रौढमनोरमायाम् नित्यं० इति सूत्रे ४७८–४७९ तमयोः पृष्ठयोः ।

शब्दरत्नकारमतेन[1] तक्रकौण्डिन्यन्यायस्य विधेय विषयेऽचरितार्थविषये च प्रवृत्तिरिति मिदचोन्त्यात् परः ( १।१।४७ ) इति सूत्रे निगदितम्। क्रियासमभिव्याहारादेर्यङ्द्योत्यतया तद्वृत्तेर्धातोरित्यर्थेन अत्रानुवाद्यत्वविषयो न विधेय विषयः। तेन नित्यग्रहणं विना सूत्रस्याचारितार्थ्यं न शङ्क्यम्, क्रियासमभिव्याहाराविवक्षायां धातोरेकाच० ( ३।१।२२ ) इति सूत्रस्य अचारितार्थ्ये नित्यग्रहणाभावे न क्षतिः।

काशिकाकारेण[2] न्यासकारेण च नित्यग्रहणं[3] विषयनियमार्थमुक्तम्-गति वचनाद् नित्यं कौटिल्य एव नान्यथेति।

शब्दरत्नकारेण यथा प्रतिपादितम् नागेशेन[4] तु तथैव सर्वमुपपादितम्।

अत्र मतद्वये रत्नकारोक्तमेव युक्तमाभाति। 'पूजितो यः सुरासुरैः' इत्यत्र वर्तमाने क्तप्रत्ययं विहाय भूते क्तप्रत्यये सत्यपि, तक्रकौण्डिन्यन्यायस्यानित्यत्वेन तत्साधनमनुचितम् अपि तु तत्र बाध्यबाधकभावस्य विजय एव नास्ति। यतो हि वर्तमानार्थे एव 'पूज' इति धातोः 'मतिबुद्धि०' ( ३।२।१८८ ) इत्यनेन 'क्तप्रत्ययो भवति, न तु भूतार्थे। उक्तस्थले 'निष्ठा' ( ३।२।१०२ ) इति सामान्यसूत्रेण भूतकालविवक्षायां क्तःसिद्धयति। तक्रकौण्डिन्यन्यायस्य 'विधेयविषयेऽचरितार्थे विषये च प्रवृत्तिः 'इत्यत्र मानं तु 'मिदचोन्त्यात् परः[5]' ( १।१।४७ ) इति सूत्रस्थभाष्यमेव। पदमञ्जरी[6] कारेणापि 'गतिवचनात् कौटिल्ये एव अन्यथा न्यायेन बाधः स्यात्। एवम् अनभिधानं नित्यग्रहणस्योपपादितम्। तेन तन्न्यायस्यात्र विषयाभावेव। अतः 'धातोरेकाच्०'[7]

---

१. शब्दरत्ने नित्यं० इति सूत्रे ४७८-४७९ तमयोः पृष्ठयोः।

२. काशिकायाम् 'नित्यं०' इति सूत्रे ३८४ तमे पृष्ठे।

३. न्यासे 'नित्यं' इति सूत्रे ३८४ तमे पृष्ठे।

४. बृहच्छब्देन्दुशेखरे 'नित्यं'० इति सूत्रे १८५५ तमे पृष्ठे।

५. भाष्ये 'मिदचोन्त्यात्०' इति सूत्रे २५७ तमे पृष्ठे ( मिदचोन्त्यात् पर ............चापवादः )।

६. पदमञ्जर्याम् 'नित्यं०' इति सूत्रे ३८३-३८४ तमयोः पृष्ठयोः।

७. 'धातोरेकाच्०' इति सूत्रे भाष्ये ५१ तमे पृष्ठे।

( ३।१।२२ ) इति सूत्रे प्रकृतसूत्रस्थनित्यग्रहणखण्डनं संगच्छते । अत्रत्य नित्यग्रहणानर्थक्यं न केवलं भाष्य एव, अपि तु वाक्यपदीयेऽपि—

क्रीडायां जीविकायां च वाक्येनावचनात् तथा ।
न नित्यग्रहणं युक्तं कौटिल्ये यङ्विधौ तथा[1] ॥

हेलाराजेनापि[2] प्रत्याख्यानपरकमेव व्याख्यातम् । प्रदीपकारेणापि[3] तथैव निगदितम् । इति सुधियो विभावयन्तु ।

---

## 'ई' इति दीर्घनिर्देशविचारः

१—सूत्रार्थः ।
२—भट्टोजिदीक्षितमतेन 'ई च खनः' इत्यत्र ह्रस्वपाठः सुवचः ।
३—शब्दरत्नकारनयेन दीर्घपाठ एवोचितः ।
४—दीक्षितोक्तस्य बीजम् ।
५—दीर्घपाठस्य समर्थने वैयाकरणानां सम्मतिः ।
६—अपाणिनीयव्याकरणे अस्य सूत्रस्य स्थाने सूत्रस्वरूपनिदर्शनम् ।
७—युक्तायुक्तत्वसमीक्षणम् ।
८—स्वमतम् ।

---

१. वाक्यपदीये तृतीये काण्डे २३ तमे पृष्ठे ।
२. 'धातोरेकाच सूत्रस्थस्य क्रिया समभिव्याहारे च नैतेभ्यः' वार्त्तिकस्य व्याख्याने प्रदीपे ५१ तमे पृष्ठे ।
३. हेलाराजव्याख्यायां 'क्रीडायां·········तथा । ( ४० ) इति वाक्यपदीय-व्याख्याप्रसंगे २३ तमे पृष्ठे । ( उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्य-ग्रहणानर्थक्यम्' इति वार्त्तिककारमतप्रदर्शनपूर्वकं 'कुटिलं क्रामति' इति वाक्येनाऽसदाचारस्यापि भाने मात्र कुटिलगमनस्याभाने चङ्क्रम्यते' इत्यनेन गतप्रत्यागतोपाधिः क्रियाविशेषः प्रतीयते । तेन नित्यग्रहणं प्रत्याख्येय-मित्युक्तम् ।

'ई च खनः' ( ३।१।१११ ) इति सूत्रे चकारेण 'एतिस्तुशास्वृदृजुषः क्यप्' ( ३।१।१०९ ) इत्यतः क्यब् गृह्यते। धातोरधिकारे पठितत्वेन 'खन'—धातोर्ग्रहणम्। तेन खनधातोः। क्यप् प्रत्ययो भवति, धातोर्नकारस्येकारादेशश्च इति सूत्रार्थः।

अत्र 'खन' धातोः प्रकृतसूत्रेण क्यपि, अनुबन्धलोपे, धातोर्नकारस्येकारे, गुणो, विभक्तिकार्ये, खेयमिति सिद्धयति। अस्य रूपस्य सिद्धिर्ह्रस्वेकारादेशेऽपि सम्भवति। सूत्रे दीर्घनिर्देशो व्यर्थं एव।

यद्यपि ह्रस्वपाठे 'ये विभाषा' ( ६।४।४३ ) इति सूत्रे 'ये' इत्यत्र विषयसप्तमीस्वीकारे, यकारादौ प्रत्ययविषये वुद्धिस्थ एवाऽऽत्वस्य प्राप्तौ 'ई च खनः' इत्यत्र ह्रस्वपाठे, अस्य बाधे खेयमिति न स्यात्, तदर्थं दीर्घनिर्देशः। कृते दीर्घनिर्देशे 'ई-इ' इति प्रश्लेषेण एकेन ईत्वमपरेणात्वस्य बाध इति दीर्घनिर्देशो वक्तुं शक्यते, तथापि 'ये विभाषां' इत्यत्र परसप्तमी-स्वीकारे, क्यप्-सन्नियोगेन इत्वस्यान्तरङ्गत्वे, आत्वस्य च बहिरङ्गत्वे ह्रस्वपाठेऽपि दोषाभावे लाघवेन चास्यैवोचित्यमिति भट्टोजिदीक्षिताशयः[1]।

रत्नकारमते तु 'ये विभाषा' ( ६।४।४३ ) इत्यत्र विषयसप्तमी। अतो दीर्घपाठ एव सुवचः अत्र पक्षेऽपि 'जनसनखनां सञ्झलो' ( ६।४।४२ ) इतिसूत्र साहचर्येण अनुनासिके एवात्वम्। अस्यामवस्थायां यत्वविषयकवुद्धिकाले एव इत्ववुद्धेरपि प्रवृत्तौ, अन्तरङ्गपरिभाषयात्रात्वं स्यादिति कथनं नौचित्यं विभर्ति।

भाष्ये[3] 'इच खन इत्येव वक्तव्यम्' इत्यादिना दीक्षितमतं पुष्यते 'ये विभाषा' ( ६।४।४३ ) इत्यत्र परसप्तमी च लक्ष्यते।

---

१. प्रौढमनोरमायाम् 'ई च खनः' इति सूत्रे ७७–७८ तमयोः पृष्ठयोः।
२. शब्दरत्ने 'ई च खनः' इति सूत्रे ७७–७८ तमयोः पृष्ठयोः।
३. महाभाष्ये 'ई च खनः' इति सूत्रे १३३–१३४ तमपृष्ठयोः।

काशिकारेण[1] दीर्घनिर्देश एव स्वीकृतः । तेन 'ये विभाषा' इत्यत्र विषयसप्तमी ।

न्यासकारेण[2] दीर्घपाठस्यैवौचित्यं प्रदर्शितम् । पदमञ्जरीकारेण[3] तु—ये विभाषा इत्यत्र विषयसप्तमी स्वीकारे दीर्घनिर्देशः, परसप्तमीस्वीकारे तु ह्रस्व इति निर्दिष्टम् । कैयटेन[4] 'ह्रस्वपाठः सुवचः' इत्युक्त्या 'ये विभाषा' इत्यत्र परसप्तमी निगदिता ।

नागेशेन[5] 'अचः कर्तृयकि' ( ६।१।१९५ ) इति सूत्रे 'जायते स्वयमेव' इत्यादिभाष्यप्रयोगसिद्ध्यर्थं 'ये विभाषा' इत्यत्र विषयसप्तम्यामेव भाष्याशय इत्युक्तम् ।

चान्द्रव्याकरणेऽस्य[6] सूत्रस्य स्थाने 'खेयम्' ( १।१।१२२ ) इति सूत्रितम् । खनतेः क्यपि खेयमिति निपात्यते इत्युक्तम् ।

वस्तुतस्तु भट्टोजिदीक्षितमतमेव युक्तम् । यद्यपि रत्नकारेण विषयसप्तमीं स्वीकृत्य दीर्घनिर्देशः सुवच इत्युक्तम् । सूत्रकारादिना च दीर्घ एव पठितव्यः, तथापि 'यथोत्तरं मुनीनां प्रामण्यम्' इत्यनुसारेण भाष्योक्त्या ह्रस्वपाठे लाघवेन चास्यैवौचित्यम् ।

## क्तप्रत्ययविधाने विचारः

१—सूत्रार्थः ।

२—भट्टोजिदीक्षितनयेन 'नपुंसके०' इति सूत्रे अकर्मकेभ्य एव 'क्त' प्रत्ययो भवति ।

---

१. काशिकायाम् 'ई च खनः' इति सूत्रे ५०७ तमे पृष्ठे ।

२. न्यासे 'ई च खनः' इति सूत्रे ५०७ तमे पृष्ठे ।

३. पदमञ्जर्याम् 'ई च खनः' इति सूत्रे ५०७ तमे पृष्ठे ।

४. कैयटे 'ई च खनः' इति सूत्रे १३३–१३४ तमपृष्ठयोः ।

५. बृहच्छब्देन्दुशेखरे 'ई च खनः' इति सूत्रे २०१६–२०१७ तमपृष्ठयोः ।

६. चान्द्रव्याकरणे 'खेयम्' इति सूत्रे ४३ तमे पृष्ठे ।

३—शब्दरत्नकारमतेन सकर्मकेभ्योऽपि 'नपुंसके०' इति 'क्त' प्रत्ययः संजायते ।

४—अकर्मकेभ्य एव 'क्त' इति पक्षे विदुषां सम्मतिः ।

५—युक्तायुक्तत्वसमीक्षणम् ।

नपुंसके भावे 'क्त' ( ३।३।११४ ) इत्यत्र नपुंसके = नपुंसकलिङ्गे भावे 'धातोः' ( ३।१।९१ ) इति सूत्राधिकारेऽस्य सूत्रस्य पाठेन, धातोः क्तः = क्तप्रत्ययो भवतीति । तेन नपुंसकलिङ्गे विद्यमानस्य धातोः परतः 'क्त' प्रत्ययो भवतीति सूत्रार्थः संपद्यते ।

अत्र भावे क्तप्रत्ययस्य विधानेऽपि सूत्रे सकर्मकधातुभ्योऽकर्मकधातुभ्यो वेति निर्देशाभावेन कस्माद् धातोः 'क्त' प्रत्ययो विधीयेतेति प्रश्नः ?

तत्र भट्टोजिदीक्षितेन[1] 'गतं तिरश्चीनमनूरुसारथिः', 'भ्रान्तं देशम्' इत्यादिप्रयोगेषु 'क्त' प्रत्यययस्य भावे विधानेनापि भावे 'चाकर्मकेभ्यः' इत्यस्यासन्निधानेनानेन सूत्रेण सकर्मकेभ्योऽपि 'क्त' प्रत्ययो भवति । अथवा अकर्मकेभ्य एव इत्यपि यदि कस्यचिद् मतम्, तदा सकर्मकत्वस्याविवक्षां कृत्वा 'क्त' प्रत्ययोऽनेनेत्युक्तम् ।

शब्दरत्नकृता[2] तु 'भ्रान्तं देशम्' इत्यत्र 'भ्रमि' धातोर्गत्यर्थत्वेन सकर्मकेभ्योऽपि क्तप्रत्ययविधाने सकर्मकत्वस्याविवक्षां कृत्वाऽकर्मकेभ्यएव 'क्त' इति कथनं न मन्यते ।

पदमञ्जरीकारेण[3] 'इसकर्मकेभ्योऽपि' इति पक्षं प्रदर्श्य, अविवक्षितकर्म गृहीत्वाऽकर्मकेभ्य एवेति पक्षोऽपि समुपस्थापितः । शेखरकारेण[4] त्वकर्मकेभ्य एवेति पक्षः समर्थितः ।

---

१. प्रौढमनोरमायाम् 'नपुंसके०' इति सूत्रे ९१२ तमे पृष्ठे ।
२. शब्दरत्ने 'नपुंसके' इति सूत्रे ९१२ तमे पृष्ठे ।
३. पदमञ्जर्याम् 'नपुंसके' इति सूत्रे ८६ तमे पृष्ठे ।
४. बृहच्छब्देन्दुशेखरे 'नपुंसके' इति सूत्रे २१३६ तमे पृष्ठे ।

यद्यप्यत्र पक्षद्वये लक्ष्ये न काचन विप्रतिपत्तिः, तथापि सकर्मकेभ्योऽपीति पक्षस्वीकारो नोचितः। अनेन सूत्रेण सकर्मकस्याविवक्षां कृत्वा समुपस्थिता-कर्मकस्य साधनमपि नोचितम्। भ्रान्तं देशम्, गतं तिरश्चीनम् 'कृतपूर्वीकटम्', 'ओदनस्य भक्तम्' इत्यादौ यद्यपि 'क्त' प्रत्ययस्य विधानं दृश्यते, तथापि नानेन सूत्रेण। एवं 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३।४।६९) इति सामान्येन भावे लादेशा अकर्मकधातुभ्य एव विधीयन्ते। अन्यथाकर्मकेभ्य एवेत्युक्तेर्वैय्यर्थम्। भावे चाकर्मकेभ्य इत्यस्यासन्निधानेन सकर्मकेभ्योऽपि कथनं त्वसङ्गतम्। यद्यपि 'नपुंसके०' (३।३।११४) इति सूत्र दशायाम् 'लः कर्मणि', 'तयोरेव कृत्यक्त-खलर्थाः (३।४।७०) इत्यादिसूत्राभावः, तथाप्यकर्मकेभ्य एव भावे ला देशा इत्याचार्यस्य दृष्टिरासीत्। अतो न किञ्चिद् अस्मिन् विषये निर्देशो दृश्यते।

एवं तावत् पाणिनिनयेन सूत्रार्थव्यवस्थालाभाय पदानामपकर्षोऽपि भवत्येव। अतः 'लः कर्मणि०' (३।४।६९) इत्यतोऽकर्मकेभ्य इत्यस्यापकर्षं कृत्वाऽनेना-कर्मकेभ्य एव 'क्त' प्रत्ययो भवतीति मन्तव्यः। यत्राविवक्षितकर्मादाय भावे 'क्त' प्रत्ययो विधीयते तत्र नानेन सूत्रेण सः, अपि तु 'गत्यर्थकर्मणि०' (२।३।१२) इत्यादिसूत्रेणैव। अयमेव युक्तियुक्तः पक्षः।

---

## प्रत्ययग्रहणविचारः

१—सूत्रार्थः।

२—भट्टोजिदीक्षितमतेन 'स्वाङ्गे०' इति सूत्रे प्रत्ययग्रहणं व्यर्थम्।

३—शब्दरत्नकारमतेन 'प्रत्ययाप्रत्यय' इति परिभाषाया अनित्यत्वज्ञाप-नार्थम् 'स्वाङ्गे०' इति सूत्रे प्रत्ययग्रहणं मन्तव्यम्।

४—प्रत्ययग्रहणवलेन प्रत्ययाप्रत्ययपरिभाषाया अनित्यत्वे वैयाकरणानां सम्मतिः।

५—अपाणिनीयव्याकरणे सूत्रस्वरूपम्।

६—युक्तायुक्तत्वसमीक्षणम्।

'स्वाङ्गे तस्प्रत्यये कृभ्वो' ( ३।४।६१ ) इत्यत्र सूत्रे 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' ( ३।४।५९ ) इत्यतः क्त्वाणमुलौ चानुवर्त्तते। ततस्तस्प्रत्ययान्ते स्वाङ्गवाचिनिशब्दे उपपदे 'कृ'-धातोः 'भू' धातोश्च क्त्वाणमुलौ प्रत्ययौ भवतः। अत्र यथासंख्यं नास्ति। यतो हि पूर्वसूत्रत उक्तप्रत्ययोरनुवृत्तिर्भवति।

अत्र मनोरमाकारमतेन[1] 'मुखतः कारम्' इत्यत्र स्वाङ्गवाची तस्प्रत्ययान्तमुखशब्दोपपदे कृधातोर्णमुलि 'मुखतः कारम्' इति सिद्धयति। अत्र 'तसु' उपक्षये, इति धातोर्ग्रहणम् वा 'आद्यादिभ्य उपसंख्यानम्' ( २८४९ ) इति वार्तिकेन सप्तम्यर्थे विहितस्य 'तस्' प्रत्ययस्य ग्रहणमिति विप्रतिपत्तौ 'प्रत्ययाप्रत्ययोः प्रत्ययस्यैव ग्रहणम्' इति परिभाषया तस्प्रत्ययस्यैव ग्रहणं स्यात् प्रकृतसूत्रे प्रत्ययग्रहणं व्यर्थम्।

शब्दरत्नकारमतेन[2] तु सूत्रे प्रत्ययग्रहणसामर्थ्यात् प्रत्ययाप्रत्ययपरिभाषाया अनित्यत्वं ज्ञाप्यते। तेन 'सनः क्तिचि लोपश्चास्यान्यतरस्याम्' ( ६।४।४५ ) इत्यत्र सन्धातोर्ग्रहणं भवति न प्रत्ययस्य। अन्यथा परिभाषया सन्-प्रत्ययस्यैव ग्रहणं स्यात्।

काशिकाकारेण[3] 'प्रत्ययग्रहणं किम्? मुखे तस्यति मुखतः। अत्रान्येभ्योपि इत्यनेन क्विपि, तस्य लोपे, ततोऽत्वसन्तस्य चाधातोः' ( ६।४।१४ ) इति दीर्घो न भवति 'अधातु' इति निषिध्यते' इति प्रदर्शितम्। तेन प्रत्ययग्रहणं 'तस्' इति प्रत्ययस्यैव ग्रहणं यथा स्यादिति सूचितम्। न्यासकारेणापि[4] प्रत्ययग्रहणार्थमेव प्रत्यय ग्रहणमुक्तम्।

पदमञ्जरीकारेण[5] 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति परिभाषाया

---

१. प्रौढमनोरमायाम् 'स्वाङ्गे०' इति सूत्रे ९२९ तमे पृष्ठे।
२. शब्दरत्ने 'स्वाङ्गे०' इति सूत्रे ९२९ तमे पृष्ठे।
३. काशिकायाम् 'स्वाङ्गे०' इति सूत्रे १९६ तमे पृष्ठे।
४. न्यासे 'स्वाङ्गे०' इति सूत्रे १९६ तमे पृष्ठे।
५. पदमञ्जर्याम् 'स्वाङ्गे०' इति सूत्रे १९६ तमे पृष्ठे।

अनित्यत्वार्थमेव प्रत्ययग्रहणमिति प्रतिपादितम् । नागेशेनाप्येतदर्थमेवोक्तम्[1] । तेन 'तित् स्वरितम्' ( ६।१।१८५ ) इतिसूत्रे भाष्ये 'तिति प्रत्ययग्रहणं कर्त्तव्य-मिति' 'वार्त्तिकस्योत्तथानं संगच्छत इत्युक्तम् ।

चान्द्रव्याकरणे[2] 'स्वाङ्गात् तस्नाधानार्थं भुवा च' ( २।२।४३ ) इति सूत्रमस्ति । उदाहरणं तु 'मुखतः कृत्वा', 'मुखतो भूय'. इत्येव । तत्रापि 'तस्' इति प्रत्ययस्यैव ग्रहणं विद्यते । यद्यपि सूत्रे प्रत्ययग्रहणं नास्ति ।

अत्र मतद्वये रत्नकारमतमेव युक्तम् । यद्यपि परिभाषयाऽपि कार्यं भवितु-मर्हति, तथापि सूत्रकारेण प्रत्ययग्रहणं कृतम्, भाष्ये चास्य प्रत्याख्यानं च न कृतमतः प्रत्ययाप्रत्ययपरिभाषाया अनित्यत्वमेवोचितम् । यद्यपि तित्स्वरितम्' ( ६।१।१८५ ) इत्यत्र तितिप्रत्ययग्रहणवार्त्तिकोत्थानप्रसङ्गेप्यस्या अनित्यत्वं न भवति । यतो हि वार्त्तिकस्य खण्डनेनोत्थानमप्यनुचितमेव । तथापि परिभाषाया अनित्यत्वे प्रकृतसूत्रे प्रत्ययग्रहणमेव मानम् । तेन 'तप पर्वरुत्म्याम्' इति वार्त्तिके 'तप् प्रत्ययस्य ग्रहणेऽपि 'तपोऽनुतापे' ( ३।१।६५ ) 'तपस्तपः कर्मकस्यैव' ( ३।१।८८ ) इति सूत्रे च 'तप्' धातोरेव ग्रहणम् । एवं 'सनि मीमाघुरभलभशकपतपदामच इस्' ( ७।४।५४ ) इति सूत्रे 'सनीवन्तर्धभ्र-स्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' ( ७।४।४६ ) इत्यत्र सनिमीमेति सूत्रे 'सन' इति प्रत्ययस्य ग्रहणम्, सनीवन्तर्ध इति सूत्रे प्रथमोपात्तसनीतिपदेन प्रत्ययस्य परिगणितधात्वन्ते 'सनाम्' इत्यत्रोपात्त 'सन्'-पदेन धातोर्ग्रहणम् । सनिसस-निवांसम्' ( ७।२।६९ ) इत्यत्रापि 'सन्'-धातोरेव ग्रहणम्, न 'सन्'-प्रत्ययस्येति विदुषां विचारविषयः ।

---

बहुग्रहणे विचारः

१—सूत्रार्थः ।

२—'बह्वादि०' इति सूत्रे बहुग्रहणव्यर्थमिति भट्टोजिदिक्षितमतेन ।

---

१. बृहच्छब्देन्दुशेखरे 'स्वाङ्गे०' इति सूत्रे २१५२-२१५३ तमयोः पृष्ठयोः ।

२. चान्द्रे २।२।४३ इति सूत्रे १२५ तमे पृष्ठे ।

३—शब्दरत्नकारमतेन वह्वादि-इति सूत्रे बहुग्रहणमावश्यकम् ।

४—'बह्वादि०' इति सूत्रे वहुग्रहणं व्यर्थमिति पक्षे वैयाकरणानां सम्मतिः ।

५—'बह्वादि०' इति सूत्रे वहुग्रहणमावश्यकमित्यत्र शब्दशास्त्रज्ञानां विचारः ।

६—युक्तायुक्तत्वसमीक्षणम् ।

'बह्वादिभ्यश्च' (४।१।४५) इत्यस्मिन् सूत्रे 'बह्वादिभ्यः' 'च. इति पदद्वयम् । वह्वादिभ्य इति पदं पञ्चम्यन्तम् । चकारेण 'वोतो' गुणावचनात् (४।१।४४) इत्यतः 'वा' इत्यनुवर्तते । 'अन्यतो ङीष्' (४।१।४०) इत्यतो ङीष् चाऽनुवर्तते । 'प्रत्ययः' (३।१।१) इत्यतः प्रत्ययपदम्, 'परश्च' इत्यतः परशब्दोऽनुवर्तते । ततो वह्वादिभ्यो गणपठितेभ्यः परतो वा ङीष्प्रत्ययो भवतीत्यर्थः सम्पद्यते ।

अत्र, बहु शब्दस्यापि गुणवाचित्वेन 'वोतो गुणवचात्' (४ १।४३) इत्येनङीष्सिद्धौ 'बह्वादिभ्यश्च' (४।१।४५) इति सूत्रे वहुग्रहणमनर्थकम् । 'नित्यं छन्दसि' (४।१।४६) इत्यत्राऽनुवर्तनार्थं 'बहु ग्रहणमिति तु न वक्तव्यम् । 'छन्दसि दृष्टानुविधिः छन्दसि सर्वविधीनां व्यवस्थित्वाद् बह्वादिसूत्रे बहुशब्दग्रहणं निरर्थकमिति भट्टोजिदीक्षितस्याकूतम्[१] ।

दीक्षितोक्तस्य बीजं काशिकायां[२] लक्ष्यते । यस्याऽनुमोदनं न्यासकारः[३], पदमञ्जरीकारः[४], प्रकियाकौमुद्याः प्रसादटीकारादयश्च[५] कृतवन्तः । तत्वबोधिन्यां[६] तु दीक्षितोक्तमेव यथावच्चर्चितम् ।

शब्दरत्नकारस्तु[७] संख्यावाचिशब्दानां गुणवचनत्वमनङ्गीकृत्य 'बह्वी'

---

१. प्रौढमनोरमायाम् 'बह्वादि०' इति सूत्रे ७२१-७२२ तमयोः पृष्ठयोः ।
२. काशिकायाम् 'बह्वादि०' इति सूत्रे ३४३ तमे पृष्ठे ।
३. न्यासे 'बह्वादि०' इति सूत्रे ३४३ तमे पृष्ठे ।
४. पदमञ्जर्याम् 'बह्वादि०' इति सूत्रे ३४३ तमे पृष्ठे ।
५. प्रक्रियाकौमुद्याः प्रसादटीकायाम् 'बह्वादि०'. इति सूत्रे ३५८ तमे पृष्ठे ।
६. तत्त्वबोधिन्याम् 'बह्वादि०' इति सूत्रे १४९ तमे पृष्ठे ।
७. शब्दरत्ने 'बह्वादि०' इति सूत्रे ७२१-७२२ तमयोः पृष्ठयोः ।

इत्यत्र ङीप्-सिद्धयर्थं सूत्रे बहुग्रहणं स्वीचकार। अस्य मतस्य समर्थनं नागेशन,[१] भैरवीकारेण[२], भावप्रकाशकारेण[३], दाधिमथटीकाकारेण[४] च कृतमस्ति।

पक्षद्वयपर्यालोचनेन विज्ञायते यदुभयत्रैव विदुषां सम्मतिर्दृश्यते। अतो नीरक्षीरविवेचनामावश्यकमिदानीन्तनानां विचारकाणां कृते। तदेवोद्दिश्य कश्चिद् विचारः प्रस्तूयते—

'वोतो गुण वचनात् (४।१।४४) इति सूत्र भाष्ये[५]—

सत्त्वे निविशतेऽपैति, पृथक् जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च, सोऽसत्त्वप्रकृतिर्गुणाः॥

इत्युक्तम्। तेन बहुशब्दोऽपि गुणवाचि। एवं 'आकडार०' (१।४।१) इति सूत्र भाष्ये[६]—गुणवचनसंज्ञायाश्चैताभिः संज्ञाभिर्बाधनं यथा स्यात्।' इति संख्या-संज्ञाकरणस्य प्रयोजनदानेन संख्यावाचिनो बहुशब्दस्य गुणवचनत्वं सिद्धम्। किन्तु संख्यासंज्ञया गुणसंज्ञाया बाधे सति 'बह्वी' इति प्रयोग सिद्धयर्थं सूत्रे बहुग्रहणमावश्यकमाभाति।

यद्यपि तर्कसंग्रहे चतुर्विंशतिर्गुणा इत्यत्र परिगणितेषु संख्यापि न गुणातिरिक्ता। तेन बहुशब्दस्य संख्यावाचित्वेऽपि तस्य गुणवाचित्वे न क्षतिः, तथापि पाणिनि-व्याकरणनिकाये भाष्य-कैयटव्याख्यानयोरेवान्यशास्त्रापेक्षया प्रामाण्यम्।

एतदतिरिक्तम् 'नित्यं छन्दसि' (४।१।४६) इत्यत्र 'बहु'शब्दस्यानुवर्तनार्थमपि बह्वादिगणेऽस्य पाठ आवश्यकः। छन्दसि सर्वविधीनां व्यवस्थितत्वम्, छन्दसि दृष्टाऽनुविधिरित्यादिकथनं तु तर्कणामात्रम्। अन्यथा 'वर्णेनाप्यनर्थकेन न भवितव्यम्, किं पुनर्महता सूत्रेण' इत्यादि भाष्यव्याख्यानस्य 'छन्दोवत् सूत्राणि

---

१. लघुशब्देन्दुशेखरे 'बह्वादि०' इति सूत्रे ३९९ तमे पृष्ठे।
२. भैरव्याम् 'बह्वादि०' इति सूत्रे ७२१-७२२ तमयोः पृष्ठयोः।
३. भावप्रकाशे 'बह्वादि०' इति सूत्रे ७२१-७२२ तमयोः पृष्ठयोः।
४. कौमुद्या: दाधिमथटीकायाम् 'बह्वादि०' इति सूत्रे १४९ तमे पृष्ठे।
५. महाभाष्ये 'वोतो गुणवचनात्०' इति सूत्रे ३२४ तमे पृष्ठे।
६. महाभाष्ये 'आकडार०' इति सूत्रे २०३ तमे पृष्ठे।

भवन्ति' इत्यादिवचनस्य चागतिः स्यात्। एवं 'छन्दसि दृष्टानुविधिः' इति स्वीकारे सर्वेषां वैदिकप्रकरणस्थ सूत्राणां वैयर्थ्यम्। भवतु नाम छन्दसि सर्वविधीनां व्यवस्थितत्वम्, तथाप्यव्यवस्थितानां व्यवस्थापनार्थमेव सूत्रस्य प्रयोजनं नास्ति, किन्तु व्यवस्थितानां व्यवस्थितस्वरूपज्ञापनार्थं तत् स्वरूपरक्षणार्थं च सूत्रस्यावश्यकत्वम्। अन्यथा नियमज्ञानाभावे लौकिकशब्दानामिव छन्दस्यपि व्यतिक्रमापत्तिः स्यात्। पाणिनिप्रभृतीनामाचार्याणां 'बह्वादिगणे' बहुशब्दस्य पाठे सम्मतिश्च। अन्यथा 'बह्वादिभ्यश्च' इति स्थाने 'पद्धत्याभिश्च' इत्येव सूत्रं वदेत्। किन्तु 'वोतो गुणवचनात्' इति सूत्रप्रणयनाव्यवहितोत्तर 'बह्वादिभ्यश्च' (४।१।४५) इत्यनेन बह्वादीनां ङीष्विधानेन 'बहु' शब्दस्य गुणवाचित्वस्वीकारे न पाणिनेः सम्मतिरिति प्रतिभाति। प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तते, इति दृशा सूत्रे बहुशब्दप्रयोगार्थम्, आचार्यप्रवृत्तौ सत्यामपि निष्प्रयोजनोक्तिस्तु जलताडनवदेवाभाति।



रूपग्रहणविचारः

१—सूत्रार्थः।

२—भट्टोजिदीक्षितमतेन 'एङि पररूपम्' इति सूत्रे रूपग्रहणस्य प्रयोजनं चिन्त्यम्।

३—शब्दरत्नकारमतेन 'एङि०' इति सूत्रे रूपग्रहणं स्पष्टार्थम्।

४—'एङि' इति सूत्रे रूपग्रहणं स्पष्टार्थमिति पक्षे वैयाकरणानां सम्मतिः।

५—युक्तायुक्तत्वसमीक्षणम्।

६—वस्तुतस्त्वित्युक्त्या स्वमतम्।

'एङि पररूम्' (६।१।९४) इति सूत्रे 'आद् गुणः' (६।१।८७) इति सूत्रतः 'आत्' इत्यनुवर्त्तते। 'उपसर्गादृति धातौ' (६।१।९१) इत्यतः 'उपसर्गात्' 'धातौ' इति पदद्वयमनुवर्तते। 'एकः पूर्वपरयोः' (६।१।८४) इत्यतः 'पूर्वपरयोः' इत्यनुवर्तते। ततः 'आदुपसर्गादेङादौ धातौ परे पूर्वपरयोः स्थाने परस्य यादृशं रूपं भवति तादृशं रूपं स्यात्' इति सूत्रार्थः। 'वा सुप्यापिशलेः'

( ६ १ ९२ ) इत्यतः 'वा सुपि' इत्यनुवर्तते 'एङादौ सुब्धातौ वा पररूपम्' इति वाक्यभेदेन व्याख्यानं भवति । इत्थं व्याख्याद्वयसंभवः ।

भट्टोजिदीक्षितमतेन[1] यथा 'अमि पूर्वः' ( ६।१।१०७ ) इति सूत्रे रूपग्रहणं विनैव पूर्वपरयोः स्थाने पूर्वरूपं भवति, तथैव 'एङि पररूपम्' ( ६।१।९४ ) इति सूत्रस्य स्थाने 'एङि एङ्' इति न्यासेनैव 'प्रेजते', 'उपोषति' इत्यादिस्थले 'प्र + एजते' इत्यवस्थायाम् 'उप + ओषति' इत्यवस्थायां च पूर्वपरयोः स्थाने एङादेशे 'प्रेजति', 'उपोषति' इत्यादिप्रयोगाणां सिद्धिः स्यात् । सूत्रे 'पर' ग्रहणम् 'ओमाङोश्च' ( ६।१।९५ ) इति सूत्रेऽनुवर्त्तनार्थम् । तथा सति 'एङि पर०' इति सूत्रस्वरूपं भवेत् । 'रूप'ग्रहणं चिन्त्यप्रयोजनमिति तदाशयः ।

नायं मनोरमाकारस्यापूर्वः पक्षः । ततः पूर्वंपदमञ्जरीकारेण[2] तस्य पक्षस्योपस्थापनं कृतम् ।

शब्दरत्नकारमतेन[3] यद्यपि 'एओङ्, ऐ औच्' इति सूत्रस्थस्य 'एकादेशे दीर्घग्रहणं' इति वार्त्तिकस्य व्याख्याप्रसङ्गे 'यथाजातीयकं परस्य रूपं तथाजातीयकमुभयोर्यथा स्यात्' इति भाष्योक्त्या परस्य जातीयकरूपवत् पूर्वपरयोः स्वरूपलाभाय रूपग्रहणं सिद्धम्, तथापि 'तृज्वत् क्रोष्टुः' ( ७।१।९५ ) इति सूत्रभाष्योक्तरीत्या गुणस्य शब्दत्वादिवद्रूपाभावेन 'न हि स्वरोरूपवान्' इति तत्रत्यभाषेण च स्वरस्य रूपत्वाभावे तस्य रूपवत्त्वसाधनं व्यर्थमेवास्ति । यतो हि उक्तभाष्येण 'श्रावणज्ञानविषयोऽवयवसंस्थानवान्' एव रूपशब्देन गृह्यते । तेन 'पचन्ति' इत्यादिस्थले 'एङि' पररूपम्' ( ६।१।९४ ) इति सूत्रे परग्रहणासामर्थ्येन 'तृज्वत् क्रोष्टुः' ( ७।१।९५ ) इति सूत्रे परः किंगुणको भवति ? स्थानगुणक इति प्रातिपादितत्वेन आन्तरतम्याद् अकारस्य अकार एव पररूपे 'ऐ औच्' इति सूत्रस्थम् 'परस्य यादृशं रूपम्' इति भाष्यस्यत्त्वेकदेशिपर-

---

१. प्रौढमनोरमायाम् 'एङि पर०' इति सूत्रे २३०-२३१ तमयोः पृष्ठयोः ।
२. पदमञ्जर्याम् 'एङि पर०' इति सूत्रे ५६३ तमे पृष्ठे ।
३. शब्दरत्ने 'एङि पर०' इति सूत्रे २३१ तमे पृष्ठे ।

कर्त्तमेव। इत्थं रूपग्रहणस्य फलाभावे स्पष्टार्थमेव रूपग्रहणम् इति तदाशयः। अस्य मतस्य समर्थनं तत्त्वबोधिनीकारेण[1], नागेशेन[2], भैरवीकारेण[3], भावप्रकशकारेण[4] च कृतम्। प्रक्रियाकौमुद्यां प्रसादे च रूपग्रहणविषये किंमपि नोक्तम्।

समीक्षात्मकदृशा विचारे भट्टोजिदीक्षितमतमेव युक्तम्। यतो हि प्रौढमनोरमोक्त्या, हरिदीक्षितोक्त्या च रूपग्रहणस्य फलाभावत्वं सिद्धम्। किन्तु तथा सत्यपि स्पष्टार्थत्वोक्तिस्त्वगतिकगतिः। तदपेक्षया रूपग्रहणस्य फलं चिन्त्यमिति कथनं युक्तियुक्तम्।

वस्तुतस्तु 'अमि पूर्वः' (६।१।१०७) इति सूत्रे यथा रूपग्रहणं नास्ति, तथा 'एङि' पर रूपम्' (६।१।६४) इति सूत्रेऽपि रूपग्रहणं मास्तु—इति दृष्टान्तेन रूपग्रहणानर्थक्यकरणं नोचितम्। यतो हि 'अमिं पूर्वः' (६।१।१०७) इति सूत्रे रूपग्रहणाभावेऽपि तत्र 'एङि पररूपम्' (६।१।६४) इत्यतो रूपम्-इत्यनुवर्त्य पूर्वरूपमृइत्यर्थलाभो भवेत्। एङि पररूपम् (६।१।६४) इति सूत्रे रूपग्रहणं विना तत्रापि 'पूर्वरूपम्' इत्यर्थं लाभो न स्यात्। तस्मात् 'परस्य यादृशं रूपम्' इति स्वरूपलाभाय रूपग्रहणमात्रश्यकम्। 'तृज्वत्क्रोष्टुः' (७।१।९५) इति सूत्रस्थ भाष्यं तु स्वरविधावुपयोगी। आन्तरतम्यात् परशब्दस्य स्थानिद्वयगुणकादेशस्य सत्त्वे 'प्र + एजते' इत्यत्र 'एदैतोः कण्ठतालुः' इत्युक्त्या 'ए' इत्यस्य 'कण्ठतालुः' इत्युभयगुणकत्वेन 'अ', 'ए' इत्यनयोः स्थाने 'ए' इति पररूपे 'प्रेजते' इति सिद्धावपि 'पचन्ति' इत्यत्र शप्प्रत्यये सति 'पच् + अन्ति' इत्यवस्थायाम् आन्तरतम्यात् जातिपक्षमादाय यथा 'अकार' इति पररूपम्, तथैव आकारेऽपि प्रवर्तते, तत्र रूपग्रहणसामर्थ्याद् अकारस्य स्थानेऽकार एव पररूपं भवति, न आकार इति। किन्तु 'आन्तरतम्यात्' 'अकारस्य स्थाने अकार इति पररूपवद् अकार इति पररूपविधाने 'अतो गुणे (६।१।९७) इति सूत्रप्रणयनानर्थक्यं स्यात्। अतः 'अतो गुणे'

---

१. तत्त्वबोधिन्याम् 'एङि पर०' इति सूत्रे २५ पृष्ठे।
२. उद्योते 'ए + ओङ, ऐ औच्' इति सूत्रे ८० तमे पृष्ठे।
३. भैरव्याम् 'एङि पर०' इति सूत्रे २३३ तमे पृष्ठे।
४. भावप्रकाशे 'एङि पर०' इति सूत्रे २३३ तमे पृष्ठे।

( ६।१।६७ ) इति सूत्रारम्भसामर्थ्याद् अकारस्य अकार एव पररूपम् । तथा सति रूपग्रहणं न फलोपधायकम् । एवं सत्यपि 'हरिम्' इत्यत्र पूर्वरूपस्थले अन्तरतमत्वाभावेन इकार-अकारयोः स्थाने 'इ' इति पूर्वरूपं न स्यात् । तत्र 'पूर्वस्य यादृशं रूपम् इत्यर्थकरणाय रूपग्रहणमपेक्षते । यदि 'एङि पररूपम्' ( ६।१।९४ ) इति सूत्रे रूपग्रहणं न स्यात्, तदा 'अमि पूर्वः' ( ६।१।१०७ ) इत्यत्र रूपग्रहणं करणीयं भवेत् । तदपेक्षातः यथा पररूपग्रहणम् 'ओमाङोश्च' ( ६।१।९५ ) इत्यत्रानुवृत्त्यर्थं तथैव 'अमि पूर्वः' ( ६।१।१०७ ) इत्यत्र अनुवृत्त्यर्थं रूपग्रहणमिति सुधियो विभावयन्तु ।

---

**अत्-ग्रहणविचारः**

१—सूत्रार्थः ।

२—भट्टोजिदीक्षितमतेन 'अव्यक्त०' इति सूत्रेऽद्ग्रहणं व्यर्थम् ।

३—शब्दरत्नकारमतेन 'अव्यक्त०' इति सूत्रे 'अत्' इति स्वरूपलाभाय अद् ग्रहणम् ।

४—'अव्यक्त०' इति सूत्रे 'अत्' इति स्वरूपलाभपक्षे वैयाकरणानां सम्मतिः ।

५—युक्तायुक्तत्वसमीक्षणम् ।

अव्यक्तानुकरणस्यात इतौ' ( ६।१।९८ ) इति सूत्रे अव्यक्तशब्दोऽव्यक्तध्वनिपरः । 'एङि पररूपम् ( ६।१।९४ ) इति सूत्रतः पररूपपदमनुवर्तते । तस्मात् 'अव्यक्तध्वनेरनुकरणस्य योऽच्छब्दस्तस्य पररूपमेकादेशः स्यादिति शब्दपरे' इति सूत्रार्थः सम्पद्यते ।

अत्र सूत्रे 'अतो गुणे' ( ६।१।९७ ) इति सूत्रतः-अत्शब्दमनुवर्त्य 'योऽच्छब्दः' इत्यर्थं लाभः स्यात् पुनः सूत्रे 'अत्'-ग्रहणं किमर्थम् ? तत्र काशिका[१]-पदमञ्जरी[२]-कारप्रभृतयोऽत्रत्यम् 'अत्' इति शब्दं दकारान्तं मन्यते । तेन 'घटदिति' इति

१. काशिकायाम् 'अव्यक्त०' इति सूत्रे ५६८ तमे पृष्ठे ।

२. पदमञ्जर्याम् 'अव्यक्त०' इति सूत्रे ५६८ तमे पृष्ठे ।

प्रयोगः सिद्धयति। प्रक्रियाकौमुदीकारस्तु[१] 'अत्' इति स्वरूपलाभाय अत्-ग्रहणं मन्यते तेन 'अत्' इत्यस्य प्रयोजनव्याख्यावसरे 'दकारान्ते माभूत्' इति समाहितम्। प्रसादकारस्तु[२] 'अतः किम्? उतो मा भूत्' इति व्याख्यातवान्, दकारान्तानुकरणं च स्वीकृतवान्। सकलोऽयं पक्षः पूर्वपक्षरूपेण यत्तु प्राचा' नामकरणद्वारा मनोरमायाम् उपस्थापितः। किन्तु दीक्षितमते[३] शब्दाधिकाराश्रयणेनानुवृत्त्यैव 'अत्' इति स्वरूपलाभकरणमुचितम्। सति तत्स्वरूपलाभे तपरकरणसामर्थ्येन ह्रस्वाकारस्य ग्रहणं न स्यात्, अपि तु 'अत्' इति स्वरूपस्य स्यात्। अत इति स्वरूपलाभे तु सुतरां दकारान्तस्य 'उत्' इत्यादेश्च निवृत्तिः स्यात्, पुनः सूत्रे 'अत्' ग्रहणं तु व्यर्थमेवेति ध्वनितम्।

शब्दरत्नकारमतेन[४] शब्दाधिकाराश्रयणे 'अतो गुणे' (६।१।९७) इत्यतः 'अत्' इति स्वरूपलाभसम्भवेऽपि प्रकृतसूत्रे 'अत्'-ग्रहणेन शब्दाधिकारोऽनित्य इति। शब्दाधिकारस्य अनित्यत्वे सति 'अत्'—इति स्वरूपलाभो न स्यात्। तदर्थं सूत्रेऽत्-ग्रहणम्।

अस्य पक्षस्य समर्थनं तत्त्वबोधिनीकारेण[५] भैरवीकारेण[६] च कृतम्। नागेशेन[७] तु 'अत किम्? वटगिति' इति फलं दत्तम्।

अत्र मतद्वये रत्नकारमतमेव युक्तम्। सूत्रकारेण सूत्रे अत्-ग्रहणं कृतम्। भाष्यकारस्तत्परवर्तिनो वैयाकरणाश्च स्वस्वयुक्त्यनुसारेण अत्-ग्रहणस्य सार्थक्यं प्रतिपादितवन्तः शब्दाधिकारस्वीकारे तु 'अतो गुणे' (६।१।९७) इति सूत्रे तपरकरणाद् ह्रस्वाकारस्य ग्रहणम्। अत्र तदनुवृत्तावपि 'अत' इति स्वरूपस्य

---

१. प्रक्रियाकौमुद्याम् 'अव्यक्त०' इति सूत्रे ६६ तमे पृष्ठे।
२. प्रसादटीकायाम् 'अव्यक्त०' इति सूत्रे ६६ तमे पृष्ठे।
३. प्रौढमनोरमायाम् 'अव्यक्त०' इति सूत्रे २३५–२३७ तमपृष्ठपर्य्यन्तम्।
४. शब्दरत्ने 'अव्यक्त०' इति सूत्रे २३७ तमे पृष्ठे।
५. तत्त्वबोधिन्यास् 'अव्यक्त०' इति सूत्रे २६ तमे पृष्ठे।
६. भैरव्याम् 'अव्यक्त०' इति सूत्रे २३७ तमे पृष्ठे।
७. लघुशब्देन्दुशेखरे 'अव्यक्त०' इति सूत्रे १०७ तमे पृष्ठे।

  

कल्पने क्लेशो भवति। एकस्यैव 'अत्' पदस्य एकत्र किञ्चिदपरत्र च किञ्चित् स्वरूपग्रहणमनुचितम्। तदपेक्षया 'अत्' इति स्वरूपलाभाय शब्दाधिकार पक्षमनित्यं मत्वा 'अव्यक्त०' (६।१।९८) इति सूत्रे 'अत्'–ग्रहण एव लाघवम्। अयमच्छब्दोदकारान्तस्तकारान्तो वा इति त्वन्यो विचारः। तत्रापि 'अत्' इति तकारान्तानुकरणमेव, न तु दकारान्तस्यानुकरणम्। अन्यथा 'पटत् + इति— पटिति' इति रूपस्य सिद्धिर्न स्यात्। एवम् 'नाम्रेडितान्तस्यान्त्यस्य तु वा' (६।१।९९) इति निषेधस्य 'पटत्पटदिति' इत्युदाहरणासङ्गतिर्भवेद् इत्याशयकं मनोरमाकारेण यत् प्रतिपादितम्, तत्तु शोभनमेव। तकारान्तत्वादेव 'घटदिति' इत्यादिप्रयोगेषु नानेन पररूपं भवति। अन्यथा तत्रापि 'घटिति' इति स्यात्।

## मघवा (६।४।१२८) इत्यत्र विचारः

१—सूत्रार्थ :

२—मनोरमाकारमतेन 'मघवा०' इति सूत्रे वनिवन्त 'मघवा' मतुवन्त 'मघवान्' इति रूपद्वयं लोके वेदे उभयत्र साधुः।

३—शब्दरत्नकारमतेन लोके वनिवन्त मघवा शब्दप्रयोगो न भवति किन्तु अव्युत्पन्न 'मघवा' शब्दस्य लोके प्रयोगो विद्यते।

४—वनिवन्त 'मघवा' शब्दस्य लोके साधुत्व प्रदर्शने विदुषां सम्मतिः।

५—वनिवन्त 'मघवा' शब्दस्य लोके प्रयोगाभाव इति पक्षे वैयाकरणानां विचारदानम्।

६—युक्तायुक्तत्व-समीक्षणम्।

'मघवा बहुलम्' (६।४।१२८) इत्यस्मिन् सूत्रे 'अर्वणस्त्रसावनञः' (६।४।१२७) इत्यतः 'तृ' इत्यनुवर्तते। 'अङ्गस्य' सूत्राधिकारे पठितमिदं सूत्रम्। तेन 'मघवन्' इत्येतस्याङ्गस्य 'तृ' इत्यादेशो बहुलं भवतीत्यर्थः।

अत्र 'मघ'—शब्दान्मतुपि 'मघवान्' इति सौ रूपम्, वनिपि सौ 'मघवा' इति। 'मघवा बहुलम्' (६।४।१२८) इति सूत्रे बहुलग्रहणेन दीर्घे कर्तव्ये

संयोगान्तलोपस्यासिद्धत्वं न भवति । अत एव 'छन्दसीवनिपौ च' ५३४२ (७६५) इत्यत्र कैयटेन[1] 'श्वन्नुक्षण् पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्धन्मज्जन्नर्यमन् विश्वप्सन् परिज्मन् मातरिश्वन् मघवन्निति' (४३५९) इति निपातन बलेन 'मघ' शब्दाद् मतुपा च भाषायामपि 'मघवा' 'मघवान्' इति रूपद्वयसिद्धौ 'मघवा बहुलम्' इति न वक्तव्यम् इत्यादिसमाहितम् । यतो हि भाषायां शब्दद्वयसिद्धिः । अतः 'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ' इति भट्टिप्रयोगः संगच्छते ।

अर्वणस्तृमघोनश्च, न शिश्यं छान्दसं हि तत् ।
मतुवन्योर्विधानाच्च, छन्दस्युभयदर्शनात् ॥

वार्तिकस्य व्याख्यावसरे भाषायां वनिवन्तस्यासाधुत्वं यदुक्तं कैयटेन[2] तत् तु वनिव-तमध्योदात्तम् 'मघवन्' शब्दविषयकम् । छन्दस्येव वनिब् विधीयते । अतो न प्रदीपकारस्य पूर्वापरविरोधः । 'मघवा बहुलम्' (६।४।१२८) इति सूत्रे 'मघोनः' इति प्रतीकमुपादाय मघशब्दस्याकारस्य 'यस्येति च' (६।४।१४८) इति लोपमाशङ्क्य 'नैतदस्ति-अन्यदेवहीदमव्युत्पन्नं प्रातिपदिकम् । तथाहि भाषायामस्य प्रयोगो दृश्यते ।' इति वदन् न्यासकारोऽपि 'मघवन्' शब्दस्यान्तोदात्तत्वे भाषायामपि साधुत्वे चानुकूलः । तेन भाष्य-वार्तिक-कृतौ 'मघवा' इति रूपं लोके स्वीकुरुत एव । एवं कातन्त्रे 'सौमघवान् मघवा च' इति सूत्रदर्शनेन, विचारचिन्तामणौ 'मघवानेव मघवा' इति । काशिकायामपि 'मघवा' इत्यत्र दीर्घदर्शनेन 'मघवान्' 'मघवा' इति रूपद्वयं लोके वेदे चोभयत्र साध्विति मनोरमाशयः[3] ।

---

१. 'मघवा बहुलम्' इति सूत्रस्थ 'न शिश्यं छान्दसं हि तत्' इत्यस्य प्रदीपे ९५६ तमे पृष्ठे ।

२. 'अर्वणस्तृमघोनश्च, न शिश्यं छान्दसं हि तत् ।
मतुवन्योर्विधानाच्च, छन्दस्युभयदर्शनात् ॥ इत्यत्र 'मतुबन्यौ·········
'दर्शनात्' इत्यस्य प्रदीपो नास्ति ।

३. प्रौढमनोरमायाम् 'मघवा०' इति सूत्रे ५९९–६०४ तमपृष्ठपर्यन्तम् ।

शब्दरत्ने[1] 'अर्वणस्तृमघोनश्च न शिश्यं छान्दसं हि तत्' इति सामान्यरूपेण प्रवृत्तवार्त्तिकस्य सङ्कोचे मानाभावः । कविप्रयोगाणां बहुशः प्रामादिकानां दर्शनेनार्षवचनसङ्कोचो न शोभते 'वयस्यासुमूर्ध्नोमतुप्' ( ४।४।१२७ ) इति सूत्रे भाष्यकारस्येष्ट्या अन्यथा सिद्धिकरणं च नोचितम् । तेन भाषायां 'मघवा' इति वनिबन्त प्रयोगो नोचित इत्युक्तम् मघवन् शब्दस्य 'वनोरच' ( ४।१।७ ) इति सूत्रे भाष्ये ऽव्युत्पन्नत्व स्वीकारोक्तिश्च ।

भाष्ये[2] 'अर्वणस्तृमघोनश्च' इति वार्त्तिकमुत्थाप्य 'मघवा बहुलम्' इति सूत्रं प्रत्याख्यातम् । तेन छन्दस्येव 'मघवा' 'मघवान्' इति रूपम् । प्रदीपेऽपि[3] 'मघ'—शब्दस्य च भाषायां प्रयोगो नास्तीत्युक्तम् । किन्तु काशिकायां[4] 'मघवान्' 'मघवा' इति रूपद्वयमुपलभ्यते । न्यासकारेणापि[5] अव्युत्पन्नं 'मघवा' इति शब्दमादाय रूपद्वयं भाषायामपि स्वीकृतमेव ।

पदमञ्जरीकारेण[6] भाष्यावार्त्तिकानुसारेण भाषायां 'अर्वन्' 'मघवन्' इति शब्दयोः प्रयोगाभाव एवोट्टङ्कितः । प्रक्रियाकौमुदीकारेण[7] तु लोकेऽपि 'मघवा' इति रूपं निगदितम् । प्रसादकारमतेनापि[8] तथैव । एवमेव प्रक्रियासर्वस्व-कारेणापि[9] समाहितम् ।

---

१. शब्दरत्ने 'मघवा०' इति सूत्रे ५९९–६०४ तमपृष्ठपर्यन्तम् ।

२. महाभाष्ये 'मघवा०' इति सूत्रे ९५६ तमे पृष्ठे ।

३. प्रदीपे 'मघवा०' इति सूत्रे ९५६ तमे पृष्ठे ।

४. काशिकायाम् 'मघवा०' इति सूत्रे ४८० तमे पृष्ठे ।

५. न्यासे 'मघवा०' इति सूत्रे ४८० तमे पृष्ठे ।

६. पदमञ्जर्याम् 'मघवा०' इति सूत्रे ४८० तमे पृष्ठे ।

७. प्रक्रिया कौमुद्याम् 'मघवा०' इति सूत्रे २२८ तमे पृष्ठे ।

८. प्रसादे 'मघवा०' इति सूत्रे २२८ तमे पृष्ठे ।

९. प्रक्रियासर्वस्वे 'मघवा०' इति सूत्रे ९५ तमे पृष्ठे ।

नागेशेन[1], भैरवीकारेण[2], भावप्रकाशकारेण[3], च शब्दरत्नकारस्य समर्थनं विहितम् ।

अत्र मतद्वये कः पक्ष उचित इति प्रश्ने शिष्टप्रयोगाणां सरणिरपेक्ष्यते । तथा हि—

दुदोह गां स यज्ञाय, सस्याय मघवा दिवम्, । ( रघु० १।२६ )
मघवा सप्तमे प्राप्ते वशिष्ठस्त्वष्ठमे स्मृतः ( दे० भा० १।३।२८ )
एको वै रक्षिता चैव त्रिदिवं मघवानिव, ( म० भा० ३।४५।१० )
मरीचिर्मघवांश्चैव इरा गर्भशिरास्तथा ( म० पु० ६।१८ ) च यद्यप्युभय-विधप्रयोगो दृश्यते ।

तथापि—'अर्वणस्तृमघोनश्च न शिम्यं छान्दसं हि तत्' इत्यत्र स्पष्टरूपेण भाष्यकारेण, प्रदीपकारेण, उद्योतकारेण च वनिवन्तस्य 'मघवा' इति प्रयोगस्य च्छन्दस्येव विषयतोक्ता । अतो भाष्यकैयटादिविरोधो नोचितः । तेन लोकेऽव्युत्पन्न एव 'मघवा' इति शब्दो ज्ञेयः । अस्याव्युत्पन्नत्वसाधनं 'असिद्धवदत्राभात्' ( ६।४।२२ ) इति सूत्रप्रयोजनव्याख्यावसरे 'वनोरच' ( ४।१।७ ) इति सूत्रे 'मघोनी' इति प्रयोगनिराकारणकाले च स्पष्टरूपेण भाष्ये, प्रदीपे, उद्योते च लक्ष्यते ।

वनिवन्तस्य छान्दसत्वं न केवलं 'मघवा बहुलम्' ( ६।४।१२८ ) इति सूत्रे एव, अपि तु श्वयुवमघोनामतद्धिते' ( ६।४।१।३३ ) इति सूत्रे भाष्ये, प्रदीपे, उद्योते चाप्यस्ति । अत एव न्यासकारेण लोक उभयविध प्रयोगं दृष्ट्वा स्थापितोऽव्युत्पन्नत्वपक्षः । 'हविर्जक्षिति०' इति भट्टिश्लोके तु मतुबन्तस्य प्रयोगः न तु वनिवन्तस्य । पुनस्तस्य प्रकृते दृष्टान्तदानमेव विफलम् । 'छन्दसीवनिपौ च' ( ७६५ ) इति वार्त्तिके 'श्वन्नुक्षन् पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्धन् मज्जन् नर्यमन् विश्वप्सन् परिज्मन् मातरिश्वन् मघवन्निति' ( ४३५९ ) इति कैयटोक्त-

१. लघुशब्देन्दुशेखरे 'मघवा०' इति सूत्रे ३१३-३१४ तमपृष्ठयोः ।
२. भैरव्याम् 'मघवा' इति सूत्रे ५९९-६०४ तमपृष्ठपर्य्यन्तम् ।
३. भावप्रकाशे 'मघवा' इति सूत्रे ५९९-६०४ तमपृष्ठपर्य्यन्तम् ।

मादाय दीक्षितेन यद् मध्योदात्त वनिवन्त एवछन्दो विषय इति निगदितम् तदयुक्तमेव। यतो हि तत्र भाषायां निपातितो मघवा इति प्रयोगो भवतीत्युक्तं कैयटेन। एवं 'छन्दसीवनिपौ च' इति वार्त्तिके स्पष्टरूपेण छन्दसि वनिबुक्त्या लोके वनिबन्तत्व-साधनमसङ्गतमिति प्रतीयते। इत्थं मध्योदात्तवनिवन्तस्य 'मघवा' इति शब्दस्य छन्दो-मात्रविषयता, अन्तोदात्तवनिवन्तस्य 'मघवा' इति शब्दस्य न तथेति कथनमनुचितमेव। 'अर्वणस्तृमघोनश्च०' इति वार्त्तिके 'छन्दसीवनिपौ च' इति वार्त्तिके च सामान्यरूपेण वनिवन्तस्य छान्दसविषयत्व प्रतिपादनेन अन्यत्र लोकेऽव्युत्पन्नपक्षाश्रयणेन च तथाविधकल्पने मानाभावः। तस्माद् रत्नकारेण 'वनिवन्तस्य 'मघवा' इति शब्दस्य लोके प्रयोगो न भवति' इति यदुक्तं तदेवोचितम्। कातन्त्रे 'सौ मघवान् मघवा च' विचारचिन्तामणौ 'मघवानेव मघवा' एवं लोकेऽन्यत्र यत्रमघवेति रूपं लभ्यते तत्र सर्वत्राऽव्युत्पन्नस्थलीयरूपबोधनस्वीकारे न कश्चिद् दोषः।

---

## बहुविचननिर्देशविचारः

१—सूत्रार्थः।

२—भट्टोजिदीक्षितमतेन षडर्थगतसंख्यानां बहुत्वेन "षड्भ्योलुक्" इति सूत्रे बहुवचननिर्देशः।

३—शब्दरत्नकारमतेन "षष्" शब्दो हि बहुवचनान्तस्तेन "षड्भ्योलुक्" इति सूत्रे बहुवचननिर्देशः।

४—भट्टोजिदीक्षितगृहीतपक्षे वैयाकरणानां सम्मतिः।

५—हरिदीक्षितगृहीतपक्षे शब्दशास्त्रज्ञानां विचारः।

६—युक्तायुक्तत्वसमीक्षणम्।

"षड्भ्योलुक्" (७।१।२२) इति सूत्रे "षड्भ्यः = षट्संज्ञकेभ्यः, 'लुक्' इति संज्ञाविशेषः। "जश्शसोः शि" (७।१।२०) इति सूत्रतोऽत्र सूत्रे जश्शसोरनुवृत्तिरायाति। "षड्भ्यः" इत्यत्र पञ्चमीनिर्देशेन "तस्मादित्युत्तरस्य" (१।१।६९) इत्यत उत्तरस्यानुवृत्तिः। तेन षट्संज्ञकेभ्य उत्तरस्य जश्शसोर्लुक् संज्ञा भवतीत्यर्थः।

"षड्भ्योलुक्" इत्यस्मिन् स्थाने "षड्लुक्" इति सूत्रन्यासकरणेऽभीष्टसिद्धौ गुरुभूतवहुवचनान्तन्यासः किमर्थं इति प्रश्ने भट्टोजिदीक्षितेन[1] षट्संज्ञकानां तदर्थबोधकसंख्यानां च बहुत्वेन बहुवचननिर्देशः। तेन गौणे लुग् न भवतीति समाहितम्।

शब्दरत्नकारमतेन[2] एकवचनत्वनिर्देशे "जाति" निर्देशकरणं स्यात्, तस्य सर्वत्राश्रयणमनुचितम्। तेन बहुवचननिर्देश उचितः। अथवा पाणिनेरियं शैली। अथवा "षष्" शब्दो हि बहुवचनान्तस्तेनात्र बहुवचनम्।

न्यासकारेण[3], पदमञ्जरीकारेण[4], प्रसादकारेण[5] च षट्संज्ञकानामर्थप्रधानं यत्र तत्रैवानेन लुक् इति व्याख्यातम्।

नागेशेन[6], भैरवीकारेण[7], भावप्रकाशकारेण[8] च रत्नकारोक्तमतमेव समर्थितम्।

वस्तुतः उभयपक्षस्वीकारे न दोषः। षडर्थगतबहुत्वसंख्यामादाय बहुवचनत्व-स्वीकारेऽपि सर्वत्र न तादृश्येव व्यवस्था दृश्यते। यतो हि 'तृसृभ्यो जश्' (६।१।६६), 'अष्टाभ्य औश्' (७।१।२१), 'षट् चतुर्भ्यश्च' (७।१।५५), 'सर्वादीनि सर्वनामानि' (१।१।२७) इत्यादौ बहुवचननिर्देशेन 'अष्टन आ विभक्तौ' (७।२।२४), 'सर्वनाम्नः स्मै' (७।१।१४), 'अष्टनो दीर्घात्' (६।१।१७२) इत्यादावेकवचननिर्देशेन च ज्ञायते यद् एषा ह्याचार्यस्य शैली।

---

१. प्रौढमनोरमायाम् 'षड्भ्योलुक्' इति सूत्रे ५०३-५०४ तमयोः पृष्ठयोः।
२. शब्दरत्ने 'षड्भ्योलुक्' इति सूत्रे ५०३-५०५ तमपृष्ठपर्यन्तम्।
३. न्यासे 'षड्भ्योलुक्' इति सूत्रे ५१४ तमे पृष्ठे।
४. पदमञ्जर्याम् 'षड्भ्यो०' इति सूत्रे ५१४ तमे पृष्ठे।
५. प्रसादटीकायाम् 'षड्भ्यो०' इति सूत्रे १५९ तमे पृष्ठे।
६. लघुशब्देन्दुशेखरे 'षड्भ्यो लुक्' इति सूत्रे २४६ तमे पृष्ठे।
७. भैरव्याम् 'षड्भ्यो लुक्' इति सूत्रे ५०३–५०५ तमपृष्ठपर्य्यन्तम्।
८. भावप्रकाशे 'षड्भ्यो लुक्' इति सूत्रे ५०३–५०५ तमपृष्ठपर्य्यन्तम्।

  

न हि सर्वत्र जातिग्रहणं भवति। यत्रैकवचनत्वनिर्देशस्तत्र जातिग्रहणं यत्र च बहुवचनत्वादिनिर्देशः, तत्र तदर्थगतसंख्याया ग्रहणमित्यभिप्रायः।

---

## 'अम्'-छेदः 'म्'-छेदो वेत्यत्र विचारः

१—सूत्रार्थः।

२—'अतोऽम्' इत्यत्र 'म्'—च्छेदकरणे लाघवमिति दीक्षितमतम्।

३—हरिदीक्षितमतेन 'अतोऽम्' इति सूत्रे अम् इत्येवच्छेदउचितः।

४—'अतोऽम्' इति सूत्रे अम्च्छेदविपये वैयाकरणानां सम्मतिः।

५—युक्तायुक्तत्वसमीक्षणम्।

'अतोऽम्' (७।१।२४) इति सूत्रे 'अङ्गस्य' (६।४।१) इति सूत्रतोऽङ्गाधिकारः, 'स्वमोर्नपुंसकात्' (७।१।२३) इति सम्पूर्ण सूत्रञ्चानुवर्तते। अत इति अङ्गस्य विशेषणम्। तेन अतोऽङ्गात् नपुंसकात् परस्य स्वमोरम् इत्यर्थः सम्पद्यते।

अत्र सूत्रे 'ज्ञानम्' इत्यादिस्थले सोरम्-विधानं विहाय 'सोर्म्' विधानेनैव रूपसिद्धौ द्वितीयैकवचनेऽपि 'आदेः परस्य' (१।१।५४) इति सूत्रसहकारेणाऽकारस्य मकारे, अन्त्यस्य मकारस्य संयोगान्तलोपे चेष्टसिद्धौ पुनः सूत्रे 'अम्' इतिच्छेदः किमर्थमिति प्रश्ने, विदुषां मतोपस्थापनपूर्वकं किमुचितमित्यत्र स्वयुक्तिः प्रस्तूयते—

तत्र भट्टोजिदीक्षितानुसारेण[१] 'म्'-पदच्छेदकरणे लाघवं भवति। अतः 'म्' इतिच्छेद एवोचितः। अस्य मते 'ज्ञानम्' इत्यादिस्थले 'सुपि च' (७।३।१२०) इत्यस्य प्रवृत्तिः 'रुधादिभ्यःश्नम्' (३।१।७८) इति सूत्रे 'श्नान्नलोपः' (६।४।२३) इति सूत्रे भाष्ये[२] कैयटे[३] च 'सन्निपातपरिभाषया न स्यात्'

---

१. प्रौढमनोरमायाम् 'अतोऽम्' इति सूत्रे ५५४-५६६ तमपृष्ठपर्यन्तम्।

२. भाष्ये 'श्नान्नलोपः' इति सूत्रे ९१५ तमेपृष्ठे (यज्ञानां···प्राप्नोति, दीर्घत्वमत्र बाधनं भविष्यति) पुनः परत्वान्नलोपसाधने (सन्निपात···दीर्घं न' इति ध्वनितम्।

३. प्रदीपे 'अतोऽम् इति सूत्रे ९१५ तमे पृष्ठे। 'यत्तु सन्निपात···न भवति।

इत्यादिसमाहितेन परिभाषा बलेन दीर्घवारणे 'अतिजरसम्' इति द्वितियैक-वचनेऽपि 'अतोऽम्' (७।१।२४) इति सूत्रम् बाधित्त्वा परत्वाज्जरसि कृते सन्निपातपरिभाषया लुकोऽप्रवृत्तौ रूपसिद्धिः। प्रथमैकवचने तु सन्निपातपरिभाषया जरसादेशस्याप्रवृत्तेः 'अतिजरम्' इत्येवोचितम्। अतः 'म्' छेदे तु न क्षतिः। एतत् सूत्रगत स्वोपज्ञता दीक्षितस्य नास्ति। एतन्मतसङ्केतः पूर्वपक्षरूपेण काशिकायामुपलभ्यते। 'म्' इति छेदस्य सिद्धान्तत्त्वोपादनन्तु दीक्षितस्य स्वोपज्ञत्वम्। मनोरमाकारस्य मतमिदमनुमोदितं तत्त्वबोधिनीकारेण[1]।

शब्दरत्नकृता[2] तु भाष्योक्तमतानुसारेण 'म्' आदेशे सन्निपातपरिभाषया 'अम्' इत्येव च्छेद उचितः। अत एव 'एङ् ह्रस्वात्०' (६।१।६९) इत्यत्र व्यधिकरणान्वय हल्पदानुवृत्तिरूपगौरवं फलमुखत्वान्न दोषावहम् इत्यादि प्रदर्शितम्।

रत्नकारध्वनितपक्षस्य दर्शनं तत्-पूर्ववर्त्तिषु भाष्य[3]-काशिका-[4] न्यास[5]

---

१. तत्त्वबोधिन्याम् 'अतोऽम्' इति सूत्रे ८८ तमे पृष्ठे।

२. शब्दरत्ने 'अतोऽम्' इति सूत्रे ५५५-५५७ तमपृष्ठपर्यन्तम्।

३. भाष्ये 'अतोऽम्' इति सूत्रे २६ तमे पृष्ठे (अतोऽम् इति अम्भावेन भवितव्यम्।) एवं 'एङ् ह्रस्वात्०' (६।१।६९) इति सूत्रे ७२० तमे पृष्ठे 'तच्चामर्थम्' इति वार्त्तिके दत्तम्।

४. काशिकायाम् 'अतोऽम्' इति सूत्रे ५५६ तमे पृष्ठे (अकारान्तान्नपुंसकात् .........आदेशो भवति)।

५. न्यासे 'अतोऽम्' इति सूत्रे ५५६-५५७ तमयोः पृष्ठयोः (एवं तर्हि......... अमादेशं कुर्वन्नेतज्ज्ञापयति-नित्येषा परिभाषेति।)

  

पदमञ्जरी[१] - प्रदीप[२] - प्रक्रियाकौमुदी[३] - प्रसादटीका[४] - मनोरमाखण्डनग्रन्थेषु[५] एवं शब्दरत्नतः परवर्तिनोषु शब्देन्दुशेखर[६]-भैरवी[७]-भावप्रकाशप्रभृतिषु[८] टीकासु च भवति।

न केवलं पाणिनीयनयानुगामिन एव 'अम्'-छेदमङ्गीकृतवन्तः, अपित्वपाणिनीये शाकटायनव्याकरणे[९], सारस्वतव्याकरणे[१०], सरस्वतीकण्ठाभरणे[११], चान्द्रेऽप्यस्य[१२] पक्षस्यैव दर्शनं भवति।

समीक्षात्मकदृष्ट्या विचारेऽपि 'अम्' छेद एवौचित्यमावहति। यतो हि यत्र-यत्र 'सुपिच' (७।३।१०२) इत्यस्य प्रवृत्तिस्तत्र तत्र यदि सन्निपातपरि-

---

१. पदमञ्जर्याम् 'अतोऽम्' इति सूत्रे ५५६ तमे पृष्ठे (न च दीर्घविधौ सन्निपातपरिभाषा प्रवर्तते, वृक्षायेत्यादावपि प्रसङ्गात्। तस्मादमेव विधेयः)

२. प्रदीपे 'एङ्ह्रस्वात्' इति सूत्रे ७२० तमे पृष्ठे (अकारलोपस्यापरनिमित्तत्वात्, दीर्घविधौ प्रतिषेधाद्वास्थानिवत्वाभावः)।

३. प्रक्रियाकौमुद्याम् 'अतोऽम्' इति सूत्रे १९५ तमे पृष्ठे।

४. प्रक्रियाकौमुद्याः प्रसादाख्यटीकायाम् 'अतोऽम्' इति सूत्रे १९५ तमे पृष्ठे।

५. मनोरमाखण्डने 'अतोऽम्' इति सूत्रे (खं० नं० ४९) (यत्वत्र मित्येवच्छेदो लाघवात्। तन्न, सोर्मे कृते ज्ञानमिति सिद्धे द्वितीयैकवचनत्वादेः परस्येत्यकारस्यामकारे अत इति तकार उच्चारणार्थं इति भवैतवोक्तवान् निमित्तस्याकारसन्निपातस्य दीर्घे सत्पथविरोधात्' इति)

६. लघुशब्देन्दुशेखरे 'अतोऽम्' इति सूत्रे २८३-२८४ तमयोः पृष्ठयोः।

७. भैरव्याम् 'अतोऽम्' इति सूत्रे ५५४-५६६ तमपृष्ठपर्यन्तम्।

८. भावप्रकाशे 'अतोऽम्' इति सूत्रे ५५६-५५७ तमयोः पृष्ठयोः।

९. शाकटायने 'अतोऽम्' इति सूत्रे ५१ तमे पृष्ठे।

१०. सारस्वते 'अतोऽम्' इति सूत्रे ११६-११७ तमयोः पृष्ठयोः।

११. सरस्वतीकण्ठाभरणे 'अतोऽम्' इति सूत्रे (३।१।१८२)।

१२. चान्द्रे 'अतोऽम्' इति सूत्रे १६५ तमे पृष्ठे।

भाषायाः प्रवृत्तिः स्यात्, तदा 'सुपि च' (७।३।१०२) इति सूत्रस्यैव वैयर्थ्यम्। अतः 'सुपि च' (७।३।१०२) इति सूत्रारम्भसामर्थ्येनास्य विषये सन्निपात-परिभाषा न प्रवर्त्तते। यद्यपि 'कष्टाय क्रमणे' (३।१।१४) इति निर्देशेन 'ङेर्यः' (७।१।१३) इत्यनेन यकारे सति यत्र 'सुपि च' इत्यस्य प्रवृत्तिस्तत्रैव 'सन्निपातपरिभाषा' न प्रवर्त्तत इत्यपि वक्तुं शक्यते, किन्तु एतदपेक्षया सर्वत्र 'सुपि च' (७।३।१०२) विषये परिभाषा न प्रवर्तत इति नियम एवोचितः। अन्यथा रामाभ्याम्, वृक्षाभ्याम्, इत्यादिस्थलेऽपि दीर्घे सति अदन्तत्व-विघातेन 'सन्निपातपरिभाषया' दीर्घो न स्यात्। अत एव प्रायः सर्वे वैयाकरणाः 'म्' इतिच्छेदे दीर्घापत्ति प्रदर्शितवन्तः, न तु परिभाषाया अनित्यत्वम्, दीर्घविषये वा परिभाषा न प्रवर्तत इत्यादिकम्। तेन भाष्ये[1] 'कृन्मेजन्तः' (१।१।३९) इति सूत्रे सन्निपातपरिभाषामुद्भाव्य 'दाक्षिः' 'प्लाक्षिः' इत्यादौ दोषं च प्रदर्श्य 'न हि दोषा सन्ति इति परिभाषा न कर्तव्या लक्षणं वा न प्रणेयम्।' इत्यादि प्रदर्शनपूर्वकं परिभाषां स्वीकृत्य 'प्रतिविधेयं दोषेषु' इत्युक्तम्। कैयटेनापि[2] परिभाषा स्वीकृता दोषाश्च परिहृताः।

"रुधादिभ्यः श्नम्" (३।१।७८) इति सूत्रे "श्नान्नलोपः" (६।४।२३) इति सूत्रे च कैयटेन[3] "सुपि च" (७।३।१०२) इति दीर्घविषये सन्निपातपरिभाषया वारणं कृतम्, किन्तु तन्नोचितम्। यतो हि उभयोः सूत्रयोः भाष्ये[4] "यज्ञानां यत्नानामित्यत्र दीर्घत्वं क्रियताम् न्नालोप इति "तदा" परत्वान्नलोपः स्यात्, तस्माच्च शकारः कर्त्तव्य इति प्रदर्शितम्। न तु सन्निपातपरिभाषया "सुपि च" (७।३।१०२) इति दीर्घं नेत्युक्तम्। यद्यपि "श्नान्नलोपः"

---

१. 'कृन्मेजन्तः' इति सूत्रभाष्ये २३३ तमे पृष्ठे।

२. प्रदीपे "कृन्मेजन्तः" इति सूत्रे २३३-२३४ तमयोः पृष्ठयोः।

३. प्रदीपे "रुधादि०" इति सूत्रे ६९ तमे पृष्ठे, "श्नान्नलोपः" इति सूत्रे ६१५ तमे पृष्ठे।

४. भाष्ये "रुधादि०" इति सूत्रे ६९ तमे पृष्ठे, "श्नान्नलोपः" इति सूत्रे ६१५ तमे पृष्ठे।

  

( ६।४।२३ ) "रुधादिभ्यः श्नम्" ( ३।१।७८ ) इति सूत्रापेक्षया "सुपि च ( ७।२।१०२ ) इत्यस्य परत्वात् प्रवृत्तिर्लभ्यते किन्तु "सुपि च" ( ७।३।१०२ ) इत्यस्य परनिमित्तकतया बहिरङ्गत्वेन "श्नान्नलोपः" (६।४।२३) इत्यस्याङ्गावयव श्नमः परस्य नस्य लोप इत्यर्थेऽनैमित्तिकतयान्तरङ्गत्वेन, नलोपदृष्ट्याऽसिद्धत्वबोधनेन नलोपापत्तिस्तदवस्था। अतः "परत्वात्" इति भाष्यस्यान्तरङ्गत्वादप्यर्थः। अन्यथा परत्वादित्यस्य परत्वमात्रमर्थस्वीकारे, "सुपि च" ( ७।३।१०२ ) इत्यस्यैव परत्वे भाष्यासंगतिः स्यात्। अतोऽन्तरङ्गत्वात् नलोपापत्तिस्तदवस्था। तद्वारणाय शकारग्रहणम् "श्नान्नलोपः" इति सूत्रे कर्त्तव्यम्, न तु परिभाषया "सुपि च" ( ७।३।१०२ ) इत्यस्य प्रवृत्तिरेव न स्यादिति वक्तव्यम्। द्वितीयैकवचने "अतोऽम्" ( ७।१।२४ ) इति बाधित्वा परत्वाज्जरसि कृते सन्निपातपरिभाषया लुकोऽप्रवृत्तौ "अतिजरसम्" इति रूप-सिद्धेः। प्रथमैकवचने तु सन्निपातपरिभाषया जरसादेशस्याप्रवृत्तेः "अतिजरम्" इत्येवोचितमित्यादिकथनमप्यसंगतम्। क्वचित् प्रकृत्यादेशात् पूर्वं विभक्त्यादेशः, क्वचिच्च विभक्त्यादेशात् पूर्वं प्रकृत्यादेश रूपार्धजरतीयस्यानौचित्यम्। अत एव "टाङसि०" ( ७।१।१२ ) इति सूत्रे जरसादेशमनभ्युपयन् "अतिजरेण" "अतिजरात्" इति भाष्यम्, न तु "अतिजरसिन्" 'अतिजरसात्' इति भाष्यकैयटं[1] च न व्याकुप्यते। कथंचित् परिभाषाविषये क्लिष्टकल्पनां कृत्वा "म्" छेदस्वीकारे द्वितीयैकवचनेऽपि प्रथमैकवचनवद् 'अम्' इत्यत्र सम्पूर्णस्य स्थाने मादेशे प्राप्ते "अलोन्त्यस्य" ( १।१।५२ ) इत्यनेन अन्त्यस्यमस्य एव मादेशः, "आदेःपरस्य" ( १।१।५४ ) इत्यस्य परत्वेन सतापि नादिमस्याकारस्य। अन्यथा 'कुलं याति' इत्यादावनुस्वारोऽपि न स्यात्, 'म्'—विधानस्य वैयर्थ्यशङ्कया। 'अजरसं कुलम्' इत्यादिप्रयोगासिद्धि प्रसङ्गाच्च। 'एङ्ह्रस्वात्०' ( ६।१।६९ ) इति सूत्रे भाष्ये 'तच्चामर्थम्' इति वार्त्तिकव्याख्यानेऽमर्थम् अमो लोपो यथा स्यात्। 'हे कुण्ड !' हे पीड ! इत्यत्र कण्ठरवतः अमर्थमित्येवोक्तं भाष्यकारेण,[2] न तु 'म्' अर्थम् 'म्' छेदेऽपाणिनीयत्वं च स्यात्। अतः सूत्रे

१. 'टाङसि०' इति सूत्रे भाष्ये प्रदीपे च १९ तमे पृष्ठे।

२. भाष्ये 'एङ्ह्रस्वात्०' इति सूत्रे ७२० तमे पृष्ठे।

'अम्'—छेद एवोचितः। अमोऽम्-विधानं 'स्वमोर्नपुंसकात्' (७।१।२३) इत्यनेन अमोलुग्बाधनार्थमिति सुधियो विभावयन्तु।

## 'साम' इत्यत्र सुड्विशिष्टनिर्देशे विचारः

१—सूत्रार्थः।

२—'साम आकम्' इति सूत्रे ससुट्कनिर्देशो भाविनो सुट्निवृत्यर्थम् इति भट्टोजिदीक्षितस्य पक्षः।

३—'साम आकम्' इति सूत्रे ससुट्कनिर्देशो भाविनः सुट्बुद्धेः निवृत्यर्थमिति शब्दरत्नकारस्य पक्षः।

४—भाविनः सुट् निवृत्यर्थं 'साम् आकम्' इत्यत्र ससुट्निर्देश इति पक्षमादाय पाणिनीयानां विचारः।

५—अपाणिनीयव्याकरणग्रन्थे ससुट्कविषये विचारः सूत्रस्वरूपस्य च प्रदर्शनम्।

६—शब्दरत्नकारगृहीतपक्षे शब्दशास्त्रज्ञानां सम्मतिः।

७—युक्तायुक्तत्वसमीक्षणप्रसङ्गे वस्तुतस्तूक्त्यौचित्यप्रतिपादनम्।

'साम आकम्' (७।१।३३) इति सूत्रे साम् आकम् इति पदद्वयम्। तत्र साम इति षष्ठ्यन्तम्, आकम् इति प्रथमान्तम्। 'षष्ठीस्थाने योगा' (१।१।४६) इत्यतः 'स्थाने' इत्यनुवर्तते। 'परश्च' (३।१।२) इत्यतः परशब्दोऽनुवर्तते। तच्च साम्-पदेन सह सम्बद्ध्यते। 'युष्मदस्मद्भ्यां ङसो अश्' (७।१।२७) इत्यतः युष्मदस्मद्भ्याम् अनुवर्तते। ततः 'युष्मदस्मद्भ्यां परस्य सामः स्थाने आकमादेशो भवति' इत्यर्थः सम्पद्यते।

तथा च युष्मद्—आम् इत्यवस्थायाम् 'साम आकम्' (७।१।३३) इत्यत्र सुड्विशिष्टस्य निर्देशेन आकमादेशः सुट्प्रवृत्युत्तरं स्यात् सुट्प्रवृत्तिश्च 'शेषे लोपः' (७।२।९०) इत्यनेन अन्त्यलोपे सति भवेत्। अन्त्यलोपं विनाऽदन्तत्वाभावेन 'सुट्'–प्रवृत्तिः कर्तुं न शक्यते। अन्त्यलोपश्च आकमादेशोत्तरं प्रवर्तते। ततः पूर्वं आम् इत्यस्य अनादेशेन 'योऽचि' (७।२।८९) इत्यस्य निमित्तत्वेन 'शेषेलोपः आकमादेशं विना न भवति। इत्थं च चक्रज दोषाभिभूतेन

युस्मद्—आम इत्यवथायां पूर्वं आकमि, ततः 'शेषे लोपः' इत्यनेन अन्त्यस्य दकारस्य लोपः। आकम् इत्यस्य स्थानिवद्भावेन आमि, पुनः 'आमिसर्वनाम्नः०' (७।१।५२) इति सुट्प्राप्तौ 'साम आकम्' सूत्रे सुड्विशिष्टस्य निर्देशो भाविनः सुटोवाघनार्थम्। टिलोपपक्षे तु 'युष्मद्' इत्यत्र अद्भागस्य लोपे, अदन्तत्वाभावेन सुड्प्रवृत्तौ ससुट्कनिर्देशो व्यर्थः। अथवा 'साम्' इत्यत्र तन्त्रम्। अतः युष्मद् आम्, इत्यत्र पूर्वम् आकमि ततोऽन्त्यलोपे ततः स्थानिवद्भावेन आमि ततः सुटि पुनः आकमि ससुट्क-निर्देशः संगच्छत इति भट्टोजिदीक्षिताभिप्रायः।

एतद्-विपरीतम् 'सामः प्रसङ्गे आकम् भवति' इत्यपि पक्षः। यतो हि भाविनो सुटो निवृत्यर्थमित्युपपादने समुपस्थितानां निवृत्तौ शब्दाऽनित्यत्वप्रसङ्ग उपतिष्ठते। अतः 'साम्' इति वृद्धिप्रसङ्गे 'आकम्' इति वृद्धिः कर्त्तव्या। स्थानिवद् भावेन आमृत्वमादाय सुटि, तत आकम् विधानेन ससुट्कनिर्देशस्य सार्थक्यकरणं नोचितम्। स्थानिवद्-भावेनापि सूत्रे ससुट्कनिर्देशेन सामृत्वस्यैवानयनं भविष्यति, नामृत्वस्य। तन्त्रं भवितुंनार्हति। तन्त्रेणापि 'आम्-आम्' इत्येव तन्त्रम्, न 'साम्' 'आम्' इति। यतो हि वैरूप्ये तन्त्रे प्रमाणाभावः। तेन आम्येव सामृत्वस्यारोपं कृत्वा तत आकम्—वृद्धिः। एतद्भिप्रायकमेव शब्दरत्नकारस्य[१] पक्षः।

भाष्ये[२], काशिकायाम्,[३], न्यासे[४], पदमञ्जर्याम्[५], प्रदीपे[६], प्रक्रियाकौमुद्याः प्रसादटीकायाम्[७], प्रक्रियासर्वस्वग्रन्थे[८] च यत् प्रतिपादितम्, दीक्षितेन तत्त्ववोधिनी-

---

१. शब्दरत्ने 'साम आकम्' इति सूत्रे ६४३-६४५ तमपृष्ठपर्यन्तम्।
२. भाष्ये 'साम आकम्' इति सूत्रे ३८ तमे तस्मात् सुट् प्रतिषेधः वार्त्तिके )।
३. काशिकायाम् 'साम आकम्' इति सूत्रे ५६५ तमे पृष्ठे (तस्यैव···निवृत्यर्थम्)
४. न्यासे 'साम आकम्' इति सूत्रे ४३५ तमे पृष्ठे ( अतस्तस्य···ससुट्कः )।
५. पदमञ्जर्याम् 'साम् आकम्' इति सूत्रे ५६४-५८५ तमयोः पृष्ठयोः।
६. प्रक्रियाकौमुद्याः प्रसादटीकायाम् 'साम् आकम्' इति सूत्रे २५१ तमे पृष्ठे।
७. प्रक्रियासर्वस्वे 'साम् आकम्' इति सूत्रे १२५ तमे पृष्ठे।
८. सारस्वतव्याकरणे चन्द्रकीर्ति टीकायां च १७६ तमे पृष्ठे।

कारेण[1] च तदैव स्वशब्देनोपस्थापितम् ।

अपाणिनीये सारस्वतव्याकरणे[2] चन्द्रकीर्तिटीकायां च भाविनः सुड्निवृत्त्यर्थमेव ससुट्कनिर्देशः । मुग्धबोधे[3] तु सत्यपि ससुट्कनिर्देशे, अस्मिन् विषये किमपि नोपपादितम् । शाक्टायनव्याकरणे[4] तु ससुट्कनिर्देशविशिष्टपाठ एव नास्ति ।

नागेशेन[5], भैरवीकारेण, भावप्रकाशकारेण[6] तु रत्नकार एव समर्थितः । समीक्षात्मकरीत्याविचारे तु दीक्षितमते शब्दानित्यत्त्वप्रसङ्ग आयाति । अतस्तदपेक्षा भाविसुड्वुद्धेर्निवृत्तिपक्षस्यैवौचित्यम् ।

यद्यप्यनेके विद्वांसो भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देश इति समाहितवन्तः किन्तु तन्न युक्तम् । पूर्वम् आकमि कृते, ततोऽन्त्यलोपे ततः स्थानिवद्भावेन आमृत्वमादाय सुट्प्रवृत्तिर्भवितुं नार्हति । 'शेषे लोपः' (७।१।५२) इत्यस्य आत्त्व-यत्वनिमित्तेतरत्त्व-विभक्तिसापेक्षत्वेन वहिरङ्गत्वे 'आमि सर्वानम्नः' (७।१।५२) इत्यस्य अवर्णात्परस्य सर्वानाम्न आमः सुडागम-विधाने अल्पापेक्षत्वेनान्तरङ्गत्वे, 'सुट्'—दृष्टया लोपाऽसिद्धत्वेन अदन्तत्वाभावेन भाविसुड्निवृत्तिः सुतरामेव स्यात् । अतः 'आम आकम्' इति पाठकरणेऽपि न दोषः । अस्मिन् पक्षे स्थानिवद्-भावेन सुट्त्वमादाय 'बहुवचने झल्येत्' (७।३।१०३) इति एत्वप्रसङ्गोऽपि न भवति । 'योऽचि' (७।२।८९) इत्यस्यापि प्रसङ्गो नायाति । ततः पूर्वमेव आकम्-प्रवृत्तेः । 'शेषे लोपः' (७।२।९०) इत्यनेन अन्तलोपः टिलोपो वा भवतु, कुत्रापि फलभेदो न । एवम् 'योऽचि' (७।२७९)

---

१. प्रदीपे 'साम् आकम्' इति सूत्रे ३८ तमे पृष्ठे ।
२. तत्त्वबोधिन्याम् 'साम् आकम्' इति सूत्रे ११० तमे पृष्ठे ।
३. मुग्धबोधे १९१ तमे पृष्ठे ।
४. 'युस्मदस्मद्भ्यामाकम्' इति सूत्रे शाकटायने ७९ तमे पृष्ठे ।
५. लघुशब्देन्दुशेखरे 'साम आकम्' इति सूत्रे ३३० तमे पृष्ठे ।
६. भैरव्याम् 'साम आकम्' इति सूत्रे ६४४-६४५ तमयोः पृष्ठयोः ।
७. भावप्रकाशे 'साम आकम्' इति सूत्रे ६४४-६४५ तमयोः पृष्ठयोः ।

  

इत्यस्य प्रवृत्तौ ततः सुटि ततः आकमि 'युष्मयाकम्' इति प्रयोगो मा भूत् तदर्थम् 'साम आकम्' (७।१।३३) इति सूत्रारम्भसामर्थ्यात् पूर्वम् आकमि सूत्रस्य चारितार्थ्ये, पुनर्भाविनः सुटो निवृत्तौ कृतायां ससुट्कनिर्देशकथन-मसंगतमेव ।

'साम आकम्' (७।१।३३) इत्यत्र 'साम्-आम्' इति तन्त्रकरणेऽपि न कश्चिद् लाभः, अदन्तत्वाभावेन सुटप्रवृत्तौ तन्त्रस्य नैरपेक्ष्यम् एव । अत आम्येव साम्त्वारोपेण आकमुचितम् । अथवा भाविनः 'सुट्' इत्यस्यासंभवेन 'योऽचि' (७।२।८९) इत्यनेन दकारस्य यकारे ततः सुटि, ततः आकिम, ततः निमित्तापाये नैमित्तिकस्याप्यपायः' इत्यनेन यत्वस्यासिद्धत्वेन 'शेषे लोपः' (७।२।९०) इति टिलोपः, अन्त्यलोपो वा युष्माकमिति सिद्धौ यथान्यासेऽपि न क्षतिः ।

वस्तुतः 'आम + आकम्' इति न्यासे दोषाभावेऽपि 'उपस्थितं परित्यज्यानुप-स्थितकल्पने मानाभावः', 'उपस्थितस्य गतिश्चिन्त्या' इत्याद्युक्त्या सूत्रकृता च ससुट्कनिर्देशेन 'माविसुड्बुद्धेः आकम्' इत्यपेक्षया च आम्येव साम्त्वारोपेण आकमि, ततः 'शेषे लोपः' (७।२।९०) इत्यन्त्य लोपः टिलोपो वा युष्माकं सिद्धयति इत्ययं पक्ष एव सयुक्तिकोमन्तव्योऽस्ति । स्फोटात्मक शब्दातिरिक्त-शब्दानां नित्यत्वे प्रमाणमपि नोपलभ्यत इति विचारणीयम् ।

---

## बहुवचननिर्देशविचारः

१—सूत्रार्थः ।

२—'भट्टोजिदीक्षितमतेन षट्चतुर्भ्यश्च' इति सूत्रेऽर्थाधिकारानुरोधेन षडर्थसंख्याप्राधान्याद बहुवचननिर्देशः ।

३—शब्दरत्नकारमतेन षट् संज्ञकानां बहुत्वात् 'षट्चतुर्भ्यश्च' इति सूत्रे बहुवचननिर्देशः ।

४—षडर्थसंख्याप्राधान्यमादाय 'षट्चतुर्भ्यश्च इति सूत्रे बहुवचननिर्देशे वैयाकरणानां सम्मतिः ।

५—षट्संज्ञकानां बहुत्वात् 'षट्चतुर्०' इति सूत्रे बहुवचन निर्देशे वैयाकरणानां सम्मतिः ।

६—युक्तायुक्तत्वसमीक्षणम् ।

'षट्चतुर्भ्यश्च' (७।१।५५) इति सूत्रे 'षड्भ्यः, चतुर्भ्यश्चेति पञ्चम्यन्तं समस्तं पदम् । 'आमिसर्वनाम्नः' (७।१।५२) इति सूत्रत आम् इत्यनुवर्तते । 'ह्रस्वनद्यापो नुट्' (७।१।५४) इति सूत्रतो नुडनुवर्तते । ततः षट्संज्ञकेभ्यश्चतुरशब्देभ्यश्च परस्यामो नुडागमो भवतीत्यर्थः संजायते ।

प्रकृतसूत्रे षट्, चतुर, इति पदद्वयम् । तत्र द्वन्द्वगतविभक्तौ सत्याम् एकवचनं स्यात् । अथवा 'शब्दप्राधान्ये इतरयोगे' द्विर्वचननिर्देशः स्यात्, किन्तु द्विर्वचननिर्देशे गौरवं भवति । अतः शब्दाधिकारं विहाय, अर्थाधिकारानुरोधेन बहुवचननिर्देशः । तत्र यत्र षडर्थसंख्यायाः प्राधान्यं तत्र सर्वत्रानेन नुडागमो भविष्यति, यतो हि संख्याया, यत्राप्राधान्यं तत्र तु न नुडागम इति भट्टोजिदीक्षिताभिप्रायः[१] ।

शब्दरत्नकारमतेन[२] षट्संज्ञकानां बहुत्वाद् बहुवचनम् । यथा 'न षट्स्वस्रादिभ्यः' (४।१।१०) इत्यत्र शब्दबाहुल्याभिप्रायेण बहुवचननिर्देशः । 'तिसृभ्यो जश्' (६।१।६६) इत्यत्र प्रयोगबाहुल्येन यथा बहुवचननिर्देशः, तथैव प्रकृतेऽपि ।

काशिकाकारेण[३], न्यासकारेण[४], पदमंजरीकारेण[५], प्रसादकारेण[६] बहुवचननिर्देशेन संख्यप्राधान्यस्य ग्रहणं कृतम् । एतदेव दीक्षितोक्तस्य बीजम् । यस्यानु-

१. प्रौढमनोरमायाम् 'षष्ट्चतु०' इति सूत्रे ५८२ तमे पृष्ठे ।
२. शब्दरत्ने 'षष्ट्चतुर्०' इति सूत्रे ५८२-५८३ तमयोः पृष्ठयोः ।
३. काशिकायाम् 'षष्ट्चतुर्०' इति सूत्रे ५९१ तमे पृष्टे ।
४. न्यासे 'षट्चतुर्०' इति सूत्रे ५९१ तमे पृष्ठे ।
५. पदमञ्जर्याम् 'षट्चतुर०' इति सूत्रे ५९१ तमे पृष्ठे ।
६. प्रक्रियाकौमुद्याः प्रसादटीकायाम् 'षट्चतुर्०' इति सूत्रे २१७ तमे पृष्ठे ।

मोदनं तत्वबोधिनीकारेणापि[७] कृतम् ।

नागेशेन[८], भैरवीकारेण[९], भावप्रकाशकारेण[१०] च शब्दरत्नकारमतं समर्थितम् । इदं रत्नकारस्य स्वकीयोद्भावनम् ।

वस्तुतस्तु दीक्षितमतेन रत्नकारमतेन वा नेह कश्चन दोषः । सूत्रमिदं महाभाष्ये नोपलभ्यते । कुत्रचित् समाहारेऽप्येकवचनं दृश्यते, यथा 'स्तोः श्चुना' श्चुः ( ८।४।४० ) इत्यादौ एवं प्रयोगाणां बहुत्वेऽप्येकवचनं दृश्यते यथा— 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' ( १।१।७३ )। अतो यत्र यादृश्प्रयोगेऽदृष्टफल-बाहुल्यम्, तत्र तादृशप्रयोगः कृतः । अत्र बहुवचन निर्देशेऽपि तथैव मन्तव्यम् । अथवा भट्टोजिदीक्षित-रत्नकारादिभिर्व्याख्यातं पक्षद्वयमेव स्वीकर्त्तव्यम् इति ।



## औतस्तकारे विचारः

१—सूत्रार्थः ।

२—भट्टोजिदीक्षितमतेन 'दिव औत्' इति सूत्रे औतस्तकार उच्चारणार्थो नेत्संज्ञकः ।

३—शब्दरत्नकारमतेनोच्चारणार्थत्वेऽपि औतस्तकार इत्संज्ञक एव ।

४—औतस्तकार उच्चारणार्थो नेत्संज्ञक इति पक्षे विदुषां विचारः ।

५—औतस्तकार उच्चारणार्थत्वेऽपीत्संज्ञक इति पक्षे वैयाकरणानां विचारः ।

६—युक्तायुक्तत्वसमीक्षणम् ।

'दिव औत्' ( ७।१।८४ ) इति सूत्रे पदद्वयमात्रं विद्यते । तेन अभीष्टार्थस्य लाभो न भवति । अतः प्रातिपदिकाधिकारे पठितत्वेन प्रातिपदिकाधिकारः, 'परश्च' ( ३।१।२ ) इत्यतः परशब्दः 'सावनडुहः' ( ७।१।८२ ) इत्यतः 'सु'

---

७. तत्वबोधिन्याम् 'षट्चतुर्०' इति सूत्रे तमे पृष्ठे ।

८. लघुशब्देन्दुशेखरे 'षट्चतुर्०' इति सूत्रे ३०२ तमे पृष्ठे ।

९. भैरव्याम् 'षट्चतुर्०' इति सूत्रे ५८२ तमे पृष्ठे ।

१०. भावप्रकाशे 'षट्चतुर्०' इति सूत्रे ५८२-५८३ तमयोः पृष्ठयोः ।

इत्यस्यानुवृत्तिश्च। तेन दिव् इति प्रातिपदिकस्य औत् स्यात् सौ परे इत्यर्थः। तच्च 'अलोन्त्यस्य (१।१।५३) इत्यनेन अन्त्यस्यैव भवति।

अत्र सूत्रे 'औत्' पदोत्तरतकारस्य लक्ष्ये किमपि फलं न दृश्यत इति वैयाकरणानां सम्मतिप्रदर्शनपूर्वकं विचारः प्रस्तूयते—

भट्टोजिदीक्षितमतेन[1] तकार उच्चरणार्थः। न तस्य किञ्चित् फलम्। हकारादिष्वकारो यथा उच्चारणार्थो न त्वित्संज्ञकः, तथैव औतस्तकारोऽप्युच्चारणार्थो न त्वित्संज्ञ इति।

औतस्तकारस्योच्चारणार्थत्वेऽपि तस्य नानित्संज्ञकत्वम् 'तित्स्वरितम्' (६।१।१८५) इत्यनेन तित्स्वरापत्तिस्तु न शङ्कनीया। यत्र प्रत्ययसम्बिन्धिनस्तकारस्येत्वे सति तित्वं तत्रैव तित्—स्वरो भवतीति तितिप्रत्ययग्रहणं कर्तव्यम्' इति वार्त्तिकेन ज्ञायते। इह यद्यपि औतस्तकारस्य तित्वम्, तथापि तस्य प्रत्ययसम्बिन्धित्वाभावेन तित्स्वरापत्तिर्न सम्भवति। अयं रत्नकाराशयः[2]।

तत्र न्यासकारेण[3] तत्वबोधिनीकारेण[4] चोच्चारणार्थ एव तकार इति प्रतिपादितम्। सारस्वतव्याकरणेऽपि[5] तकारस्य निष्प्रयोजनतां ज्ञात्वा 'दिव औ' इत्येव सूत्रितम्।

हरिदीक्षिततः पूर्वं 'दिव औत्' इति सूत्रे औतस्करारस्येत्संज्ञकत्वं चक्रपाणिनाऽपि[6] स्वीकृतम्। नागेशेन[7] शब्देन्दुशेखरे, भावप्रकाशकारेण[8] च, भावप्रकाशे

---

१. प्रौढमनोरमायाम् 'दिव औत' इति सूत्रे ५८१ तमे पृष्ठे।
२. शब्दरत्ने 'दिव औत्' इति सूत्रे ५८१ तमे पृष्ठे।
३. न्यासे 'दिव औत्' इति सूत्रे ६३० तमे पृष्ठे (तकारो मुखसुखार्थः)।
४. तत्त्वबोधिन्याम् 'दिव औत्' इति सूत्रे ९४ तमे पृष्ठे (तकार उच्चारणार्थः)
५. सारस्वते 'दिव औत्' इति सूत्रे १५९ तमे पृष्ठे।
६. मनोरमाखण्डने 'दिव औत्' इति सूत्रे 'त उच्चारणार्थ इति केचित्। तन्न, तस्य लोप इति सूत्रस्थेनानुधावनमेकान्तत्वे दिव औत्सर्वदिशः स्यादिति भाष्येण विरोधात्' इति।
७. लघुशब्देन्दुशेखरे 'दिव औत्' इति सूत्रे २९९-३०१ तमपृष्ठपर्यन्तम्।
८. भावप्रकाशे 'दिव औत्' इति सूत्रे ५८१ तमे पृष्ठे।

स्पष्टतोरत्नकारोक्तदिशाऽनुधावनं विहितम् । दाधिमथेऽपि तथैव ।

अत्रसमीक्षात्मकरीत्या विचारे तकारस्योच्चारणार्थत्वेऽपीत्संज्ञा कर्तव्यैव । अन्यथा लक्ष्ये तान्तविशिष्टस्य श्रवणापत्तिः । अथवा 'द्यौः' इत्यत्र औत् कृते 'हृलङ्याभ्यो०' ( ६।१।६८ ) इति सुलोपे 'संयोगान्त०' ( ८।२।२३ ) इति तलोपे 'द्यौ य इति निर्विसर्गकप्रयोगापत्तिः । तकाराऽनुबन्धस्य उच्चारणार्थमात्र-प्रयोजनोक्तिरपि न सुष्ठु लक्ष्यते । आचार्यकृन्निर्देशेन तान्तत्वे एवापूर्वोत्पत्तिः, न तकाररहिते । इदमपि फलकोटौ मन्तुं शक्यते । अन्यथा मुखसुखार्थमात्रप्रयोजने त्वेवंविधा अनुबन्धा एतादृशेषु सर्वेषु सूत्रेषु योजनीयाः । किन्तु पाणिनीयेषु एतादृशेषु बहुषु सूत्रेषु तकारविशिष्टा उच्चारणार्थका अनुबन्धा न कृताः । तकारोच्चारणेन 'तपरस्तत्कालस्य' ( १।१।७० ) इत्यनेन तत्कालनिर्देशेन 'औ' इत्येवादेशो भवति, न तु अ च ओ च 'अ + ओ' इत्याभ्यां संहितस्य 'औ' इति प्रतिवर्णस्यादेशः । अन्यथा तपरकरणं व्यर्थं स्यात् ।

प्रकारान्तरेण विचारदृशा त्वित्संज्ञा स्यादेव । महाभाष्ये ध्वनितं यत् सर्वे-षामनुबन्धानामित्संज्ञा लोपेनैवापहारो दृश्यत इतीहापि सूत्रे तकारस्येत्संज्ञा स्यादेव । ध्वनितञ्च 'गाङ्लिटि'[1] ( २।४,४९ ), 'इदितो[2] नुमधातोः (७१५८) 'वेरपृक्तस्य[3]' ( ६।१६७ ), 'तित्स्वरितम्'[4] ( ६।१।१८५ ), 'तस्य लोपः[5]' ( १।३।९ ), "अदड्डतरादिभ्यः[6]" ( ७।१।२५ ) इत्यादिसूत्रेषु भाष्ये कैयटे च ।

यद्यपि 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् इति नीत्यनुसारेण औत्-पदस्थतकारस्येत्संज्ञाकरणं व्यर्थम्, तथाप्युच्चारणार्थकृत–निर्देशे तकारे उपदेशवशात्

---

१. कौमुद्याः दाधिमथटीकायाम् 'दिव औत' इति सूत्रे ९४ तमे पृष्ठे ।
२. 'गाङ्लिटि' इति सूत्रे भाष्ये कैयटे च ५५४-५५५ तमयोः पृष्ठयोः ।
३. 'इदितो नुम्धातो' इति सूत्रे भाष्ये प्रदीपे च ५६-५७ तम पृष्ठयोः ।
४. 'वेरपृक्तस्य' इति सूत्रे भाष्ये कैयटे च ७१७ तमे पृष्ठे ।
५. 'तित्स्वरितम्' इति सूत्रे भाष्ये कैयटे च ८१ तमे पृष्ठे ।
६. 'तस्य लोपः इति सूत्रे भाष्ये कैयटे च १३६-१३८ तमपृष्ठपर्यन्तम् ।
७. 'अदड्डतरादिभ्यः' इति सूत्रे भाष्ये कैयटे च २८-२९ तमपृष्ठयोः ।

'हलन्त्यम्' ( २।३।३ ) इति सूत्राप्रवर्तने न किमपि विनिगमकमितीत्संज्ञा प्रवर्तेत । दृश्यते च यदा वृष्टिर्भवति तदा क्षेत्रे, गृहे, जलाशये सर्वत्रैव । जलाशये जलवर्षणस्य निष्प्रयोजनत्वेन वृष्टेरप्रवृत्तिर्न । अस्ति च परिभाषा 'पर्जन्यवल्लक्षणप्रवृत्तिः' इति तथैव भवतु नामोच्चारणार्थानां तकारादिवर्णानामित्संज्ञाकार्यस्य निष्प्रयोजनत्वम्, किन्त्वित्संज्ञा लोपादिकार्यं च स्यादेवेति सुधियो विभावयन्तु ।

---

## लोपविषयकविचारः

१—सूत्रार्थः ।

२—'शेषे लोपः' इति सूत्रेऽन्त्यलोपटिलोपपक्षौ चेति दीक्षितोक्तनयेन ।

३—अन्त्यलोपटिलोपपक्षयोर्वैयाकरणानां सम्मतिदानम् ।

४—शब्दरत्नकारमतेन 'शेषे-लोपः' इति सूत्रेऽन्त्यलोपपक्ष एव ।

५—'शेषे लोपः' इति सूत्रेऽन्त्यलोपपक्ष एवेति पक्षे वैयाकरणानां विचारदानप्रदर्शम् ।

६—अपाणिनीये व्याकरणे सूत्रस्वरूपनिदर्शम् ।

७—युक्तायुक्तत्वसमीक्षणम् ।

'शेषे लोपः' ( ७।२।९० ) इत्यस्मिन् सूत्रे 'शेषे' 'लोपः' इति पदद्वयम् । उक्तादन्यः शेषः । 'अङ्गस्य' ( ६।४।१ ) इति सूत्राधिकारे पठितमिदं सूत्रम् । त्यदादिप्रकरणे 'त्यदादी नामः' ( ७।२।१०२ ) इत्यनेन अत्वमुक्तम् । युष्मद्शब्दात् 'योऽचि' ( ७।२।८९ ) इत्यनेन यत्वमुक्तम् । अस्मिन् सूत्रे 'योऽचि' ( ७।२८७ ) इति सूत्रतः 'अचि' इत्यनुवर्तते ततोऽत्व यत्वयोरुक्तत्वेन तदन्यः शेषपदार्थत्वेनात्वयत्वनिमित्तादतिरिक्तस्य, अथवैतयोरादेशेनाऽनादिष्टस्याङ्गस्याचिविभक्तौ परतो लोपो भवतीत्यर्थो जायते ।

अनेन सूत्रेण लोपविधाने मपर्यन्तस्येत्यधिकारेणावशिष्टस्य टिभागस्य लोपः, शेषे इति सप्तमी निर्देशेन अन्त्यस्य लोपो वेति विप्रतिपत्तौ भट्टोजिदीक्षितमते[1] अन्त्यलोपः टिलोपश्च सिद्ध्यतः ।

---

१. प्रौढमनोरमायाम् 'शेषे लोपः' इति सूत्रे ६३६ तमे पृष्ठे ।

एतत् पूर्ववर्तिषु वैयाकरणेषु काशिकाकार[1] न्यासकार[2] पदमञ्जरीकार[3]-प्रसादकारप्रभृतिविद्वद्भिः[4] प्रतिपादितपक्षस्यैव प्रदर्शनं प्रौढमनोरमाकारेण कृतम्, तत्वबोधिनीकारेण[5] च तदेवाऽनुमोदितम् ।

शब्दरत्नकारेण[6] श्रीहरिदीक्षितेन तूभयलोपव्याख्याने गौरवं मत्वा अन्त्य लोपव्याख्यानमेवाङ्गीकृतम् ।

'शेषे लोपः' ( ७।२।९० ) इति सूत्रे भाष्येऽस्य विषये किमपि नोक्तम् । तथापि 'त्यदादीनामः' ( ७।२।१०२ ) इति सूत्रे भाष्ये 'साम आकम्' ( ७।१।३३ ) इति सूत्रे भाष्ये च पक्षद्वयस्योत्थानं तत्र 'साम आकम्' (७।१।३३) इति सूत्रस्थभाष्येणान्त्यलोपपक्ष[7] एव सिद्ध्यति ।

प्रक्रियासर्वस्वकारेण[8], नागेशेन[9], भैरवीकारेण[10], भावप्रकाशकारेण[11] चान्त्यलोपपक्ष एव समर्थितः । हैमव्याकरणे[12] तु 'शेषे लुक्' इति सूत्रमस्ति ।

---

१. काशिकायाम् 'शेषे लोपः' इति सूत्रे ७७१ तमे पृष्ठे ।
२. न्यासे 'शेषे लोपः' इति सूत्रे ७७१ तमे पृष्ठे ।
३. पदमञ्जर्याम् 'शेषे लोपः' इति सूत्रे ७७१–७७२ तमयोः पृष्ठयोः ।
४. प्रक्रियाकौमुद्याः प्रसादटीकायाम् 'शेषे लोपः' इति सूत्रे २४५ तमे पृष्ठे ।
५. तत्वबोधिन्याम् 'शेषे लोपः' इति सूत्रे १०८ तमे पृष्ठे ।
६. शब्दरत्ने 'शेषे लोपः' इति सूत्रे ६३६–६३७ तमपृष्ठयोः ।
७. 'साम आकम्' इति सूत्रे भाष्ये ३५–३६ तम पृष्ठयोः ( न वा टिलोपवचनादेशे टाप् प्रतिषेधार्थम् ) इत्युक्त्वा 'न वा लिङ्गाभावाट्टिलोप वचनानर्थक्यम्' उक्तम् ।
८. प्रक्रियासर्वस्वे 'शेषे लोपः' इति सूत्रे १२३ तमे पृष्ठे ।
९. लघुशब्देन्दुशेखरे 'शेषे लोपः' इति सूत्रे ३२४–३२६ तमपृष्ठपर्य्यन्तम् ।
१०. भैरव्याम् 'शेषे लोपः' इति सूत्रे ३३६–३३७ तमयोः पृष्ठयोः ।
११. भावप्रकाशे 'शेषे लोपः' इति सूत्रे ३३६–३३७ तमयोः पृष्ठयोः ।
१२. हैमव्याकरणे 'शेषे लुक्' इति सूत्रे २०७ तमे पृष्ठे ।

वस्तुतस्तूभयपक्षस्वीकारे लक्ष्ये दोषाभावः विदुषां सम्मतिश्च, तथाप्यन्त्यलोप-पक्ष एव न्याय्यः। यद्यप्युभयपक्षस्वीकारे विनिगमना विरहेणोभयोः प्राप्तवनेन सूत्रेण पाक्षिकोऽन्त्यलोपः टिलोपश्च स्याताम्, अथवा युगपद्प्रवृत्तावुभयोर्युगपत्-कार्याभावेनोभयं न स्यात्। अस्यामवस्थायां सूत्रस्यैव वैयर्थ्यापत्तिः। यद्यप्युभयोः पक्षयोर्मध्येऽन्यतरपक्षस्वीकारेऽन्त्यलोपापेक्षया टिलोपपक्षाश्रयण एव महल्लाघवं भवति यतो हि टिलोपे सति 'युष्माकम्' इत्यत्रादन्तत्वाभावेन कदाचिदपि सुडप्राप्तौ, भाविसुड्निवृत्यर्थं ससुट्क्निर्देशः कर्तुं न भवति। एवम् 'त्वं स्त्री' 'अहं स्त्री' इत्यत्र युष्मदस्मद्शब्दयोः अमि परे 'त्व', 'अह' आदेशे टिलोपेऽदन्तत्वा-भावेन टापप्राप्तौ 'अलिङ्गे युष्मदस्मदि' इतिव्याख्यानं कर्तुं न भवति। तथापि सूत्रकृता ससुट्क्निर्देशकरणेन भाष्यकृता च 'अलिङ्गे युष्मदस्मदि' इति व्याख्यातत्वेन टावापत्तिं निवार्य टिलोपवचनमनादृतम्। तेनान्त्यलोपपक्ष एव सयुक्तिकः।

## दीर्घग्रहणविचारः

१—सूत्रार्थः।

२—भट्टोजिदीक्षितमतेन 'अतो दीर्घो०' इति सूत्रे दीर्घग्रहणं प्लुतनिवृत्यर्थम्।

३—हरिदीक्षितमतेन 'अतो दीर्घो०' इति सूत्रे दीर्घग्रहणं व्यर्थम्।

४—प्लुतनिवृत्यर्थं 'अतो दीर्घो०' इति सूत्रे दीर्घग्रहणमिति पक्षे वैयाकर-णानां सम्मतिदानम्।

५—'अतो दीर्घो०' इति सूत्रे दीर्घग्रहणस्य वैयर्थत्वोपपादने वैयाकरणानां विचार प्रदर्शनम्।

६—युक्तायुक्तत्वसमीक्षणम्।

'अङ्गस्य' (६।४।१) इति सूत्राधिकारे 'अतो दीर्घो यञि' (७।३।१०१) इति सूत्रं पठितम्। 'सार्वधातुकार्धधातुकयोः' (७।३।८४) इति सूत्रतः सार्वधातुकम् अनुवर्तते। ततः 'स्यात्' इति क्रियाम् अध्याहृत्य, अतोऽङ्गस्य दीर्घः स्याद् यञादौ सार्वधातुके परे इत्यर्थः सम्पद्यते।

६

'अतो दीर्घो यञि' (७।३।१०१) इति सूत्रे दीर्घग्रहणं हित्वा 'अत आत् यञि' इति न्यासेऽपि पचामि,–जानामि–प्रभृतिरूपाणां सिद्धौ, सूत्रे दीर्घग्रहणं दीर्घ एव यथा स्यात्, प्लुतो मा भूद् इत्येतदर्थम्। तेन 'पचामि भोः' इत्यत्र 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति प्लुतो न भवति इति भट्टोजिदीक्षिताशयः[1]।

नायं दीक्षितस्यापूर्वः पक्षः, ततः पूर्वं न्यासे,[2] पदमञ्जर्याम्,[3] प्रसादे[4] च 'पचामि भोः' इत्यत्र प्लुतवारणार्थमेव दीर्घग्रहणमुक्तम्। परवर्ती तत्त्वबोधिनी[5] कारोऽप्यस्यैवानुमोदनं कृतवान्।

रत्नकारमतेन[6] "ज्ञाजनोर्जा" (७।३।७९) इत्यस्य स्थाने "ज्ञाजनोर्ज विधानेनैव जानाति, जायते इत्यादिप्रयोगाणां सिद्धिः स्यात्, पुनः सूत्रे "जा" इति दीर्घनिर्देशः - अङ्गवृत्तपरिभाषां ज्ञापयतीत्युक्तं भाष्यकारेण। तथा सति "अतो दीर्घो यञि" (७।३।१०१) इति सूत्रे दीर्घनिर्देशो यदि प्लुतबाधनार्थं भवेत्, तदा "पचामि भोः" इतिवत् "जानामि भोः" इत्यादावपि प्लुतो न स्यात्। तस्माद् ईदृशे विषये वैकल्पिकत्वेन "प्लुतप्रवृत्तिरुचिता। दीर्घग्रहणं तु "हल्यशि" इति वक्तव्ये "हलि लोपः" (७।२।११३) इति सूत्रे यथा लोपग्रहणं तथैवेहापि दीर्घग्रहणं न फलोपधायकम्। रत्नकारसमर्थितपक्षस्य समर्थनं नागेशेन[7] उद्योते कृतम्।

अत्र मतद्वये दीक्षितमतमेव समीक्षात्मकनयेनोचितं प्रतीयते। रत्नकारेण "ज्ञाजनोर्जा (७।३।८९) इति सूत्रस्थभाष्यं निर्दिशताऽत्रत्यं दीर्घग्रहणम् "हलि लोपः" (७।२११३) इति सूत्रे लोपग्रहणवदिति प्रदर्शनेन व्यर्थं ध्वनितम्।

---

१. प्रौढमनोरमायाम् "अतो दीर्घो०" इति सूत्रे ३१५ तमे पृष्ठे।
२. न्यासे "अतो दीर्घो०" इति सूत्रे ११२ तमे पृष्ठे।
३. पदमञ्जर्याम् "अतो दीर्घो०" इति सूत्रे ११२ तमे पृष्ठे।
४. प्रक्रियाकौमुद्याः प्रसादटीकायाम् "अतो दीर्घो०" इति सूत्रे षोडशे पृष्ठे।
५. तत्त्वबोधिन्याम् "अतो दीर्घो०" इति सूत्रे ३९३ तमे पृष्ठे।
६. शब्दरत्ने "अतो दीर्घो०" इति सूत्रे ३१६ तमे पृष्ठे।
७. 'ज्ञाजनोर्जा' इति सूत्रस्थ उद्योते २२५-२२६ तमयोः पृष्ठयोः।

किन्तु तथा सति "सुपि च" ( ७।३।१०२ ) इति सूत्रे दीर्घग्रहणं कर्तव्यं स्यात् । अन्यथा "अतः आत् यञि" इति न्यासे "सुपि च" ( ७।३।१०२ ) इत्यत्रापि "आत्" इत्यस्याऽनुवृत्तौ दीर्घं विहाय "आत्" विधाने "तित उ'-शब्दाद् णिचि, टिलोपे, कर्त्तरि 'क्विप् च" ( ३।२।७६ ) इति क्विप् ततो भ्यामि 'तिताभ्याम्' इत्यत्र दीर्घविधौ स्थानिवत्त्वनिषेधेन टिलोपस्य स्थानिवत्त्वनिषेधेन न दोषः । 'आत्'—विधाने तु स्थानिवन्निषेधाभावे टिलोपस्य स्थानिवत्त्वे "आत्" इति न स्यात् । उपपादितं चैतत् प्रौढमनोरमायाष्टिप्पण्याम्[1] । तस्माद् 'दीर्घ-ग्रहणं' पचामि 'भो.' इत्यत्र प्लुत् निवृत्त्यर्थं 'सुपि च' ( ७।३।१०२ ) इत्यत्र दीर्घानु-वर्तनार्थं च । "ज्ञाजनोर्जा ( ७।३।७९ ) इति सूत्रे 'जा' इत्यत्र दीर्घनिर्देशस्तु 'जानामि भोः' इत्यत्र प्लुतसिद्ध्यर्थम् । अङ्गवृत्तपरिभाषायास्तत्र सूत्रे भाष्ये ज्ञापनप्रदर्शनं त्वेकदेशिपरकम्, न दाढ्र्यसूचकम् । अन्यथा "ज्यादादीयसः' ( ६।४।१६० ) इति सूत्रे भाष्ये "ज्यात् परस्येयसः आत्वविधानस्य परिभाषायां ज्ञापनद.नमसंगतं स्यात् । तेन "ज्यादादीयसः' ( ६।४।१६० ) इति सूत्रे 'आत्'—विधानं परिभाषायां ज्ञापकं मन्तव्यम् । अत एव प्रदीपकारेण[2] उभयसूत्रे "ज्ञाजनोर्जा" ( ७।३।७९ ) 'ज्यादादीयसः' ( ६।४।१६० ) इति सूत्रयोः एकत्र आकारनिर्देशस्य फलाभावेन आकारश्रवणमात्रफलं निगदितम् इति वैयाकरणानां सम्मतिविषयः ।

## 'ङि' इति षष्ठ्यन्तः सप्तम्यन्तो वेति विचारः

१—सूत्रार्थः ।

२—'न ङिसम्बु०' इति सूत्रे 'ङि' इति षष्ठ्यन्तमिति भट्टोजिदीक्षितस्य पक्षः ।

३—षष्ठ्यन्तपक्षे वैयाकरणानां सम्मतिः ।

४—'न ङिसम्बु०' इति सूत्रे 'ङि' इति सप्तम्यन्तमिति पक्षे शब्दरत्नकारस्य सम्मतिः ।

---

१. प्रौढमनोरमायाष्टिप्पण्याम् ४०७ तमे पृष्ठे ।

२. 'ज्ञाजनोर्जा' इति सूत्रे प्रदीपे २२५-२२६ तमयोः पृष्ठयोः ।

५—सप्तम्यन्तपक्षमादाय अन्यवैयाकरणानां सम्मतिप्रदर्शनम् ।

६—युक्तायुक्तत्वसमीक्षणम् ।

'न ङिसंबुद्धयोः' ( ८।२।८ ) इति सूत्रं पदस्याधिकारे पठितम् । 'न लोपः प्रातिपदिकान्तस्य' ( ८।२।७ ) इत्यतो न लोपोऽनुवर्तते । तेन 'प्रातिपदिकान्तस्य पदस्य न लोपो भवति ङौ सम्बुद्धौ च परतः 'इति सूत्रार्थः संपद्यते । अस्य सूत्रस्य 'ङि' इत्यस्य षष्ठ्यन्ततया विपरिणामेन ङ्यन्तस्य सम्बुद्ध्यन्तस्य च पदस्य नलोपो नेत्यर्थो जायते ।

तत्र सप्तम्यन्तपक्षाश्रयणे कृते सति 'न ङिसम्बुद्धयोः ( ८।२।८ ) इति सूत्रारम्भसामर्थ्येन' न लुमताङ्गस्य ( १।१।६३ ) इति निषेधस्यानित्यत्वं बोध्यते । तेन 'परमे व्योमन्' इत्यादौ प्रत्ययलक्षणं सिद्ध्यति । अस्मिन् पक्षे 'वा नपुंसकानाम्' इति वार्त्तिकं फलितार्थकथनमात्रम् ।

षष्ठ्यन्तपक्षे यद्यपि 'न लुमताङ्गस्य' ( १।१।६३ ) इत्यस्यानाश्रयणेन प्रत्ययलक्षणस्य सौलभ्यम्, तथापि अस्मिन् पक्षे 'वा नपुंसकानाम्' इति वार्त्तिकं स्वरूपेण वक्तुं भवति ।

अत्रोभयविधव्याख्याने षष्ठ्यन्तपक्षस्याश्रयणं मनोरमाकारेण[1] मनोरमायां कृतम् । तत्त्वबोधिनीकारेण[2] समर्थितं च । अयं पक्षः दीक्षितस्य स्वोपज्ञतां लक्षयति ।

सप्तम्यन्तपक्षाश्रयणे काशिकाकारस्य,[3] न्यासकारस्य,[4] पदमञ्जरीकारस्य[5],

---

१. प्रौढमनोरमायाम् 'न ङि सम्बु०' इति सूत्रे ५८८-५८९ तमपृष्ठयोः ।

२. तत्त्वबोधिन्याम् 'न ङि सम्बु०' इति सूत्रे ९७-९८ तमपृष्ठयोः ।

३. काशिकायाम् 'न ङि सम्बु०' इति सूत्रे ३६५ तमे पृष्ठे ।

४. न्यासे 'न ङि सम्बु०' इति सूत्रे ३६५ तमे पृष्ठे ।

५. पदमञ्जर्याम् 'न ङि सम्बु०' इति सूत्रे ३६५ तमे पृष्ठे ।

रत्नकारस्य[1], नागेशस्य[2], भैरवीकारस्य[3], भावप्रकाशकारस्य[4], कौमुद्याः दाधिमथटीकाकारस्य[5] च सम्मतिर्दृश्यते।

अत्र मतद्वयं पर्यालोचयामः। सप्तम्यन्तपक्षे निषेधसामर्थ्येन 'न लुमताङ्गस्य' (१।१।६२) इत्यस्याऽनित्यत्वप्रतिपादनक्लेशः, षष्ठ्यन्तपक्षे 'वा नपुंसकानां' (७।१।७९) इति वार्त्तिकारम्भे गौरवम्। समीक्षात्मकदृष्ट्या विचारे तूभयपक्षाश्रयणे समरूपतैव। यतो हि सप्तम्यन्तपक्षे निषेधवचनारम्भसामर्थ्येन नाऽनित्यत्वोपपादनरूपं गौरवम्। षष्ठ्यन्तपक्षे विभक्तिविपरिणामकरणरूपं गौरवम्। इत्थम् उभयत्र तुल्यता। षष्ठ्यन्तपक्षे 'वा नपुंसकानाम्' (७।१।७९) इत्यस्य वचनारम्भे गौरवं यदुद्भावितम्, तत्तु नोचितम्। यतो हि वार्त्तिकेनानेन नपुंसकमात्र एव पाक्षिकनलोपाभावो बोध्यते। तेन फलितार्थत्वोक्तिस्वीकारे प्रत्ययलक्षणस्य सर्वत्र पाक्षिकप्रवृत्त्यापत्तिः। तदा 'हे चर्मन्' 'हे चर्म' इति वद् 'हे राजन्', 'हे राज' इत्यप्यापद्येत। तस्मात् पुंयोगादौ नित्य-न-लोपाभावाय 'न ङि सम्बुद्धयोः' (८।२।८) इति सूत्रम् उभयपक्षे समाश्रीयते। नपुंसके तु पाक्षिकत्वलाभाय 'वा नपुंसकानाम्' (७।१।७९) इति समारभ्यते। अत एव भाष्येऽपि 'वा नपुंसकानाम्' इत्येतद् वक्तव्यमेव, इत्युद्भावनेन वचनरूपेणैव वार्त्तिकस्य स्वीकारोक्तिः। तेन भाष्यदृष्ट्या तु यद्यपि षष्ठ्यन्तपक्ष एव पुष्यति, तथापि सप्तम्यन्तपक्षेऽपि न क्षतिः। सप्तम्यन्तपक्षस्याश्रयणं कौमुद्यां स्वयं दीक्षितेनापि कृतम्। तेन दीक्षितस्य स्ववचन एव विरोध इति विदुषां सम्मतिविषयः।

## अश्ग्रहणविचारः

१—सूत्रार्थः।

---

१. शब्दरत्ने 'न ङि सम्बु०' इति सूत्रे ५८८–५८९ तमपृष्ठयोः।
२. लघुशब्देन्दुशेखरे 'न ङि सम्बु०' इति सूत्रे ३०७ तमे पृष्ठे।
३. भैरव्याम् 'न ङि सम्बु०' इति सूत्रे ५८८–५८९ तमपृष्ठयोः।
४. भावप्रकाशे 'न ङि सम्बु०' इति सूत्रे ५८८–५८९ तमपृष्ठयोः।
५. कौमुद्याः दाधिमथटीकायाम् 'न ङि सम्बु०' इति सूत्रे ९८ तमे पृष्ठे।

२—भट्टोजिदीक्षितमतेन देवाः सन्ति इत्यत्र यत्वापत्तिवारणाय 'भो भगो०' इति सूत्रेऽश्ग्रहणनिदर्शनम् ।

३—शब्दरत्नकारमतेन 'हलि सर्वे०' इत्यत्रानुवर्तनार्थमश्ग्रहणमित्यस्य प्रदर्शनम् ।

४—'भोभगो०' इति सूत्रेऽश्ग्रहणमुत्तरार्थमिति पक्षे वैयाकरणानां विचारदानम् ।

५—युक्तायुक्तत्वसमीक्षणम् ।

६—स्वमतप्रदर्शनम् ।

'भोभगोअघोअपूर्वस्य योऽशि' (८।३।१७) भो-पूर्वकस्य, भगोपूर्वकस्य, अघोपूर्वकस्य अवर्णपूर्वकस्य रोर्यादेशो भवति अशि परे इति सूत्रार्थो भवति ।

एतत्सूत्रेऽश्ग्रहणाभावे 'भोभगोऽघोऽपूर्वकस्य रोर्यादेशो भवति' इत्येतावन्मात्रार्थे 'देवाः सन्ति' इत्यत्र विसर्गस्य स्थानिवद्भावेन रुत्वमादाय प्रकृतसूत्रेण यत्वापत्तिः स्यात् । तदर्थं सूत्रेऽश्ग्रहणमित्युक्तं कौमुद्यां[1] । यद्यपि 'खरवसानयोर्विसर्जनीयः' (८।३।१५) इति सूत्रेणानुबन्धविनिर्मुक्तस्य रेफस्य स्थाने विसर्गो भवति । अतः तस्याल्विधित्वेन स्थानिवद्भावाभावेन यत्वस्याप्राप्तौ 'अश्'-ग्रहणमनर्थकमिति वक्तुं शक्यते', तथापि यथा 'अग्रहीत्' इत्यत्र 'ग्रहोऽलिटि (७।२।३७) इत्यनेन इकारस्य दीर्घे कृते स्थानिवद्भावेन इट्त्वमादाय 'इट ईटि" (७।२।२८) इत्यस्य प्रवृत्तिर्भवति, एवमिहापि विसर्गस्य स्थानिवद्भावेन रुत्वमादाय यत्वस्य प्रवृत्तिः स्यात्, तदर्थमश्ग्रहणम् इति 'नह्ययमलविधिः' इति कौमुद्याः प्रतीकमादाय मनोरमायां व्याख्यातं भट्टोजिदीक्षितेन[2] ।

रत्नकृता[3] तु 'ग्रहोऽलिटि' (८।२।१८) इति सूत्रे इटत्वस्याल् विधित्वाभावेन स्थानिवद्भावेऽपि प्रकृते विसर्गस्य स्थानिवद्भावेन रेफस्यैवाऽऽनयनं भविष्यति, न रुत्वस्य । यतो हि रेफस्यैव विसर्गो भवति । तदा 'स्थान्यल्वृत्तिधर्माश्रये च

१. वैयाकरणसिद्धान्तकौमुद्याम् 'भो भगो०' इति सूत्रे ४३ तमे पृष्ठे ।
२. प्रौढमनोरमायाम् 'भो भगो०' इति सूत्रे ३१०—३१३ तमपृष्टपर्यन्तम् ।
३. शब्दरत्ने 'भो भगो०' इति सूत्रे ३१०—३१४ तमपृष्ठपर्यन्तम् ।

न स्थानिवत्' इत्यनल्विधेरर्थस्वीकारे रेफस्य स्थानिवद्भावाभावे सूत्रेऽश्ग्रहणमनर्थकम् ।

यद्यपि 'छदःसु', 'पयःसु' इत्यत्र 'रोः सुपि' (८।३।१६) इत्यनेन 'रु' इत्यस्य विसर्गे, तस्य स्थानिवद्भावेन यत्वापत्तिः, तद् वारणाय 'अश्' ग्रहणमिति वक्तुं शक्यते, किन्तु 'रो रि' (८।३।१४) इत्यतः 'रः' इत्यनुवर्त्य रो, रेफस्यैव 'रोः सुपि' (८।३।१६) इत्यनेन विसर्ग इत्यर्थकरणेऽश्ग्रहणस्यात्र फलाभाव एव, तथापि 'हलि सर्वेषाम्' (८।३।१८) इत्यत्राऽनुवृत्त्यर्थमश्ग्रहणम् । यद्यपि अत्राश्ग्रहणस्य फलाभावः, उत्तरसूत्रे च तस्य फलम्, अतस्तत्रैवाऽश्ग्रहणं कर्तव्यम्, तथापि स्पष्टार्थमिहैव कृतमिति मन्यते ।

भाष्ये[१], काशिकायाम्[२], न्यासे[३], पदमञ्जर्याम्[४], प्रदीपे[५], प्रक्रियाकौमुद्यां[६] प्रसादटीकायाम्, भैरव्याम्[७], भावप्रकाशे[८] च सर्वत्राश्ग्रहणमुत्तरार्थमेवोक्तम् । नागेशेन[९] तु 'हलि सर्वेषाम्' (८।३।१८) इत्यत्र वकारस्यासम्बन्धेन वलोपः । तेन 'वृक्षव करोति' इप्याद्यर्थमप्यश्ग्रहणमनर्थकमेवोक्तम् ।

---

१. भाष्ये 'भोभगो०' इति सूत्रे ४४०-४४१ तमपृष्ठयोः ।
२. काशिकायाम् 'भोभगो०' इति सूत्रे ४९९ तमे पृष्ठे ।
३. न्यासे 'भोभगो०' इति सूत्रे ४९९-५०० तमयोः पृष्ठयोः ।
४. पदमञ्जर्याम् 'भोभगो०' इति सूत्रे ४९९-५०० तमयोः पृष्ठयोः ।
५. प्रदीपे 'भोभगो०' इति सूत्रे ४४०-४४१ तमयोः पृष्ठयोः ।
६. प्रक्रियाकौमुद्याः प्रसादटीकायाम् 'भोभगो०' इति सूत्रे १०८ तमे पृष्ठे ।
७. भैरव्याम् 'भोभगो०' इति सूत्रे ३१०-३१४ तमपृष्ठपर्यन्तम् ।
८. भावप्रकाशे 'भोभगो०' इति सूत्रे ३१०-३१४ तमपृष्ठपर्यन्तम् ।
९. उद्योते 'भोभगो०' इति सूत्रे ४४१ तमपृष्ठे एवञ्चेदं भाष्यं पूर्वपक्ष्येकदेश्युक्तिः । 'हलि सर्वेषामित्यनेन भोसादिसाहचर्येण रोरित्यस्यानुवृत्त्या च रुस्थानिकस्यैव लोपादित्यपि बोध्यम्' इत्युक्तम् । लघुशब्देन्दुशेखरे 'हलि सर्वेषाम्' इति सूत्रे १५१ तमपृष्ठे' अत्र च यकार एवानुवर्तते, न वकारः वृत्तौ तथैवोक्तेः, फलाभावात्, अव्ययपरे इत्यादिनिर्देशाच्च ।'

गुणदोषविवेचनात्मकदृशा त्विह स्वीकृतेऽप्यन्तरस्मिन् पक्षे नोद्भवति लक्ष्ये कोऽपि दोषः। दीक्षितेन तु रेफाऽनुवृत्तौ गौरवं मत्वा 'भो भगो०' ( ८।३।१७ ) इति सूत्रेऽश्ग्रहणबलेन दोषो वारितः। भाष्योक्तपक्ष एव रत्नकारस्य पक्षः। यद्यप्यस्य मते 'रोरि' ( ८।४।१४ ) इत्यतः रेफानुवृत्तौ गौरवं भवति, किन्तु न केवलमत्रैवानुवृत्तिर्भवति, अपित्वनुवृत्तेरनेकानि स्थलानि सन्ति। 'आदिरन्त्येन सहेता, ( १।१।१७ ) इति सूत्रे स्वयं दीक्षितेन 'स्वं रूपम्०' ( १।१।६८ ) इति सूत्रतः 'स्व' शब्दानुवृत्तिः समर्थिता। अतो व्याकरणसूत्रपारायणादावदृष्टफललाभार्थम् अस्य प्रयोजनम्। भाष्यादिसम्मतं दृष्टफलं तूत्तरार्थमेव। यद्यपि 'हलि सर्वेषाम्' ( ८।३।१८ ) इत्यत्र अश्ग्रहणस्य प्रयोजनेऽत्रैव 'अश्' ग्रहणं कर्तव्यम्, तथापि 'हलि सर्वेषाम्' ( ८।३।१८ ) इति सूत्रे अश्ग्रहणे सति 'मोऽनुस्वारः' ( ८।३।२३ ) इति सूत्रे तस्यानुवृत्तौ 'मान्तस्य पदस्यानुस्वारः स्याद्धल्यशि' इत्यर्थापत्तिः स्यात्। उपपादितं चास्मिन् विषये सर्वं पदमञ्जर्याम्। मन्मतेन तु नागेशेन यथोपपादितं तथैव शोभनम्। इत्थम् उत्तरार्थमप्यश्ग्रहणमनर्थकमेवेति सुधियो विभावयन्तु।

## 'अप्रत्ययः' इत्यस्य समानाधिकरण्यान्वयो वैयधिकरण्यान्वयो वेति

१—सूत्रार्थः।

२—भट्टोजिदीक्षितमतेन 'इदुदुप०' इति सूत्रे 'अप्रत्यय' इत्यस्य समानाधिकरण्येनान्वयप्रदर्शनम्।

३—शब्दरत्नकारमतेन 'इदुदुप०' इति सूत्रे 'अप्रत्यय' इत्यस्य वैयधिकरण्येनान्वयनिदर्शनम्।

४—वैयधिकरण्यान्वयस्वीकारे वैयाकरणानां विचार प्रदर्शनम्।

५—युक्तायुक्तत्वसमीक्षणम्।

'इदुदुपधस्य चात्प्रत्ययः' ( ८।३।४१ ) इति सूत्रे 'कुप्वोः कपौ च' ( ८।३।३७ ) इत्यतः 'कुप्वोः' इत्यनुवर्तते। तेन कुप्वोः परयोः प्रत्ययभिन्नस्य इदुदुपधसमुदायस्य यो विसर्गः, तस्य षत्वमिति सूत्रार्थः।

तत्र मनोरमाकारानुसारेण[1] इदुतावुपधे यस्य तस्य यः प्रत्ययभिन्नो विसर्गः तस्य षत्वमिति समानाधिकरण्येनान्वयः। तेन 'अग्निः करोति' इत्यत्र विसर्गस्य षत्वं न।

शब्दरत्नकृता[2] तु सामानाधिकरण्यान्वये 'कविभिः कृतम्' इत्यत्र विसर्गस्य प्रत्ययभिन्नत्वेन षत्वापत्तिर्भवति, तेन प्रत्ययसम्बन्धीभिन्नो यो विसर्गः, तस्य षत्वमिति वैयधिकरण्यान्वय एव। कृते वैयधिकरण्यान्वये कविभिः कृतमित्यत्र विसर्गस्य प्रत्ययसम्बन्धित्वेन न षत्वम्। अस्य मूलं पदमञ्जर्याम्[3], मनोरमा-खण्डने[4] च दृश्यते। तत्त्वबोधिनीकारेण[5], नागेशेन[6], भैरवीकारेण[7], भाव-प्रकाशकारेण[8] चास्य पक्षस्यानुमोदनं विहितम्।

अत्र मतद्वये रत्नकारमतमेव ज्यायः प्रत्ययभिन्नविसर्ग इत्यर्थं स्वीकारे मनोरमाकारस्याऽप्रत्ययग्रहणस्य 'अग्निः करोति', वायुः करोति' इत्यत्र षत्वापत्तिप्रतिपादितदोषोऽपि न। यतो हि 'अग्निः' इत्यत्र अग्निशब्दात्, 'वायुः' इत्यत्र वायुशब्दात् सुप्रत्यये, उकारस्येत्संज्ञायाम्, सकारस्य रुत्वे, अनुबन्धलोपे 'खरवसानयोर्विसर्जनीयः' (८।३।१५) इत्यनेन रेफस्य विसर्गे 'अग्निः करोति' 'वायुः करोति' इति सिद्ध्यतः। 'अग्निः करोति', वायुः करोति' इत्यत्रत्यस्य

---

१. प्रौढमनोरमायाम् 'इदुदुप०' इति सूत्रे २९२ तमे पृष्ठे।
२. शब्दरत्ने 'इदुदुप० इति सूत्रे २९२-२९६ तमपृष्ठपर्य्यन्तम्।
३. पदमञ्जर्याम् 'इदुदु०' इति सूत्रे ५२४ तमे पृष्ठे।
४. समानाधिकरणं विसर्जनीयविशेषणमित्यन्ये। तन्न, सर्पिषकरोतीत्यत्रे ससोः सामर्थ्ये इति वैकल्पिकषत्वप्रवृतावपि तिष्ठतु सर्पिः पिबत्वमुदकमित्यत्रेदु-दुपधस्येति नित्यषत्वप्रसङ्गात् इत्युक्तं मनोरमाखण्डने (खं० न० २२-२६) 'इदुदुप०' इति सूत्रे
५. तत्त्वबोधिन्याम् 'इदुदुप०' इति सूत्रे ४०-४१ तम पृष्ठयोः।
६. वृहच्छब्देन्दुशेखरे 'इदुदुप०' इति सूत्रे २९१–२९६ तमपृष्ठपर्य्यन्तम्।
७. भैरव्याम् 'इदुदुप०' इति सूत्रे २९६ तमे पृष्ठे।
८. भावप्रकाशे 'इदुदुप०' इति सूत्रे २९६ तमे पृष्ठे।

  

विसर्गस्यापि प्रत्ययावयवत्वेन प्रत्ययभिन्नविसर्गता भवत्येव। ततोऽप्रत्ययेति निषेधेऽप्राप्ते षत्वं स्यादेव। एवं 'इसुसोः सामर्थ्ये (८।३।४४) इत्यस्य 'सर्पिष्करोति' इत्युदाहरणदानेन वार्त्तिककृता व्युत्पत्तिपक्षस्यैवौचित्यं प्रदर्शितम्। एवम् 'तिष्ठतु सर्पिः पिबत्वमुदकम्' इत्यादौ 'इदुदुपधस्य चाप्रत्ययः' (८।३।४१) इति षत्वस्येष्टत्वे कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थं कौमुद्यां[1] प्रतिपादितत्वेन सामानाधिकरण्यस्वीकारे मनोरमाकारस्य स्वमूल-ग्रन्थ-विरोधः। 'कविभिः कृतम्' इत्यत्र भिसोविसर्गस्य इदुपधत्वेऽपि 'रामैः' इत्यादौ भिसो विसर्गस्य इदुपधत्वाभावेन नित्यमिदुपधत्वं भिसो विसर्गस्य नास्ति। तेन न षत्वमित्यादिकल्पनं नोचितम्। यतो हि 'कविभिः कृतम्' इत्यादौ यो भिस्, स तु नित्य इदुपध एव। 'रामैः' इत्यादौ तु ऐसि कृते भिस् एव नास्ति। स्थानिवद्भावेन भिसानयने तु इदुपधत्वमपि स्यादेव। तेन प्रत्ययावयवाद् भिन्नो यो विसर्गः, प्रत्ययसम्बन्धीभिन्नो यो विसर्ग इति वा तस्य षत्वमिति वैयधिकरण्यान्वये न क्वापि दोष इति सुधियो विभावयन्तु।

---

१. सिद्धान्तकौमुद्याम् 'इदुदुप०' इति सूत्रे ४१ तमे पृष्ठे।

# सूत्रोदाहरणादिरूपप्रयोग-विचाराख्यो नाम

## द्वितीयोऽध्यायः

# प्रौढमनोरमाशब्दरत्नयोर्विचारभेदानां
# युक्ता-युक्तत्वसमीक्षा

## उभशब्दपाठविचारः

१—सर्वादिगणे 'उभ' शब्दस्य पाठ आवश्यक इति भट्टोजिदीक्षितमतेन ।

२—शब्दरत्नकारमतेन 'उभ' शब्दस्य पाठो व्यर्थः ।

३—'उभ' शब्दस्य सर्वादिगणे पाठो व्यर्थ इति पक्षे वैयाकरणानां विचारः ।

४—'उभ' शब्दस्य 'सर्वादिगणे' पाठ आवश्यक इति पक्षे विदुषां विचार प्रदर्शनम् ।

५—अपाणिनीयव्याकरणे 'उभ' शब्दस्य सर्वादिगणे पाठप्रयोजननिदर्शनम् ।

६—युक्तायुक्तत्वसमीक्षणम् ।

नित्यद्विवचनान्तस्य 'उभ' शब्दस्य सर्वादिगणे पाठः क्रियते, किन्तु सर्वादिसूत्रप्रयुक्तकार्याणि एकवचने, बहुवचने वा भवति, न तु द्विवचने। उभाभ्यां हेतुभ्याम् उभयोर्हेत्वोरित्यादौ पाक्षिकतृतीया 'सर्वनाम्नस्तृतीया च' ( २।३।२७ ) इति सूत्रेण स्याद् इति कथनमपि न शोभनम्। 'हेतौ' ( २।३।२३ ) इति सूत्रे 'निमित्तकारणहेतुषु सर्वासां प्राय दर्शनम्' इति वार्त्तिकारम्भेण, तत्रेष्टसिद्धिर्भविष्यति। उभकौ इत्यत्राकजर्थमपि नास्यापेक्षा। तत्र 'क' प्रत्ययेनैव प्रयोगसाधनमुत्पद्येत। अतएव भाष्ये 'क' प्रत्ययस्यापि स्वार्थिकत्वेन उभशब्दात् परस्य 'क' प्रत्ययस्यैव द्विवचनत्वमस्ति इत्याश्रित्य 'उभ' शब्दपाठः प्रत्याख्यातः।

अत्र मनोरमाकार[1] मत उभाभ्यां हेतुभ्यामित्यादौ तृतीयार्थस्यानावश्यकत्वेऽपि 'उभकौ' इत्यत्र अकजर्थपाठोऽपेक्षित एव। 'क' प्रत्ययेन त्विष्टसिद्धिर्न स्यात, यतो हि 'उभादुदात्तो नित्यम्' इत्यत्र उभादुदात्त' इत्येको योगः 'अवयववृत्तेः संख्यावाचिन उभशब्दाद् अवयविन्यर्थेऽयच् स्यात्।' इति अस्य योगस्यार्थः। ततो नित्यम्। 'उभ' शब्दाद् वृत्तिविषये नित्ययमयच् स्यात् स्वार्थे तेनोभयपक्षविनीतनिद्रा' इत्यादौ यथाऽयच् तथा 'क' प्रत्ययेऽप्यापद्येत, तदा

---

१. प्रौढमनोरमायाम् 'आमिसर्वनाम्नः०' इति सूत्रे ४२७-४३१ तमपृष्ठपर्य्यन्तम्।

'उभयकौ' इति रूपापत्तिः। योगविभागस्येष्टसिद्ध्यर्थत्वेन 'उभौ साभ्यासस्य' (८।४।२१) इति निर्देशेन 'उभ' शब्दादुत्पन्नं द्विवचनं लुका नापहृतं यत्र ततोऽन्यत्र 'अयच्' इत्यर्थेऽकचिकृते तन्मध्यपतितन्यायेन द्विवचनपरत्वसत्त्वेऽयचोऽप्रवृत्तिर्न भवति। 'क' प्रत्यये तु केन व्यवधाने सत्ययजापत्तिः।

अत एव वार्त्तिककारेण 'अन्याभावो द्विवचनटाब्विषयत्वात्' इत्युक्तम्। यद्यपि वार्तिके टाबप्युक्तः, तथापि नासौ विवक्षितः। टाप्येकादेशे च कृते पूर्वान्तवद्-भावेन द्विवचनपरत्वम्। भाष्यस्य गणे 'उभ' शब्दस्य पाठप्रत्याख्यानं तु प्रौढिवादमात्रम् यतो हि वार्त्तिके द्विवचनशब्देन कृत्रिमद्विवचनस्यैव ग्रहणम्। अत एव 'उभयत्र' इत्यादावयच् सिद्ध्यति। कारकविभक्त्यन्ताद् विहितौ 'त्र' तसिलौ स्वार्थिकत्वेऽपि द्वित्वमात्रं नाभिधत्तः तेन 'क' प्रत्यये न दोष इति वक्तुं न शक्यते। 'क' प्रत्ययस्याप्यज्ञाताद्यर्थबोधकत्वेन 'पञ्चकं प्रातिपदिकार्थः' इति पक्षेऽधिकबोधकत्वेन च द्वित्वमात्राभिधानाभावेन दोषस्तदवस्थ एवेति प्रतिपादितवान् भट्टोजिदीक्षितः।

शब्दरत्नकृता[1] तु 'उभयोऽन्यत्र' इति वार्त्तिके द्विवचनपदेन कृत्रिमाकृत्रिमरूपोभयोर्ग्रहणम्। द्विवचनत्वं च 'द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थाऽनुवादकत्वम्' त्रतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहितौ इति तत् तत्कारकशक्तिप्रधानावेव। तेन पूर्वोक्तद्विवचनत्वाभावेन 'उभयतः' इत्यादौ अयज् भविष्यति। 'क' प्रत्ययस्य त्वज्ञाताद्यर्थविशिष्टाभिधानेन द्विवचनत्वमस्त्येव। अत एव भाष्ये 'उभ' शब्दपाठः प्रत्याख्यातः। उभकल्पमित्यादौ अयजाभावेन 'लिट्यभ्यासस्योभयेषाम्' (६।१।१७) इत्यत्र 'उभयेषाम्' इति निर्देशेन तस्यानभिधानमथवाकल्पवादेस्तस्मादनभिधानमित्युक्तम्।

'अवचनादपि तत्परविज्ञानमिति चेत् केऽपि तुल्यम्' इति वार्त्तिकव्याख्याप्रसङ्गे महाभाष्यकारेण[2] 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति, इति व्याख्यानेन 'क' प्रत्ययेऽपि दोषाभावेन गणो पाठोऽनावश्यक इति निगदितम्।

---

१. शब्दरत्ने 'आमि सर्वनाम्नः०' इति सूत्रे ४२७-४३१ तमपृष्ठपर्य्यन्तम्।
२. महाभाष्ये 'सर्वादीनि०' इति सूत्रे २१०-२१३ तमपृष्ठपर्य्यन्तम्।

प्रदीपे[1] मनोरमाखण्डने[2] उद्योते[3] च 'द्विवचनशब्देन न प्रत्ययस्य ग्रहणम्, किन्तु द्व्यर्थाभिधानसमर्थं इत्यर्थः।' एवं कृत्रिमाकृत्रिमयोर्विषयाभावेन चेष्ट-सिद्धौ गणे 'उभ' शब्दस्य पाठो व्यर्थ इति साधितम्।

काशिकायां[4], न्यासे[5], पदमञ्जर्याम्[6] तु 'उभ' शब्दस्य गणे पाठः कर्तव्यः। फलं तु 'सर्वनाम्नस्तृतीया च' (२।३।२७) इति तृतीयासिद्धिः। एवम् उभाभ्यां हेतुभ्याम् उभयोर्हेत्वोरित्यत्र 'क' अकचोफलभेदाभावेन तृतीया, षष्ठी च। भैरवीकारेण केचित्तु इति मतप्रदर्शनपूर्वकं गणे पाठकरणे लाघवमुक्तम्। भावप्रका-शकारेणापि 'एतेन रत्नाकरदण्ड्यादिग्रन्थाः परास्ताः' इत्युक्त्या गणे पाठः स्वीकृतः।

लघुशब्देन्दुशेखरे[7] तु रत्नकारोक्तमेव व्याख्यातम्।

सारस्वतव्याकरणस्य[8] चन्द्रकीर्त्तिटीकाकारेणाकजर्थं तृतीयार्थं च पाठ उक्तः। मुग्धबोधे[9] तु सर्वनामसंज्ञायाः स्थाने 'त्निः' इति संज्ञा विद्यते। तत्र 'उभ' शब्दस्य पाठोऽस्त्येव। तस्य टीकाकारेण 'उभ' शब्दस्य त्निसंज्ञायाः फलं 'उभयोः

---

१. प्रदीपे 'सर्वादीनि०' इति सूत्रे २११-२१३ तमपृष्ठपर्यन्तम्।
२. मनोरमाखण्डने 'सर्वादीनि०' इति सूत्रे ३८ (खं० नं०) 'उभ शब्दस्य सर्वादिषु पाठोऽनर्थकप्रयोजनाभावादित्याकरः। एवं च भाष्यकृतस्य सर्वादिषूभ शब्दप्रत्याख्यानस्योक्तरीत्या सामञ्जस्ये तत्प्रौढिवादत्वोक्तिरेव प्रौढिवाद इति मन्तव्यम्।'
३. उद्योते 'सर्वादीनि०' इति सूत्रे २११-११३ तमपृष्ठपर्यन्तम्।
४. काशिकायाम् 'सर्वादीनि०' इति सूत्रे १३१–१३२ तमपृष्ठयोः।
५. न्यासे 'सर्वादीनि०' इति सूत्रे १३१–१३२ तमपृष्ठयोः।
६. पदमञ्जर्याम् 'सर्वादीनि०' इति सूत्रे १३१–१३२ तमपृष्ठयोः।
७. लघुशब्देन्दुशेखरे 'आमि सर्वनाम्नः०' इति सूत्रे २१०–२१५ तमपृष्ठप-र्यन्तम्।
८. सारस्वतव्याकरणे ७८ तमपृष्ठे।
९. मुग्धबोधे 'सर्व्वविश्०' (८७) इति सूत्रे ९१–९२ तमपृष्ठयोः।

स्त्रियोर्धनम् = उभ धनम् इत्युक्तम्। तत्रैव टिप्पण्याम् कातन्त्रचतुष्टयवृत्तेः २५ संख्यकसूत्रे पञ्जीकारोक्तम् उपस्थापितम्। तेन 'सेस्तु सर्वा इत्यनेनोभशब्दात् सर्व्वा विभक्तयः स्युरित्यपि फलम्' इत्युक्तम्।

पुरुषोत्तमदेवकृतभाषावृत्तेष्टीकाकारेण—'उभौ साभ्यासस्य च' (८।४।२१) इति निर्देशेन नित्यद्विवचनान्त एव स्त्रीत्वे टावन्तादपि द्विवचनम्। तत्र नित्यपदं तस्य सर्वनामसंज्ञाया सर्वनाम्नस्तृतीया च' (२।३।२७) इति तृतीया—षष्ठ्योः अकच्प्रत्यययोऽपि' इति फलमुक्तम्।

अत्र मतद्वये भट्टोजिदीक्षितसमर्थितपक्षस्य समर्थनं यद्यप्यनेके विद्वांसः कृतवन्तः, तथापि ससीक्षात्मकदृष्ट्या विचारे रत्नकारोक्तमेव साधु। भैरवी-कारेण[1] केचित्तु इति मतप्रदर्शनपूर्वकं गणे पाठकरणे लाघवं यदुक्तम्, तदपि न युक्तम्। गणे पाठवैयर्थ्यं तु फलाभावेनेव सिद्धम्। दीक्षितप्रभृतिभिर्विद्वद्भिः प्रदर्शित फलस्य सिद्धिस्तु प्रकारान्तरेणापि भवत्येव।

सूत्रे साहचर्यपाठे भवतु नाम गौरवम्, गणपाठाभावे सूत्रे साहचर्यपाठोऽप्य-नावश्यकः नित्यद्विवचनान्तोऽयम् 'उभ' शब्द इति निर्णयस्त्वेकवचने, बहुवचनेऽस्य पाठस्यानभिधाननेव सम्पत्स्यते। 'सर्वनाम्नस्तृतीया च' (२।३।२७) इत्यस्य सर्वनामत्वाभावेऽप्रवृत्तावुभशब्दात् प्रथमाद्वितीयाविभक्त्योरपि प्राप्तिरिति तु न वक्तव्यम्। 'निमित्तपर्याय०' इत्यत्रप्रायग्रहणेन सर्वनाम्नोऽतिरिक्तस्य प्रथमा द्वितीया नेति दीक्षितेन स्वतः कौमुद्यां निगदितम्। तेन गणे पाठे एव हेत्वादियोगे तदापत्तिः। भाष्यं प्रति प्रौढिवादत्वोक्तिस्तु स्वतो दीक्षितस्य प्रौढिवादितां प्रख्यापयति। अन्यथा कोऽपि स्वपक्षस्थापनाय सर्वत्र स्वयुक्त्या भाष्यं प्रौढिवाद-मुक्त्वा स्वपक्षमुपस्थापयेत्, पुनः 'यथोत्तरं मुनीनां प्रामाण्यम्' आकरविरोधः, इत्यादि चर्चामपि नोत्थापयेत्। एवम् 'उभादुदात्तो नित्यम्' (५।२।४४) इत्यत्र योगविभागकरणरूपं गौरवं गणे पाठस्वीकारे सति भवति। योगविभागा-श्रयणं भाष्ये प्रकृतसूत्रे नास्ति। अतोयोगविभागं कृत्वा, तथार्थकरणेऽपि महद् गौरवम्। कृत्रिमाकृत्रिमयोर्विषयाभावेन मनोरमाकारेण वार्त्तिके द्विचनशब्देन

---

१. भैरव्याम् 'आमि सर्वनाम्नः०' इति सूत्रे ४२७–४३१ तमपृष्ठपर्य्यन्तम्।

कृत्रिमस्यैव ग्रहणं यदुक्तं तन्न, यतो ह्यस्य न्यायस्य लोकसिद्धव्यवस्थाबोधकत्व एव प्रवृत्तिः। अत एव 'बहुगण०[1]' (१।१।२३) इति सूत्रे भाष्ये 'न यथा लोके तथा व्याकरणे। उभयगतिरिह भवति' अत एव कर्मसंज्ञायाः कृत्रिमत्वेऽपि 'कर्मणि द्वितीया' (२।३।२) इत्यत्र कृत्रिमस्य 'कर्तरिकर्मं व्यतिहारे (३।३।४३) इत्यत्राकृत्रिमस्य च ग्रहणमुदाहृतम्। तेन गणे 'उभ' शब्दस्य पाठो निरपेक्ष एव।

## अकथितं चेति सूत्रे गां दोग्धि पयः इति शाब्दबोधे च विचारः

१—सूत्रार्थः

२—भट्टोजिदीक्षितमतेन 'गो सम्बन्धि पयः कर्मकं दोहनम्' इति गां दोग्धि पयः वाक्याद् बोधः।

३—शब्दरत्नकारमतेन 'गोकर्मकं पयः कर्मकं दोहनम्' इति गां दोग्धि वाक्याद् शाब्दबोधः।

४—उभयविधशाब्दबोधे वैयाकरणानां सम्मतिप्रदर्शनम्।

५—युक्तायुक्तत्वसमीक्षणम्।

'अकथितञ्च' (१।४।५१) इत्यस्मिन् सूत्रे 'कर्तुरिप्सित०' (१।४।४९) इत्यतश्चकारबलेन कर्मपदस्य सम्बन्धः। 'कारके' (१।४।४३) इति सूत्राधिकारे पठितमिदं सूत्रम्। तेन 'अकथितं यत् कारकं तत्कर्मसंज्ञां लभते' इत्यर्थः सम्पद्यते।

तत्र 'गां दोग्धिपयः' इतिवाक्ये 'दुह्' धातोस्त्यजनोपसर्जनं त्याजनमर्थः। 'दुह्' धातूपस्थापितत्यजनरूपव्यापाराश्रयविषयीभूता गौः, गोनिष्ठपयः क्षरणानुकूलविषयिणी प्रेरणा गोपे विद्यते। तदा 'कर्तुरीप्सित०' (१।४।४९) इत्यनेन पयस इप्सिततमत्वेन कर्मसंज्ञा। गोस्त्वपादानादेरविवक्षायां न कापि संज्ञा प्राप्ता। तत्र सम्बन्धसामान्ये षष्ठी स्यात्, एवं याच्-धातुरपि दापनार्थकः। अङ्गीकरणार्थकश्चेति। विक्लेदनम् निर्वर्तनपच्धात्वर्थः। तत्र सर्वत्र अपादानादेरविवक्षायाम् 'न माषाणामश्नीयात्' इत्यत्र यथा षष्ठी, तथैव कर्मणः

---

१. भाष्ये 'बहुगण०' इति सूत्रे १९५ तमे पृष्ठे।

शेषत्वेन विवक्षायां षष्ठी प्राप्ता, तस्य प्रबाधनार्थमिदं सूत्रमिति दीक्षिताशयः[१]। अस्य मते 'गां दोग्धिपयः' इति वाक्यतो गोसम्बन्धिपयःकर्मकं दोहनमिति शाब्दबोधः।

रत्नकृता[२] तु व्यापारद्वयार्थका दुहादय इति मते तथा सत्यपि यदा पयोनिष्ठविभागानुकूलव्यापारमात्रदुह्धात्वर्थः, एवं तण्डुलनिष्ठविक्लित्त्यनुकूलव्यापारमात्रं 'पच्' धात्वर्थः, तदाऽपादानत्वाद्यविवक्षायां नान्येन कर्मसंज्ञा प्राप्ता, तदर्थमिदं सूत्रम्। एवम् "कर्त्तुरीप्सित०" (१।४।४९) इत्यपि षष्ठ्यपवाद एव। तदभावे तद्विषयेऽपि षष्ठ्या एव प्राप्तिः स्यात्। अतः षष्ठ्यपवादत्वमात्रेण न सम्बन्धत्वेन बोधकतोचिता।

अतः क्रियाजनकतासामानाधिकरण्यकर्मत्वशक्तिमत्त्वेनैव बोधः। एवञ्च 'गां दोग्धि पयः' इति वाक्येन गोकर्मकं पयः कर्मकं दोहनमिति बोधः।

अत्र मतद्वयपर्यालोचनप्रसङ्गे

दुहियाचिरुधिप्रच्छिभिक्षिचित्रामुपयोगनिमित्तमपूर्वविधौ।

ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना॥

इति भाष्यवार्त्तिकस्य गुणेन कर्मणा स च ते सम्बम्धं प्राप्नोति - इति प्रसादकारेण[३] - रूपावतारकारेण[४]-सरस्वतीकण्ठाभरणटीकाकारश्रीनारायणशास्त्रिणा[५] तत्त्वबोधिनीकारेण[६] चेयां व्याख्या स्वीकृता। अत एतेषां मतेन गोसम्बन्धिपयःकर्मकं दोहनमित्येव बोधः स्यात्।

---

१. 'प्रौढमनोरमायाम्' अकथितञ्चेति सूत्रे ८४१–८४९ तमपृष्ठपर्य्यन्तम्।

२. शब्दरत्ने अकथितञ्चेति सूत्रे ८४१–८५० तमपृष्ठपर्य्यन्तम्।

३. प्रसादे 'अकिथतं च' इति सूत्रे ३८७ तमे पृष्ठे।

४. रूपावतारे 'अकथितं च' इति सूत्रे १४७ तमे पृष्ठे।

५. सरस्वतीकण्ठाभरणे 'अकथितं च' इति सूत्रे त्रयोदशे पृष्ठे।

६. तत्त्वबोधिन्याम् 'अकथितं च' इति सूत्रे १३१-१६२ तमपृष्ठयोः।

शब्दरत्नकारोक्तवचनस्य समर्थनं नागेशेन,[१] भैरवीकारेण,[२] भावप्रकाशकारेण,[३] कौमुद्या दाधिमथटीकाकारेण[४] च कृतम्। रत्नकारतः पूर्वं न्यासकारेण,[५] पदमञ्जरीकारेण[६] कैयटेन[७] च हरिदीक्षितोक्तपक्षः प्रकारान्तरेण प्रदर्शितः।

व्युत्पत्तिवादे[८] - कारिकाधिकारेऽकथितं चेत्यस्य पाठेनापादानादिभिन्नधातुप्रतिपाद्यान्वयिधर्मान्तरावच्छिन्नस्यापि कर्मसंज्ञाऽनेन सूत्रेण विधीयते। तत्रावधित्वरूपाश्रयत्वविवक्षायां पञ्चमी, आश्रयत्वमात्रविवक्षायां द्वितीया। अवधित्वं च स्वरूपसम्बन्धविशेषः। दुह्धातोः क्षरणानुकूलव्यापार इत्यर्थं प्रदर्श्य वस्तुतो विभागावच्छिन्नक्षरणानुकूलव्यापारो दुहेरर्थं इति प्रतिपादितम्। तत्र 'गां दोग्धि' इति वाक्यतः-गोनिष्ठविभागानुकूलव्यापार इति बोधः।

अत्र मतद्वये यद्यपि भाष्ये प्रदीपे चोभयपरकं व्याख्यानं क्वचित् सम्बन्धार्थपरः, क्वचिच्च कर्मत्वपरः, तथापि कर्मत्वपरमेवोचितम्। यतो हि 'अकथितं च' ( १।४।५१ ) इत्यनेन गौरपादानत्वाविवक्षायां कर्मत्वविधानेन गोकर्मकं पयः कर्मकं दोहनमित्येवार्थः। यद्यपि 'कारकं चेत्तु नाकथा[९]' इति भाष्येण कारकव्यतिरिक्तस्यैवाकथितत्वसम्भवे सम्बन्धार्थं एवायाति। अतः 'गोसम्बन्धि-' इत्येवार्थेन भवितव्यम्। अत एव 'षष्ठी शेषे[१०]' ( २।३।५० )

---

१. लघुशब्देन्दुशेखरे 'अकथितं च' इति सूत्रे ४४५-४६० तमपृष्ठपर्यन्तम्।
२. भैरव्याम् 'अकथितं च' इति सूत्रे ८४१-८५० तमपृष्ठपर्यन्तम्।
३. भावप्रकाशे 'अकथितं च' इति सूत्रे ८४१-८५० तमपृष्ठपर्यन्तम्।
४. कौमुद्याः दाधिमथटीकायाम् 'अकथितं च' इति सूत्रे १६१-१६२ तमपृष्ठयोः।
५. न्यासे 'अकथितं च' इति सूत्रे ५७२ तमे पृष्ठे।
६. पदमञ्जर्याम् 'अकथितं च' इति सूत्रे ५७२ तमे पृष्ठे।
७. प्रदीपे 'अकथितं च' इति सूत्रे २६४ तमपृष्ठे।
८. व्युत्पत्तिवादे द्वितीयाकारके १९६-१९७ तमपृष्ठयोः।
९. महाभाष्ये 'अकथितं च' इति सूत्रे २६७ तमे पृष्ठे।
१०. महाभाष्ये 'षष्ठी शेषे' इति सूत्रे ५१९ तमे पृष्ठे।

इति सूत्रे 'कर्मादीनामविवक्षाशेषः' इत्युक्त्या 'कारकव्यतिरिक्त एव शेषपदार्थः, इत्युपपादितम्, तथापि 'अकथितं च ( १।४।५१ ) इति सूत्रस्य खण्डनं भाष्ये नास्ति, तेन कर्तृकर्मव्यतिरिक्तापादानादेरविवक्षारूपोऽकथितत्वपदार्थः। अत्र गोकर्मकमित्यर्थस्वीकारे न क्षतिः। यद्यपि 'आकडार०'[1] ( १।४।१ ) इति सूत्रे 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति वचनेनापादानसंज्ञां प्रबाध्य' 'कर्तुरीप्सित०' ( १।४।६९ ) इत्यनेन सुतरां कर्मत्वसिद्धौ नेदम् अकथितं च 'इत्यस्योदाहरणं भवितुमर्हति, तथाप्यकथितं चेति सूत्रे भाष्यवार्त्तिके दुहधातोरपि परिगणनेनोदाहरणमस्त्येव।

एवं कथितात्र 'पूर्वापादानसंज्ञा' इति भाष्योक्त्या[2] गौरपादानत्वे तस्या-विवक्षायाम् अनेन कर्मत्वविधान उदाहरणं स्यात्। सत्युदाहरणे कारकत्वसिद्धौ सम्बन्धार्थप्रतिपादनमसंगतमेव। अत एव पदमञ्जरीकारेण 'दुह्'-धातोर्व्यापार-द्वयार्थे षष्ठीं प्रबाध्य द्वितीया-विधानार्थम् एकव्यापारार्थे न केनापि कर्मत्वसिद्धौ तदर्थमिदं सूत्रमित्युक्तम्। अत्र विचारप्रसङ्गे यत्रापादानादेरविवक्षा तत्र कर्मत्वसिद्धावप्यपादानादेर्विवक्षायां 'दुह्' धातुतः 'क्व' पञ्चमी इत्यपि लक्ष्ये-ऽन्वेषणीयम्। तद्यथा—

ऋग्वेदे—'कवेरपत्यमादुहे'[3] ( ९।१०।८ ) इति मन्त्रे दुहधातोर्योगे कवेरित्यत्र पञ्चमी दृश्यते। एवं 'पीयूषं गाहाद् दिव आनिर्दुधुक्षत्' इति मन्त्रे ( ६।६६।४ ) ( ९।११०।८ ) इत्यत्रापि गाहाद् इति पञ्चमी। मनुस्मृतावपि[4]—त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्' ( २।७७ ) इति श्लोके वेदेभ्यः इत्यत्र पञ्चमी दृश्यते। महाभारतेऽपि[5]—

अकारं चाप्युकारं च, मकारञ्च प्रजापतिः।
वेदत्रयान् निर्दुहद् भूर्भुवः स्वरीतीति च॥

( स० प० १।७६ )

---

१. महाभाष्ये 'आकडारा०' इति सूत्रे २०१ तमे पृष्ठे।
२. महाभाष्ये 'अकथितं च' इति सूत्रे २६५ तमे पृष्ठे।
३+४+५. एते सम्पूर्णा उदाहृतप्रयोगा आप्टेशब्दकोषे ७१२–७१३ तमपृष्ठयोः सङ्कलिता।

इत्यत्राविवक्षायां वेदत्रयान् इत्यत्र द्वितीया दृश्यते। तथैव प्रकृतेऽप्यविवक्षायां गां दोग्धि, विवक्षायां तु गोर्दोग्धि। तत्र गां दोग्धि' इति वाक्यतः शाब्दबोधस्तु गोकर्मकं पयः कर्मकं दोहनमित्येवोचितः।

---

## 'हरिः सेव्यते' इति वाक्यतः शाब्दबोधविचारः

१—भट्टोजिदीक्षितमतेन 'हरिः सेव्यते' इति वाक्याद् 'हरिनिष्ठप्रीत्यनुकूलो व्यापारः' इति शाब्दबोधस्वरूपम्।

२—शब्दरत्नकारमतेन 'हरिः सेव्यते' इति वाक्यात् 'हरिनिष्ठ वर्तमानकालिकी व्यापारजन्या प्रीतिः' इति शाब्दबोधस्वरूपम्।

३—उभयविधशाब्दबोधे वैयाकरणानां सम्मतिप्रदर्शनम्।

४—युक्तायुक्तत्वसमीक्षणम्।

सेव्धातोर्भज्धातोश्च प्रीत्यनुकूलव्यापारोऽर्थः। तत्रकर्तृप्रत्ययस्थले कर्मप्रत्ययस्थले च भट्टोजिदीक्षितमतेन[1] व्यापारविशेष्यक एव शाब्दबोधः, न फलविशेष्यकः तेन 'हरिः सेव्यते' इति वाक्यतः सेवन क्रियया हरौ प्रीतेरुत्पाद्यत्वेन हरेः प्रीतिरूपफलाश्रयता क्रियाजन्यफलाश्रयत्वेन हरिः कर्म तद्विशिष्टं सेवनम्। अतः 'हरिनिष्ठप्रीत्यनुकूलव्यापारः' इति तद् वाक्यतोबोधः। एवमेव 'हरिं भजति' इति वाक्यतोऽपि बोद्धव्यम्। मानं चात्र 'क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति यास्कवचनमेव। अतो धातूपस्थाप्यायाः क्रियाया-स्तिङर्थं प्रति विशेष्यत्वमेव, न कृदर्थं प्रतीव विशेषणत्वं ज्ञेयम्। तेन कृदन्तस्थले यथा 'पाचको व्रजति' इति वाक्ये एकवाक्यत्वम्, तथा पचति, व्रजतीत्यादौ न। एककर्तृका पचि—क्रिया, गमिक्रिया च। पचति-व्रजत्योः पृथगेवार्थः। 'पश्य मृगो धावति' इत्यादौ मृगकर्तृकं गमनं दृशि-क्रियायां कर्म, प्रधानं तु दृशि क्रियैव। अत एव—

सुबन्तं हि यथाऽनेकम्, तिङन्तस्य विशेषणम्।
तथा तिङन्तमप्याहुः, तिङन्तस्य विशेषणम्॥

---

१ प्रौढमनोरमायाम् 'कर्मणि द्वितीया' इति सूत्रे ७९९–८१२ तमपृष्ठपर्यन्तम्।

इति भर्तृहरिकारिकापि संगच्छते ।

रत्नकारमतेन[1] तु कर्तृप्रत्ययस्थल एव व्यापारविशेष्यको बोधः । कर्मप्रत्यय-स्थले तु फल विशेष्यक एव बोधः । अत एव 'सुपात्मनः क्यच्' ( ३।१।८ ) इति सूत्रभाष्ये 'इष्यते पुत्रः' इत्यर्थे भिन्नार्थत्वेन 'पुत्रीयति' इति प्रयोगो न स्यादिति प्रतिपादितम् । 'यदा क्रियाफलस्य प्राधान्यं प्रतिपिपादयिषितम्, तदा वाक्यमेव । 'व्यापारप्राधान्ये तु क्यज् इति कैयटोक्त्या च 'क्रियाप्रधानमाख्यातम्' इति यास्कवचने आख्यातशब्देन तिङन्तस्य ग्रहणम् । 'रूपप्' सूत्रे कैयटोऽपि 'आख्यातात् कालसंख्यासाधनाद्यवयवभानेऽपितस्यक्रियाप्रधानत्वम्' इत्येवोक्तवान् । 'नामान्याख्यातजानि' इति शाकटायनोक्ता वाख्यातजानीत्यस्य आख्यातावयव-धातुजानीत्यर्थः । अत एव 'उणादयः' ( ३।३।१ ) इति सूत्रे भाष्ये 'सर्वं नाम धातुजम् आह' इति तत्समानार्थकमुक्तम् । एवं निरुक्तभाष्यकृद् दुर्गाचार्येणापि 'भावप्रधाने = क्रियाप्रधाने' इत्यर्थः प्रतिपादितः तेन 'हरिः सेव्यते' इति वाक्यतः 'हरिनिष्ठवर्तमानकालिकी व्यापारजन्या प्रीतिः' इत्येव शाब्दबोधः ।

अत्र मतद्वये रत्नकारस्यानुमोदनं नागेशेन,[2] भैरवीकारेण[3] च कृतम् । दीक्षितस्याऽनुमोदनं तु तत्त्वबोधिनीकारेण[4] कृतम् ।

समीक्षात्मकदृष्ट्या विचारे तु दीक्षितमतमेव युक्तम् । अन्यथा कर्तृप्रत्ययस्थले व्यापारविशेष्यकः, कर्मप्रत्ययस्थले फलविशेष्यक इति भिन्न-भिन्न-स्वरूपस्वीकारे गौरवं भवति । तदपेक्षया 'सर्वत्र व्यापारविशेष्यकबोधे एव लाघवम् । यद्यपि 'क्रियाप्रधानमाख्यातम्' अथवा 'भावप्रधानमाख्यातम्' इत्यत्र क्रियते = व्यापारेण निष्पाद्यत इति यौगिकव्युत्पत्त्या क्रियापदेन फलस्याऽपि ग्रहणम् भवितुमर्हति, अत एव 'कर्मवत् कर्मणा तुल्यक्रियः' ( ३।१।८७ ) इति सूत्रस्थस्य 'यस्मिन् कर्मणि कर्तृभूतेऽपि तद्वत् क्रिया लक्ष्यते, यथा कर्मणि सकर्मणा तुल्य क्रियः कर्त्ता कर्मवद्

---

१. शब्दरत्ने 'कर्मणि द्वितीया' इति सूत्रे ७९९–८१३ तमपृष्ठपर्यन्तम् ।
२. लघुशब्देन्दुशेखरे 'कर्मणि द्वितीया' इति सूत्रे ४५०-४५२ तमपृष्ठपर्यन्तम् ।
३. भैरव्याम् 'कर्मणि द्वितीया' इपि सूत्रे ७९९-८१३ तमपृष्ठपर्यन्तम् ।
४. तत्त्वबोधिन्याम् 'कर्मणि द्वितीया' इति सूत्रे १६० तमे पृष्ठे ।

भवति' इति भाष्यस्यापि[1] संगतिः। एवं कर्मप्रत्ययस्थले कर्मणः प्राधान्येन कर्मणि लकारः, तथैवात्र फलस्य प्राधान्येन तद् विशेष्यकबोध एव उचितः प्रतिभाति, तथापि लाघवदृष्ट्या व्यापारविशेष्यक एव बोधः।

एवम् 'भूवादयो धातवः' ( १।३।१ ) इति सूत्रे प्रायशः क्रियापदेन व्यापारस्यैव ग्रहणात्। तत्र क्रियापदस्य रूढाशक्तिः, फलांशे तु यौगिकी। तथा च 'योगाद् रूढिर्बलीयसी' इति सिद्धान्तेन क्रियापदेन निरूक्तं पाणिनिनिकाये च व्यापारस्यैव ग्रहणम्। 'सुपात्मनः क्यच्' ( ३।१।८ ) इति सूत्रस्य भाष्यं तु कतृप्रत्ययस्थले संख्यायाः कर्तर्यन्वयः, कर्मप्रत्यये च कर्मणि। तत्र 'वृत्त्यर्थावबोधकं वाक्यं विग्रहः' इति सिद्धान्तेन कर्मप्रत्ययस्थले भिन्नार्थकत्वेन न क्यच् एतत्तात्पर्यपरकम्। एवं तत्र 'स्वशब्देनोक्तत्वाद् 'उक्तार्थानामप्रयोगः' इति न्यायेन तस्मिन्नर्थे न क्यच् इत्येव भाष्यसमाधानस्य तात्पर्यम्, न तु फलप्राधान्येन न क्यच् इति। अत एव कैयटेनापि[2] भाष्यव्याख्यानस्य 'स्वशब्देन अर्थात् इष्टशब्दसामानाधिकरण्यात् पुत्र इत्यनेन निर्मुक्त इषि-क्रियापेक्षकर्म इति व्याख्याकरणेन तत्र क्यज् नोक्तः। कर्मवत् सूत्रस्थ-भाष्यं तु "मञ्चाः' क्रोशन्ति' इति लाक्षणिकवाक्यवत् तुल्यपरकत्वम्। तेन दीक्षितमतमेवोचितं प्रतिभातीति।

---

## 'प्राज्ञो व्याकरणम्' इति प्रयोगविचारः

१—सूत्रार्थः।
२—भट्टोजिदीक्षितमतेन "प्राज्ञो व्याकरणम्" इति प्रयोगस्वरूपम्।
३—शब्दरत्नकारमतेन प्राज्ञो व्याकरणस्य इति प्रयोगस्वरूपम्।
४—'प्राज्ञो व्याकरणम्' इति प्रयोगमादाय वैयाकरणानां विचार प्रदर्शनम्।
५—अपाणिनीयव्याकरणे "प्राज्ञ" शब्दे विचारनिदर्शनम्।
६—युक्तायुक्तत्वसमीक्षणम्।

---

१. भाष्ये 'कर्मवत्कर्मणा०' इति सूत्रे १०५ तमे पृष्ठे।
२. प्रदीपे 'सुपात्मनः क्यच्' इति सूत्रे ३५—३६ तमपृष्ठयोः।

"प्रज्ञाश्रद्धार्चाभ्यो णः" (५।२।१०) इति सूत्रस्यार्थः - प्रज्ञा, श्रद्धा, अर्चा इत्येतेभ्यः शब्देभ्यः ('तदस्य३' (५।२।९४) इति सूत्रतः मतुप् इत्यस्य सम्बन्धे) मतुबर्थे ण-प्रत्ययो भवति इति।

"प्राज्ञो व्याकरणम्" इत्यत्र प्रज्ञशब्दाद् वा मतुपि, पिच्छादिगणेऽस्य शब्दस्य पाठेन "लोमादि०" (५।२।१००) इत्यनेन इलचि च प्राप्ते, उभयं प्रबाध्य मतुवर्थे ण प्रत्यये, आदिवृद्धौ विभक्तिकार्ये "प्राज्ञः' इति सिद्ध्यति।

अत्र प्रयोगे गुणभूतक्रियया कर्मत्वेन सम्बन्धः। "कर्तृकर्मणोः कृतिः' (२।३।६५) इत्यत्र कृद्ग्रहणेन कृदन्तशक्तिग्रहविषय एवानेन षष्ठ्या विधानम्। अत एव यथा "कृतपूर्वीकटम्" इत्यत्रानेन षष्ठ्यभावः, तथैवात्रापि षष्ठी नेति मनोरमाशयः[1]।

रत्नकारमतेन[2] तु "कृतपूर्वी इत्यादौ कृदन्तमात्रशक्त्योपस्थितिभावेन षष्ठ्यभावेऽपि "प्राज्ञो व्याकरणम्" इत्यत्र कृदन्तमात्रशक्तेरुपस्थितिरस्त्येव। अतः षष्ठी स्यादेव। कर्तृव्युत्पन्नप्रज्ञशब्दादणिसिद्धे सूत्रे प्रज्ञाग्रहणस्य फलम् "प्रज्ञादिभ्यश्च" इति णे ङीव् भवति, न तु टाव् इति ज्ञापनार्थम्।

पदमञ्जरीकारेण[3] 'ण' अणोरुभयोरपि गुणभूतया क्रियया व्याकरणादीनां सम्बन्धे "व्याकरणं प्राज्ञ' इति रूपं मत्वा कृतपूर्वीवत् षष्ठ्यभाव उक्तः।

प्रदीपकारमतेन[4] प्रज्ञाशब्दाद् मत्वर्थीय "ण" विधाने प्रज्ञावतः प्राधान्ये प्रज्ञा न क्रियाया उपलक्षणतया, अमप्रत्ययकर्त्तव्ये व्याकरणादिभिः कर्मभिः सम्बन्धाभावः। तत्र "केचित्तु" इत्युक्त्या गुणभूतया, प्रज्ञानक्रियया व्याकरणादीनां सम्बन्धो भवत्येव। तेन विषयत्वविवक्षायां प्राज्ञो व्याकरणेऽन्यथा प्राज्ञो व्याकरणमिति निगदितम्।

---

१. मनोरमायाम् 'प्रज्ञाश्रद्धा०' इति सूत्रे ४७८-४७९ तमपृष्ठयोः।
२. शब्दरत्ने 'प्रज्ञाश्रद्धा०' इति सूत्रे ४७८-४७९ तमपृष्ठयोः।
३. पदमञ्जर्याम् "प्रज्ञाश्रद्धा०' इति सूत्रे २१४ तमे पृष्ठे।
४. प्रदीपे "प्रज्ञाश्रद्धा०' इति सूत्रे ५९२ तमे पृष्ठे।

प्रक्रियाकारेण[1] पाक्षिकस्य 'ण'—प्रत्ययस्यानेन विधानं स्वीकृतम्। षष्ठीविषये तु किमपि नोपपादितम्।

उद्योतकारमते[2] 'प्रज्ञ' इत्येव शुद्धपाठ इति प्रतिपादितम्। तत्र कैयटोक्तस्य केचित्तु-पक्षस्य समर्थनं कुर्वता "प्राज्ञो व्याकरणम्" इत्यत्र "कर्तकर्मणोः (२।३।६५) इति षष्ठी स्यादेव इति व्याख्यातम्।

शाकटायने[3] व्याकरणेऽस्य सूत्रस्य स्थाने-'प्रज्ञाश्रद्धार्चावृत्तेर्णः' (३।३।१२९) इति सूत्रितम्। अनेन प्रज्ञादेर्मत्वर्थे "ण" एव। षष्ठीविषये त्वत्रापि किमपि नास्ति।

अत्र मतद्वये रत्नकारमतमेव युक्तम्। यद्यपि "प्राज्ञः' इत्यत्र तद्धितान्त-प्रत्ययोऽस्ति, अतः कृद्ग्रहणसामर्थ्येन षष्ठ्या न भाव्यम्, तथापि "कृतपूर्वी" इत्यत्र पूर्वशब्देन सह समासे 'तद्धितान्तप्रत्ययस्यैव' प्राधान्यम्। अत्र तु मनोर-माकारादिभिः प्रज्ञ एव प्राज्ञ इत्युच्यते। नात्र वैशिष्ठ्यं तद्धितान्तप्रत्ययस्य, अपि तु 'क' प्रत्ययस्य योऽर्थः प्रतीयते, तस्यैव प्राधान्यम्। तेन "प्राज्ञो व्याकर-णस्य" इत्येवोचितम्। "कर्तृकर्मणो०'[4] (२।३।६५) इति सूत्रस्य-भाष्येऽपि "तद्धितान्तशक्त्युपस्थाप्यक्रियया एव यो कर्तृकर्मणि तत्र माभूत' इत्युक्तम्। एतेन तद्धितान्तप्रत्ययसत्त्वेऽपि तच्छक्त्युपस्थाप्यातिरिक्ते कर्तृकर्मणोस्थिते तत्र तु षष्ठी भवत्येवेति फलितम्। अतः सम्बन्धत्व-विवक्षायां षष्ठ्यभावे न मानमित्येवोचितम्।

### श्रिमन्यं कुलम् इति प्रयोगविचारः

१—सूत्रार्थः।

२—भट्टोजिदीक्षितमतेन 'श्रिमन्यं कुलम्' इति प्रयोगस्वरूपम्।

---

१. प्रक्रियाकौमुद्याम् "प्रज्ञाश्रद्धा०' इति सूत्रे ८९० तमे पृष्ठे।
२. उद्योते "प्रज्ञाश्रद्धा०' इति सूत्रे ५९२ तमे पृष्ठे।
३. शाकटायने "प्रज्ञाश्रद्धार्चावृत्तेर्णः" इति सूत्रे १८८ तमे पृष्ठे।
४. महाभाष्ये "कर्तृकर्मणोः०" इति सूत्रे ५२६ तमे पृष्ठे।

३—शब्दरत्नकारमतेन 'श्रियं मन्यं कुलम्' इति प्रयोगस्वरूपम् ।

४—'श्रिमन्यं कुलम्', 'श्रियं मन्यं कुलम्' इति लक्ष्यद्वयमादाय वैयाकरणानां विचारः ।

५—युक्तायुक्तत्वसमीक्षणम् ।

'इच एकाचोऽम्प्रत्ययवच्च' (६।३।६८) इत्यत्र 'इचः' इति प्रथमं पदम्, 'एकाच' इत्यपरं पदम्, अम् इति तृतीयं पदम्, प्रत्ययवदिति चतुर्थं पदम्, 'च' इति योजकाव्ययः । 'येन विधि०' (१।१।७२) इति सूत्रतस्तदन्तपदस्य 'खित्यनव्ययस्य (६।३।६६) इत्यतः खितपदस्य चानुवृत्तिः, अम्-प्रत्ययस्य चावृत्तिर्जायते । 'अलुगुत्तरपदे' (६।३।१) इत्यत उत्तरपदाधिकारोऽप्यायाति । तस्माद् इजन्तस्यैकाच उत्तरपदे खिदन्तेऽमागमो भवति, स च अम् आगमत्वेऽपि 'अम्' इति द्वितीयविभक्तिस्थैकवचनप्रत्ययवद् भवति ।

भट्टोजिदीक्षितमतेन[1] तथा पुंयोगात् पृष्टादयः शब्दाः 'षष्ठी गणिका' इत्यत्र स्त्रियां वर्तन्ते, तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीवे वर्तते । ततः 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१।२।४७) इत्यनेन ह्रस्वे श्रिपूर्वकाद् मनधातोः श्यनि ततः खशि, अनुबन्धलोपे 'अरुर्द्विषदजन्तस्य' इत्यनेन मुमः प्राप्तौ तं प्रबाध्य प्रकृतसूत्रेण अमि 'स्वमोर्नपुंसकात्' (७।१।२३) इत्यमो लुकि विभक्तिकार्ये 'श्रिमन्यं कुलम्' इति सिद्ध्यति । उत्तरपदाधिकारेऽन्तरङ्गपरिभाषायाः प्रवृत्त्यभावेनान्तरङ्गे लुकि कर्तव्ये न अम् सिद्धिः । अत एव 'परन्तपः' इत्यत्रानुस्वारः सिद्ध्यति, अन्यथाऽन्तरङ्गत्वबलेनानुस्वारं प्रति नुमोऽसिद्धत्वेनानुस्वारापत्तिर्न स्यात् ।

रत्नकारस्य[2] तूत्तरपदाधिकारेऽन्तरङ्गपरिभाषा न प्रवर्तत इति पूर्वपक्षाभिप्रायेण । अतोऽन्तरङ्गपरिभाषाबलेनात्र लुकि कर्तव्ये, अमोऽसिद्धत्वे, इयङि 'श्रियं मन्यं कुलम्' इत्यनेनैव भवितव्यमित्यभिप्रायः ।

---

१. मनोरमायाम् 'इच एकाचो०' इति सूत्रे ७९६–७९७ तमपृष्ठयोः ।
२. शब्दरत्ने 'इच एकाचो०' इति सूत्रे ७९६–७९७ तमपृष्ठयोः ।

भाष्ये[1] बाधसामान्यचिन्तापक्षमाश्रित्य 'येन नाप्राप्ति०' इति न्यायेन 'सुपो धातु प्रातिपदिकयोः' ( २।४।७१ ) इतिवत् 'स्वमोर्नपुंसकात्' ( ७।१।२३ ) इति सूत्रमपि प्रबाध्य मुमि, इयङि 'श्रियं मन्यम्' इति। बाधविशेषचिन्तायां तु 'मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरान्' इति परिभाषया 'सुपो धातु०' ( २।४।७१ ) इत्यस्य प्रबाधेऽपि 'स्वमो०' ( ७।१।२३ ) इत्यस्य बाधे, अक्षमत्वेन 'श्रिमन्यम्' इत्येवेति प्रतिपादितम्। प्रदीपकारेणापि[2] भाष्यसम्मतमेव निगदितम्।

काशिकाकारेण[3], न्यासकारेण[4], पदमञ्जरीकारेण[5], प्रक्रियासर्वस्वकारेण[6] 'श्रिमन्यम्' इत्येव स्वीकृतम्। नागेशेनोद्योते[7] बाधसामान्यचिन्तायां बाधविशेष-चिन्तायां चोभयविधरूपस्य साधुत्वमुपपाद्य शेखरे 'श्रिमन्यं कुलम्' इत्यस्यैव समर्थनं कृतम्। तत्र दीक्षितेन तदेवानुपूर्व्या प्रतिष्ठापितम्, यदुक्तं पदमञ्जर्याम्।

अत्र मतद्वये प्रौढमनोरमोक्तिरेव प्रबलतरा प्रतीयते। यद्यपि बाधसामान्य-चिन्तायां भाष्ये 'श्रियं मन्यं' साधितम्, 'वत् घटितातिदेशोऽनित्यः' इत्यादिनापि 'श्रियं मन्यम्' इत्यनेनैव भवितव्यम्, तथापि भाष्ये बाधविशेषचिन्तामाश्रित्य 'श्रिमन्यम्' इत्यपि समाहितम्। सामान्यापेक्षातो विशेषस्य बलवत्त्वं प्रसिद्धमेव। एवं 'मध्येऽपवादाः' इत्यादिना च लुक्प्रवृत्तौ 'श्रिमन्यं कुलम्' इत्येव शोभनम्। वस्तुतस्तु भाष्य उभयविधव्याख्याने उभे रूपे मन्तव्ये।

---

१. भाष्ये 'इच एकाचो०' इति सूत्रे ८७६ तमे पृष्ठे।
२. प्रदीपे 'इच एकाचो०' इति सूत्रे ८७६ तमे पृष्ठे।
३. काशिकायाम् 'इच एकाचो०' इति सूत्रे २६८–२६९ तमपृष्ठयोः।
४. न्यासे 'इच एकाचो०' इति सूत्रे २६८–२७० तमपृष्ठपर्यन्तम्।
५. पदमञ्जर्याम् 'इच एकाचो०' इति सूत्रे २६८–२६९ तमपृष्ठयोः।
६. प्रक्रियासर्वस्वे 'इच एकाचो०' इति सूत्रे द्वितीये भागे तृतीये पृष्ठे।
७. उद्योते 'इच एकाचो०' इति सूत्रे ८७६ तमे पृष्ठे, बृहच्छब्देन्दुशेखरे २०४५–२०४६ तमपृष्ठयोः।

'परमदण्डिनौ' इति प्रयोगविचारः

१—'ङमो ह्रस्वा०' इति सूत्रार्थप्रदर्शनम् ।

२—भट्टोजिदीक्षितमतेन 'परमदण्डिनौ' इत्यत्र 'ङमो०' इति नुड्वारणाय पदेत्यस्यानुवृत्तिर्विफला ।

३—शब्दरत्नकारमतेन 'परमदण्डिनौ' इत्यत्र नुड् वारणाय पदेत्यस्यानुवृत्तिरावश्यकी ।

४—नुड् वारणाय पदेऽनुवृत्तिर्विफलेति पक्षे वैयाकरणानां सम्मतिः ।

५—नुड्वारणायपदेऽनुवर्त्तते इति पक्षमादाय वैयाकरणानां विचारः ।

६—अपाणिनीयव्याकरणे 'ङमो०' इति स्वरूपनिदर्शनम् ।

७—युक्तायुक्तत्वसमीक्षणम् ।

'ङमो ह्रस्वादचि ङमुण्नित्यम्' ( ८।३।३२ ) इति सूत्रस्यार्थः—'ह्रस्वात् परो यो ङम् तदन्तं यत् पदं तस्मात् परस्याचो ङमुडागमः स्याद् नित्यम्' इति सूत्रार्थः ।

तेन 'परमदण्डिनौ' इत्यत्र प्रत्ययलक्षणेन पदत्वमाश्रित्य 'ङमोह्रस्वादचि' ( ८।३।३२ ) इत्यनेन ङमुडागमे प्राप्ते, किन्तु 'परमवाचौ', 'परमगोदुहौ', 'परमलिहौ' इत्यादौ कुत्व-घत्व-ढत्वादि-वारणाय 'उत्तरपदत्वे चापदादिविधौ' ( ५९३ ) इति वार्त्तिकमाश्रीयते, तेनेवात्रापि प्रत्ययलक्षणवारणे दोषाभावः । अत्र सूत्रे 'उञि च पदे' ( ८।३।२१ ) इत्यतः 'पदे' इत्यनुवर्त्य ह्रस्वात् परो यो ङम् तदन्तं यत् पदं ततः परस्याजादेः पदस्य ङमुडित्यर्थेनापि ङमुडापत्तिर्वारयितुं शक्यते । किन्तु 'परमदण्डिनौ' इत्यत्र नलोपवारणाय 'उत्तरपदत्वे०' ( ५९३ ) इति वार्त्तिकाश्रयणे तेनैव नुडागमवारणसम्भवे 'पदे' इत्यस्याऽनुवृत्तिर्विफलैव । अस्य पक्षस्य समर्थनं मनोरमाकारेण[1] कृतमस्ति । तत्त्वबोधिन्यां[2] चास्यानुमोदनं विद्यते ।

---

१. प्रौढमनोरमायाम् 'ङमो ह्रस्वा०' इति सूत्रे २७५-२७६ तमपृष्ठयोः ।
२. तत्त्वबोधिन्याम् 'ङमो ह्रस्वा०' इति सूत्रे ३७ तमे पृष्ठे ।

किन्तु नेदं दीक्षितस्य स्वकीयोद्भावनम्, अपि तु भाष्ये[1], काशिकायाम्[2], न्यासे[3], पदमञ्जर्यां[4] चास्य पक्षस्य स्वरूपं समान्येन लक्ष्यते ।

एतद्विपरीतं 'न लुमताङ्गस्य' (१।१।६३) इति सूत्रे भाष्ये अपदादिविधाविति पर्युदासेन पदान्तत्वनिमित्तके विधावेव 'उत्तरपदत्वे चापदादिविधौ' इति वार्त्तिकस्य प्रवृत्तिप्रतिपादनेन, नुटः पदान्तत्वनिमित्तकविधित्वाभावेन 'उत्तरपदत्वे०' इति निषेधाप्रवृत्तौ 'परमदण्डिनौ' इत्यत्र नुड्वारणाय 'उभि च पदे' (८।३।२१) इत्यतः पदे इत्यनुवृत्तिः 'ङमो ह्रस्वा०' इत्यत्र स्वीकार्यैव ।

एवं 'माषकुम्भवापेन' इत्यत्र प्रत्ययलक्षणेन 'कुम्भ' इत्यस्य पदत्वे 'पदव्यवाये' (८।४।३८) इति णत्वनिषेधसिद्ध्यर्थं 'उत्तरपदत्वे०' इति वार्त्तिकस्य सामान्यार्थं विहाय उत्तरपदस्य यत्र कार्यित्वं तत्रैव वार्त्तिकस्य निषेधप्रवृत्तिरित्यर्थस्वीकारोऽपेक्ष्यते । अन्यथा सामान्यतः प्रवृत्तिस्वीकारे वार्त्तिकस्य प्रत्ययलक्षणप्रतिषेधे पदत्वाभावे 'पदव्यवाये' (८।४।३८) इति निषेधानर्थक्यं स्यात् । इत्थं 'परमदण्डिनौ' इत्यत्र 'दण्डिन्' इत्यस्य कार्यित्वाभावेन 'उत्तरपदत्वे०' (५९३) इत्यस्या—प्रवृत्तौ प्रत्ययलक्षणेन पदत्वमाश्रित्य नुडागमापत्तिः । तद्वारणाय 'पदे' इत्यस्यानुवृत्तिरुचिता । 'तेन निषेधेन सिद्धम्' इति भाष्यस्यैकदेशित्वेन विरोधोऽपि नास्तीति रत्नकाराशयः[5] ।

अस्य पक्षस्यापि दर्शनं भाष्ये[6], काशिकायाम्[7], न्यासे[8], पदमञ्जर्याम्[9],

१. भाष्ये 'ङमो ह्रस्वा०' इति सूत्रे ४४४-४४५ तमपृष्ठयोः ।
२. काशिकायाम् 'ङमो ह्रस्वा०' इति सूत्रे ५१३ तमे पृष्ठे ।
३. न्यासे 'ङमो ह्रस्वा०' इति सूत्रे ५१३ तमे पृष्ठे ।
४. पदमञ्जर्याम् 'ङमो ह्रस्वा०' इति सूत्रे ५१३ तमे पृष्ठे ।
५. शब्दरत्ने 'ङमोह्रस्वादचि०' इति सूत्रे २७५-२७७ तमपृष्ठपर्यन्तम् ।
६. भाष्ये 'ङमोह्रस्वादचि०' इति सूत्रे ४४६ तमे पृष्ठे ।
७. काशिकायाम् 'ङमो ह्रस्वादचि०' इति सूत्रे ५१३ तमे पृष्ठे ।
८. न्यासे 'ङमो ह्रस्वादचि०' इति सूत्रे ५१३ तमे पृष्ठे ।
९. पदमञ्जर्याम् 'ङमो ह्रस्वादचि०' इति सूत्रे ५१३ तमे पृष्ठे ।

प्रदीपे[1] च समान्येन भवति। तमेव पक्षमादाय प्रसादकारेण[2], रत्नकारेण, नागेशेन[3], भैरवीकारेण[4], भावप्रकाशकारादिना[5] चासौ विशेषतो विशदीकृतः। मनोरमाखण्डने 'यतु परमदण्डिनावित्यादौ अन्तर्वर्त्ति विभक्त्या पदत्वान्नुट् स्यादिति तन्न नुटो नलोपं प्रत्यसिद्धत्वेन नलोपापादनस्यैवौचित्यात्' इत्युक्तम्। ( खं० नं० २१ )

अपाणिनीये शाकटायनव्याकरणे त्वस्य सूत्रस्य स्थाने ह्रस्वान्ङमः पदान्ते' ( १।१।१२३ ) इति सूत्रितम्। तत्र 'ह्रस्वात् परस्य पदान्ते वर्तमानस्य ङमः स्थाने नित्यम् अचि परे द्वे रूपे भवतः' इति सूत्रार्थः। यद्यप्यत्र सूत्रे परमदण्डिनौ' इति प्रयोगविषये किमपि नोक्तम्, तथाप्युक्तसूत्रार्थे कृते 'परमदण्डिनौ' इत्यत्र द्वित्वापत्तिस्त्वस्त्येव अतस्तत्रापि वार्त्तिकः स्वीकर्त्तव्य एव।

अत्र मतद्वये यद्यपि 'परमवाचौ', 'परमगोदुहौ', 'परमलिहौ', इत्यादौ कुत्व-घत्व-ढत्व-वारणाय न लुमताङ्गस्य' ( १।१।६३ ) सूत्रे भाष्ये 'उत्तर पदत्वे०' इति वार्त्तिकस्य समर्थनं कृतम्। एवं प्रकृतसूत्रभाष्ये च 'परमदण्डिना', 'परमक्षत्रिणा' इत्याद्यर्थं 'उत्तरपदत्वे०' इति प्रदर्शितम्, तथापि 'न लुमताङ्गस्य' ( १।१।६३ ) सूत्रे[6] 'नाप्रतिषेधात् इति भाष्यवार्त्तिकव्याख्यावसरे भाष्यकारेण अपदादि' इति पर्युदासाश्रयणेन एवं 'दण्डिना' शकटिना इत्याद्यर्थं प्रकृतसूत्रे एव 'पदे' इत्यनुवृत्तिः स्वीकृता। कैयटेन नागेशेन च सानुमोदिता। एवं उञि चपदे' ( ८।३।२१ ) इति सूत्रभाष्ये[7] 'पदे' ग्रहणस्य ङमो ह्रस्वादचि

१. प्रदीपे 'ङमो ह्रस्वादचि०' इति सूत्रे ४४६ तमे पृष्ठे।
२. प्रक्रियाकौमुद्याः प्रसादटीकायाम् 'ङमो ह्रस्वादचि०' इति सूत्रे ९५ तमपृष्ठे।
३. लघुशब्देन्दुशेखरे 'ङमो ह्रस्वादचि०' इति सूत्रे १३०-१३१ तमपृष्ठयोः।
४. भैरव्याम् 'ङमो ह्रस्वादचि०' इति सूत्रे २७५-२७७ तमपृष्ठपर्य्यन्तम्।
५. भावप्रकाशे 'ङमो ह्रस्वादचि०' इति सूत्रे २७५-२७७ तमपृष्ठपर्य्यन्तम्।
६. भाष्ये 'न लुमताङ्गस्य' इति सूत्रे ३५१ तमे पृष्ठे।
७. 'उञि च पदे' इति सूत्रे भाष्ये ४४२ तमे पृष्ठे।

ङ्मुण्नित्यम्' (८।३।३२) इत्यत्र अनुवृत्तेरेव फलरूपेण प्रदर्शनेन, एवं 'तेन निषेधेन सिद्धम्' इति वाक्यस्योपलब्ध भाष्यसंस्करणेषु पाठाभाव दर्शनेन, उत्तरपदादिव्याख्यानम् एकदेशिपरकमेव । तेन रत्नकारोक्तपक्ष एव समुचितः ।

## 'किंविंत'–प्रयोगविचारः

१—'मय उञो०' इति सूत्रार्थं प्रदर्शनम् ।

२—भट्टोजिदीक्षितमतेन 'किं विंति' इत्यत्र सानुनासिकस्य स्थाने सनुनासिकादेशनिदर्शनम् ।

३—शब्दरत्नकारमतेन भाव्यमानेन सवर्णग्रहणाभावेन 'किं विंति' इत्यत्र न सानुनासिकस्य सानुनासिकादेशः ।

४—सानुनासिकस्य सानुनासिकादेशपक्षे वैयाकरणानां सम्मतिः ।

५—भाव्यमानेन सवर्णग्राहकत्वे सानुनासिकस्य सानुनासिकादेशविषये वैयाकरणानां विचार प्रदर्शनम् ।

६—युक्तायुक्तत्वसमीक्षणम् ।

'मय उञो वो वा' (८।३।३३) इति सूत्रस्य 'मयः परस्य उञ उकारस्य वकारादेशो वा भवति' इति 'मय उञो वो वा' (८।३।३६) इति सूत्रार्थः सम्पद्यते ।

तत्र भट्टोजिदीक्षितमते[1] 'किमु इति' इत्मत्र उकारस्य 'उञः' (१।१।१७) इति सूत्रेण 'ऊँ' इत्यादेशे कृते 'किमूं इति' तत्र 'ऊँ' इत्यस्य स्थाने 'मय ऊञो वो वा' इत्यनेन आन्तरतम्यात् सानुनासिकस्य सानुनासिके वकारे 'किं विंति' इति रूपसिद्धिः ।

नायं दीक्षितस्यापूर्वः पक्षः, किन्त्वितः पूर्वं कैयटेन[2] पदमञ्जरीकारेण[3] च प्रकृतसूत्र उक्तवियः प्रतिपादितः । लघुशब्देन्दुशेखरे[4] नागेशेन चास्य मतस्य पुष्टिः कृता ।

---

१. मनोरमायाम् 'मय उञो० इति सूत्रे २५७ तमे पृष्ठे ।

२. प्रदीपे 'मय उञो' वेति सूत्रे ४४६ तमे पृष्ठे ।

३. पदमञ्जर्याम् 'मय उञो' वेति सूत्रे ५१४ तमे पृष्ठे ।

४. शब्देन्दुशेखरे 'मय उञो' वेति सूत्रे १२० तमे पृष्ठे ।

रत्नकारमते[1] तु वकारस्य भाव्यमानत्वेन 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषया सानुनासिकस्य स्थाने सानुनासिकवकारादेशो न स्यात्। तेन 'किम्विति' इत्येव रूपम्। रत्नकारस्य स्वकीयमुद्भावनमिदम्। नागेशेन प्रकृतसूत्रस्य उद्योते[2] भैरवीकारेण[3], भावप्रकाशकारेण[4] च कृतम्। अत एव मतुपो मस्य नानुनासिको वकारः। अतएव 'तद्वानासाम्' इति निर्देशः संगच्छते। अन्यथा नित्योऽनुनासिकः स्याद् इत्यादिवचनेन प्रतिपादितम्। अस्मिन् विषये शेखरत उद्योते वैलक्षण्यप्रदर्शनेन परस्परविरोधः।

अत्र समीक्षात्मकदृष्ट्या विचारे रत्नकारोक्तमतमेव युक्तम्। यदि भाव्यमानपरिभाषया निषेधो न भवेत्, तदा 'उञः' (१।१।१७) 'ऊँ' (१।१।१८) इति सूत्रभाष्ये[5] कैयटे[6] च 'उ इति', ऊँ इति-विति-इति रूपत्रयमात्रस्य प्रदर्शनं न स्यात्। तदा तु 'उ इति, ऊँ इति-विति, विँति-इति चत्वारि रूपाणि भविष्यन्ति। 'उञः ऊँ' इति सूत्रे मनोरमाकारेणापि[7] त्रीणि रूपाण्येव प्रदर्शितानि। तत्त्वबोधिन्यामपि[8] तदेव। अतः प्रकृतसूत्रे 'कम्विँति' इति सानुनासिकरूपस्वीकारे मनोरमाकारस्य स्ववचनविरोधः। अत एव 'भाव्यमानत्वेऽपिसवर्णानां ग्रहणं भवेत्' तदर्थं 'तित् स्वरितम्' (६।१।१८५) इति सूत्रे भाष्ये[9] 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' इति परिभाषितम्। तस्माद् उकारविषये सवर्णग्राहकताविधानेऽप्युकारातिरिक्तस्थले भाव्यमाने न तथा। अतो मनोरमोक्तमयुक्तमेव।

१. शब्दरत्ने 'मय उञो वेति सूत्रे २५७–२५८ तम पृष्ठयोः।
२. उद्योते 'मय उञो' वेति सूत्रे ४४६–४४७ तमयोः पृष्ठयोः।
३. भैरव्याम् 'मय उञो' वेति सूत्रे २५७–२४८ तमयोः पृष्ठयोः।
४. भाव प्रकाशे 'मय उञो' वेति सूत्रे २५६–२५८ तमयोः पृष्ठयोः।
५. 'उञः, ऊँ' इति सूत्रे भाष्ये १७७ तमे पृष्ठे।
६. 'उञः, ऊँ' इति सूत्रे प्रदीपे १६६ तमे पृष्ठे।
७. 'उञः, ऊँ' इति सूत्रे मनोरमायाम् २५६ तमे पृष्ठे।
८. 'ऊञः ऊँ' इति सूत्रे तत्त्वबोधिन्याम् ३२ तमे पृष्ठे।
९. 'तित् स्वरितम्' इति सूत्रे भाष्ये ८०१ तमे पृष्ठे।

# प्रौढमनोरमाशब्दरत्नयोर्विचारभेदानां युक्ता-युक्तत्वसमीक्षा

## 'नीवह्योर्न' इति वार्तिके विचारः

१—भट्टोजिदीक्षितमतेन यथाकथञ्चित् गत्यर्थत्वमादाय नीवह्धात्वोः प्राप्तकर्मसंज्ञावारणार्थं 'नीवह्योर्न' इति वार्तिकोत्थानम् ।

२—शब्दरत्नकारमतेन 'नीवह्' धात्वोर्गत्यर्थत्वाभावेन वार्त्तिकारम्भो व्यर्थः ।

३—यथाकथंचित् गत्यर्थत्वमादाय प्राप्तकर्मसंज्ञावारणार्थं वार्त्तिकारम्भे वैयाकारणानां सम्मतिप्रदर्शनम् ।

४—युक्तायुक्तत्वसमीक्षणम् ।

'गतिवुद्धि०' इति ( १।४।५।२ ) सूत्रेण प्राप्ता कर्मसंज्ञा 'नीवह्योर्न' इति वार्त्तिकेन नीवह्योर्धात्वोर्निषिध्यते । यद्यपि नीधातोर्वह्धातोश्च प्रापणमर्थः, न गतिः, प्रापणं ह्युत्तरदेशसंयोगाऽनुकूलव्यापारः, तथापि गतिरपि विशेषणीभूय प्रापणमध्ये प्रविष्टेत्येतावन्मात्रेण प्राप्तिं मत्वा गतिवुद्धि० ( १।४।५२ ) इति सूत्रेण प्राप्तकर्मसंज्ञा 'नीवह्योर्न इति निषिध्यत इति दीक्षिताशयः[1] ।

'न वेति विभाषा' ( १।१।४४ ) इति सूत्रभाष्ये 'हृक्रोरन्यतरस्याम्' ( १।४।५।३ ) इत्यस्योभयत्र विभाषात्वमुक्त्वा प्राप्ते अभ्यवहरति इत्युदाहृत्य, अप्राप्ते ( कश्चिद् भारं हरति, तं देवदत्तः प्रेरयतीति ) देवदत्तो हारयति भारम् इत्युदाहरणं दत्तम् । विपूर्वो हरतिर्गत्यर्थः । अभ्यवपूर्वः प्रत्यवसानार्थ इति कैयटेन च प्रतिपादितम् । एवं 'न गतिहिंसार्थेभ्यः ( १।३।१५ ) इति सूत्रभाष्ये 'हृवह्योरप्रतिषेधः' इति वार्त्तिकगतस्य केवलं हृधातोः सम्प्रहरन्ते

---

१. मनोरमायाम् 'नीवह्योर्न' इति वार्तिके ८६२-८६३ तमपृष्ठयोः ।

राजानः' 'इति हिंसार्थं एवोदाहरणदानेन' न गति०' ( १।३।१५ ) इति सूत्र एव वहिर्न गत्यर्थः, 'गतिबुद्धि०' इत्यादौ तु तस्य गत्यर्थकताऽस्त्येव । देशान्तर प्रापणं वहेरर्थः 'इति भाष्येण प्रापणस्य गतित्वाभावबोधनेन गत्यर्थत्वाद् एषां ग्रहणं न स्यात्, प्राप्तिश्चात्र सम्बन्धमात्रम् । 'सुखं प्राप्तः' 'धनं प्राप्तः' 'भूःप्राप्ता' इत्यादिव्यवहारदर्शनेन देशान्तरप्राप्तेः परं गतिं विनानुपपत्त्या क्वचिन्नान्तरीयकतया गतिप्राप्तिरस्त्यैवेति । तादृशगत्यर्थकत्वमभिमत्यापि वास्तविकगत्यर्थत्वाभावेन वार्तिकारम्भस्य न किञ्चित् फलमिति रत्नकाराशयः[1] ।

दीक्षिततः पूर्वं काशिकाकारेण[2], न्यासकारेण[3], पदमञ्जरीकारेण[4], प्रक्रियाकौमुदीकारेण[5], प्रसादटीकाकारेण[6], यथाकथंचिद् गत्यर्थकत्वं प्रापणार्थकानां स्वीकृत्य वार्तिकं स्वीकृतम् । परवर्तिना प्रक्रियासर्वस्वकारेण[7], तत्त्वबोधिनीकारेण[8], शेखरकारेण[9], भावप्रकाशकारेण[10] च गत्यर्थकमध्ये एतेषां ग्रहणं कृत्वा वार्त्तिकं स्वीकृतम् । दाधिमथटीकाकारेणापि[11] वहेर्गत्यर्थत्वाभावेऽपि नयतेर्गत्यर्थाभावे मानाभावेन वार्त्तिकस्यावश्यकत्वमेव सूचितम् । भैरवीकारात् पूर्वं रत्नकारमतं क्वापि न दृश्यते । अतः प्रकृतविषये रत्नकारस्येदं स्वकीयोद्भावनम् ।

१. शब्दरत्ने 'नीवह्योर्न' इति वार्तिके ८६२-८६४ तमपृष्ठपर्य्यन्तम् ।
२. न्यासे 'नीवह्योर्न' इति वार्तिके ५७८ तमे पृष्ठे ।
३. न्यासे 'नीवह्योर्न' इति वार्त्तिके ५७८ तमे पृष्ठे ।
४. पदमञ्जर्याम् 'नीवह्योर्न' इति वार्त्तिके ५७८ तमे पृष्ठे ।
५. प्रक्रियाकौमुद्याम् 'नीवह्योर्न' इति वार्त्तिके ३९४ तमे पृष्ठे ।
६. प्रसादटीकायाम् 'नीवह्योर्न' इति वार्त्तिके ३९४ तमे पृष्ठे ।
७. प्रक्रियासर्वस्वे 'नीवह्योर्न' इति वार्त्तिके १३८ तमे पृष्ठे ।
८. तत्त्वबोधिन्याम् 'नीवह्योर्न' इति वार्त्तिके १६५ तमे पृष्ठे ।
९. लघुशब्देन्दुशेखरे 'नीवह्योर्न' इति वार्त्तिके ४६३-४६४ तमपृष्ठयोः ।
१०. भावप्रकाशे 'नीवह्योर्न' इति वार्त्तिके ८६२-८६४ तमपृष्ठयोः ।
११. दाधिमथटीकायाम् 'नीवह्योर्न' इति वार्त्तिके १६५ तमे पृष्ठे ।

अत्र विचारप्रसङ्गे नीधातोः 'वह्'—धातोश्च प्रापणमर्थः सर्वथा प्रसिद्धः। तत्रैतेषां धातूनां वार्त्तिककारतः पूर्वं प्राप्त्यर्थं एव प्रयोग आसीद् इति संलक्ष्यते। अन्यथा सूत्रकारोऽप्यवश्यमेतेषां निषेधं वदेत्। अतः सूत्रकारकाले प्रापणार्थक-धातूनां गत्यर्थेऽन्तरभावो नासीद् इत्येव सयुक्तिकः पक्षः। अत एतेषां धातूनां प्रायस्तत्काले प्राप्त्यर्थं एव पर्यवसानं दृश्यते। नीधातोः प्रणयनम् ( करणमुत्पादनम् ), प्रवर्तनम्, ( प्रेरणम् ) प्रापणम्, निर्वाहः, अपनयनम्, ( अपहरणं परिहरणं वा ) गवेषणम्, शिक्षा, निश्चयः ( निर्णयो ज्ञानं वा ), आविर्भावः, क्षेपणं ( यापनम् ) आनयनं ( दर्शनम् ) इत्येतेष्वर्थेषु प्रयोगो लभ्यते।

एवं 'वह्'—धातोः प्रापणम्, धारणम्, प्रस्थापनम्, निर्वाहः, संयोजनम्, आनयनम्, गमनम्, याजनम्, विवाहः, संपादनम्, करणम्, उद्धरणम्, वर्तनम् ( प्रवर्तनम् ) प्राणवियोगानुकूलव्यापारश्चेति त्रयोदशार्थाः प्राप्यन्ते।

तत्र 'नी' धातोः गत्यर्थत्वमनुपपन्नम्, तथापि—

'दधौ पटीयान् समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने' ( १।१७ ) इति नैषधीय-श्लोकगतस्य 'नयम्' इत्यस्य गमनमित्यर्थः प्रकाशटीकाकारेण कृतः। वह्धातोर्गत्यर्थोऽनेकेषु स्थलेषु प्रसिद्धः। तद्यथा—'य आश्वश्वाऽगमवद्वहन्ते' ( ऋ० ५।५८।१ ) इत्यत्र वह्धातुर्गमनार्थकः, आश्वश्वान्शीघ्रगाम्यश्वोपेता। अमवद् = बलवन्तो यथा भवन्ति तथा गच्छन्ति इति प्रासङ्गिकादर्थात्। एवं—

'कथमल्पबलप्राणा वह्यन्तीमे ह्या मम' ( म० भा० ३।७१।१५ ) इत्यत्र वह्धातोर्गमनमर्थः।

'स बाह्यते राजपथः शिवाभिः' इत्यत्र बाह्यते = गम्यते इति विवृण्वन्नाह मल्लिनाथः—वहेरन्यो वहि-धातुरस्तीत्युपदेश इति। इह स धातूनामनेकार्थत्वाद् वह्धातुर्गमनार्थक इति न प्रत्यपादयत्। वस्तुतस्तु राजपथस्य कर्मकत्वात् तत्र वह्धातुर्गमनार्थको विज्ञेयः। अर्थभेदाच्छब्दभेदस्य न्यायो नाभ्युपगन्तव्यः। अन्यवस्था स्यात्। 'अश्वो वहति सप्तनामा ( ऋ० १।१६४।२ ) पथमेत्र नदी वहति इत्यादौ स्यन्दन रूपागतिः।

'छन्देन चोदकं तस्य वहत्या वर्जितम् द्रुतम् ।' ( म० भा० ३।७५।१५ ) इत्यत्र स्यन्दरूपागतिर्विद्यते । एतान्युदाहरणानि धात्वर्थविज्ञाने[1] निर्दिष्टानि सन्ति ।

इत्थं समीक्षात्मकदृष्ट्या विचारे नीधातोर्गत्यर्थे प्रयोगो न लभ्यते । वह्धातोर्गत्यर्थे प्रयोगो लभ्यते । किन्तु गम् धातोर्यथोत्तरदेशसंयोगाऽनुकूलव्यापारार्थः, तथैव नीधातोरुत्तरदेशप्राप्त्यऽनुकूलव्यापारार्थो भवति । उत्तरदेशस्य प्राप्तिश्च गतिं विना न सम्भवति । एवं तावद् उत्तरदेशसंयोगश्च गतिं विनाऽसंभवः । तस्माद् संयोगस्य प्राप्तेश्च समफलकत्वम्, समव्यापारत्वं च । तेन प्रापणार्थकधातूनामपि गत्यर्थकत्वेऽन्तर्भावे न क्षतिः अतएव वार्त्तिककारेण भाष्यकारेण च वार्त्तिकं स्वीकृतम् । अन्यथा भाष्यकारस्य वार्त्तिकस्वीकृतिदानासंगतिः स्यात् । प्रदीपकारेण तथैवोपपादितम् ।

यद्यपि 'न गतिहिंसार्थेभ्यः' ( १।३।१५ ) इति सूत्रे भाष्ये[2] प्रदीपे च वह्धातोः प्रापणार्थकत्वमुक्तम्, तच्च सम्बन्धमात्रम् । अत एव गत्यर्थे वह्धातोरुदाहरणं न दत्तमिति चेत् सत्यम्, तथाप्युदाहरणाभावदर्शनमात्रेण वह्धातोर्गत्यर्थत्वाभावोपपादनमकिञ्चित्करम् । यतो हि गत्यर्थत्वाभावे सति 'ह्वहोरप्रतिशेधः ( भा. वा. ) इति वार्त्तिके वार्त्तिककृता वहेर्ग्रहणं कृतम् । यद्यपि भाष्यकृता 'देशान्तरप्रापणक्रियाऽत्र वहिः' इत्युक्तम्, तेनास्य गत्यर्थत्वोपपादनमस्पष्टम्, तथापि 'नियन्तृकर्तृकस्य वहेरनिषेधः' इत्यादौ 'वह्' धातोः गतित्वं स्पष्टमेव । अतः 'न गति०' ( १।३।१५ ) इत्यस्मिन्नेव सूत्रे 'वह्' धातुर्न गत्यर्थक इत्येव युक्तम् । यद्यपि 'अकथितञ्च' ( १।४।१५ ) इति सूत्रस्थभाष्यवार्त्तिके—

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥

---

१. धात्वर्थविज्ञाने 'नीधातुविषयनिर्देश.' १८५–१९० तमपृष्ठपर्य्यन्तम्, वह्धातोर्निर्देशः २३१–२३५ तमपृष्ठपर्य्यन्तम् ।

२. महाभाष्ये 'न गतिहिंसार्थेभ्यः' इति सूत्रे १५८ तमे पृष्ठे ।

  

इति भाष्यवार्त्तिके गत्यर्थानामिति पृथगुपादानेन नैतयोर्धात्वोर्गत्यर्थत्वम्, अन्यथा प्राप्त्यर्थकसमस्तधातूनां गतित्वरूपार्थो न स्यात्, तथापि—

'यास्यत्यद्य शकुन्तलेति हृदयम्' (४।८) (अभ० शाकु०) इत्यत्र 'यास्यति इत्यस्य' गमिष्यति' इत्यर्थोऽपि न स्यात्। तत्र प्राप्स्यतीत्यर्थासम्भव एव। एवम्—

कुतोऽसौ तिष्ठते राजा, तत्समाचक्ष्व सुव्रत।
सोऽहं यास्यामि तत्रैव यत्रासौ नरपुंगवः॥७।३।२४ प्रक्षिप्तसर्गः

तथा—

अयोध्यायाः पतिं वीरं मान्धाता नृपोत्तमम्।
सप्तद्वीपाधिपं यान्तं स्यन्दनेन विराजितम्॥वा०रा० ७।३।२७···

इति श्लोके 'यास्यामि' इत्यस्य गमिष्यामि, यान्तम् इत्यस्य गच्छन्तमित्यर्थदर्शनेन प्राप्त्यर्थकधातोर्गत्यर्थकेऽन्तर्भावः सुतरां सिद्धः अत एव पर्यायत्वेन प्राप्त्यर्थे गम्धातोरपि प्रयोगः। यथा—

भर्तुराज्ञां विना नारी उपोष्य व्रतचारिणी।
आयुष्यं हरते भर्तुर्नरकञ्चैव गच्छति॥

इति 'नरकं गच्छति' इत्यस्य 'नरकं प्राप्नोति' इत्येवार्थो भवति। नरकगमने ग्रामादिवद् मार्गाभावेन पादप्रक्षेपासम्भवे गच्छतीति प्रयोगो न स्यात्। तेन प्राप्त्यर्थके गत्यर्थकानां गत्यर्थके प्राप्त्यर्थकानां धातूनां संग्रहे क्षतिविरहे भट्टोजिदीक्षितप्रतिपादितपक्ष एव श्रेयस्करः।

---

## 'अन्वादेशे नपुंसके एनद् वक्तव्यः' इति वार्तिकारम्भविचारः।

१—भट्टोजिदीक्षितमतेन 'अन्वादेशे०' इति वार्त्तिकमनावश्यकम्।
२—शब्दरत्नकारमतेन 'अन्वादेशे०' इति वार्त्तिकमावश्यकम्।
३—उभयपक्षे वैयाकरणानां सम्मतिप्रदर्शनम्।
४—युक्तायुक्तत्वसमीक्षणम्।

  

भट्टोजिदीक्षितमतेनास्य[1] वार्त्तिकस्य फलम् 'अम्' विभक्तावेव भवति। किन्तु तदर्थमपि 'द्वितीया टौस्स्वेनः' (२।४।३४) इति सूत्रस्य स्थाने 'द्वितीया टौसस्वैनद्' इति न्यासेन भवितव्यम्। 'एनम्, एनौ, एनान्' इत्यादिप्रयोगाणां सिद्धिरेनदादेशे 'त्यदादीनामः' इत्यात्वे पररूपे सति स्यात्। तेनोक्तन्यासकरणे 'अन्वादेशे॰' इति वार्त्तिकं न कर्त्तव्यं भवतीति लाघवम्। नपुंसकलिङ्गेऽपि 'स्वमोर्नपुंसकात्' (७।१।२३) इत्यनेनामो लुक्यपि 'द्वितीयाटौ॰ (२।४।३४) इति सूत्रे तकारोच्चारणसामर्थ्येन 'न लुमताङ्गस्य' (१।१।६२) इत्यस्याप्रवृत्तौ प्रत्ययलक्षणे कृते एनदादेशो भविष्यति। 'द्वितीयाश्रितातीत॰' (२।१।२४) इत्यनेन समासे सुपो लुकि, द्वितीयादिविभक्तिपरत्वाभावेन 'एतच्छ्रितम्' इत्यत्र एनदादेशापत्तिरपि न। तकारोच्चारणसामर्थ्येन नपुंसकेऽन्तरङ्गे एकपदाश्रयणे 'स्वमोर्नपुंसकाद्' (७।१।२३) इत्यस्य विषये 'न लुमताङ्गस्य' (१।१।६२) इति सूत्रस्य बाधे सति प्रत्ययलक्षणेन विभक्तिमाश्रित्य तथादेशे तकारोच्चारणस्य चारितार्थ्ये बहिरङ्गे सामासिके 'सुपो धातुः॰' (२।४।७१) इत्यस्य विषये प्रत्ययलक्षणस्य 'न लुमताङ्गस्य' (१।१।६२) इति निषेधे, विभक्तिपरत्वाभावेन आदेशाऽप्रवृत्तौ दोषाभावः।

किन्तु रत्नकाराऽनुसारेण[2] 'द्वितीया टौस्स्वेनत्' (२।४।३४) इति सूत्रकरणेन तकारोच्चारणबलेन 'स्वमोर्नपुंसकात्' (७।१।२३) इति विषये 'न लुमता॰' (१।१।६२) इत्यस्य बाधद्वारा प्रत्ययलक्षणे कृते यथा एनदादेशः, तथा सामासिके लुक्यपि तेनावश्यं भवितव्यम्। यद्यपि सामासिको लुग् बहिरङ्गः, तथापि लुग्विषये बहिरङ्गपरिभाषायाः प्रवृत्तिर्न भवति। अत एव एनदादेशे 'एतच्छ्रितकः' इति न सिद्ध्यति, 'एनच्छ्रितकः' इति प्राप्नोति इति भाष्यं संगच्छते।

एनद् विधानेन 'द्वितीया टौ॰' (२।४।३४) इति सूत्रविषये 'न लुमता॰' (१।१।६२) इत्यस्याप्रवृत्तिरिति भाष्याशयः।

---

१. मनोरमायाम् 'अन्वादेशे॰' इति वार्त्तिके ६६५–६६६ तमपृष्ठयोः।

२. शब्दरत्ने 'अन्वादेशे॰' इति वार्त्तिके ६६५–६६८ तमपृष्ठपर्य्यन्तम्।

तत्र वस्तुत 'एनच्छ्रितकः' इति भवेत् । एतच्छ्रितको वेति शङ्कायां 'यथा लक्षणमप्रयुक्ते' इति भाष्येण अप्रयुक्ते विषये लक्षणस्याप्रवृत्तिरेवेत्यर्थकरणेनैतादृग्प्रयोगानामनभिधानमेव । एनदादेशविषये विषयसप्तम्यां मानाभावेन एन्, एनदिति पृथगेवादेष्टव्यम् । तेन वार्त्तिकं करणीयमेवेति तदाशयः । अन्यथा नपुंसकेऽप्येनदादेशो नोत्पद्येत ।

भाष्ये[1] तु 'एनदिति नपुंसकैकवचने' इति वार्त्तिकमुद्भाव्य 'यद्येनत् क्रियते एनो न वक्तव्यः' इत्युक्त्वा इष्टसिद्धिप्रकारं प्रदर्शयता 'एतच्छ्रितकः सिद्ध्यति', "एनच्छ्रितक इति प्राप्नोति' इति वदता 'यथालक्षणमप्रयुक्ते' इति वचनेन समाहितम् ।

प्रदीपे[2]–'अन्तरङ्गानपि विधीन् वहिरङ्गो लुग् बाधते' इति त्यदाद्यत्वमकृत्वा लुक् क्रियते, लुकि च कृते प्रत्ययलक्षणनिषेधात् त्यदाद्यत्वाभावः' । एवं 'यस्य प्रयोगो नोपलभ्यते तल्लक्षणाऽनुसारेण संकर्तव्यम्' । यत्र यदा 'न लुमता०' (१।१।६२) इत्यत्राङ्गाधिकारो निर्दिश्यते, तदा प्रत्ययलक्षणेन 'एनच्छ्रितकः अङ्गाधिकारविहितमप्यङ्गकार्यं निषिध्यते, तदा एतच्छ्रितक इत्युक्तम् ।

काशिकाकारेण[3] 'एनदिति नपुंसकैकवचने वक्तव्यम्' इति वार्त्तिकस्वरूपम् किन्तु पदमञ्जरीकारेण भाष्योक्तपूर्वपक्षमुपस्थाप्य एनंश्रित इत्यादिप्रयोगस्तु द्वितीया समासे "अन्तरङ्गानपि०' इति न्यायेन एनादेशे एनदादेशे वा न स्यात् । तस्माद् एतच्छ्रितः". इति भवतीत्याशयेन व्याख्यातम् ।

तत्वबोधिन्यां[4] तु मनोरमोक्तमेव यथाक्रमं चर्वितम् ।
नागेशेन[5] शेखरे, उद्योते च रत्नकार एवानुमोदितः ।

---

१. महाभाष्ये 'द्वितीयाटौस्स्वेनः इति सूत्रे ५५० तमे पृष्ठे ।
२. प्रदीपे 'द्वतीयाटौस्स्वेनः' इति सूत्रे ५५० तमे पृष्ठे ।
३. काशिकायाम् "द्वितीयाटौस्स्वेनः" इति सूत्रे २८३ तमे पृष्ठे ।
४. तत्त्वबोधिन्याम् "द्वितीया टौस्स्वेनः" इति सूत्रे १२३-१२४ तमपृष्ठयोः ।
५. लघुशब्देन्दुशेखरे "अन्वादेशे०" इति वार्त्तिके ३५२–३५३ तमपृष्ठयोः ।

भैरवीकारेण[1] "आर्द्धधातुके" ( २।३।३५ ) इति सूत्रे विषयसप्तमी सत्त्वेऽपि "द्वितीयाटौ०" ( २।४।३४ ) इत्यत्र न विषयसप्तमी। अन्यथा नपुंसकेऽपि 'एनत्' इति न स्यात्। अत एव भाष्ये "नपुंसकैकवचने एनद् वक्तव्यः, कुण्डमानय प्रक्षालय एनत्' इत्युक्तम्। अत्र "नपुंसकैकवचने" इत्युक्त्याऽन्यत्र एनादेशो वाच्यः' इति स्पष्टमेवोक्तं सिद्धान्तवार्त्तिकेन।

भावप्रकाशकारेण[2] तु "अत्येनम्" इति सिद्ध्यर्थम् एनोऽपि कार्यः। उक्त वार्तिकेन विधीयमानादेशः क्लीवनिष्ठसंख्यासमर्पकेष्वेव स्याद्, न तु समासविभक्तौ। एनस्तु गौणत्वेऽपि भवति। "एतच्छ्रितकः" एन, एनत् इति द्वावपि न भवतः तन्नोचितम्। समासेऽपि एनादेशो भवत्येवेति निगदितम्।

वस्तुतस्त्वत्र मतद्वये वार्त्तिकखण्डनपक्ष एव भाष्यसम्मतः। खण्डनपक्षमाश्रित्यैव भाष्यकारेण "एनच्छ्रितकः" इति प्राप्नोति' इत्युक्तम्। वार्त्तिकस्वीकारे तु नैतादृशी शङ्कोत्पद्यते। किन्तु भट्टोजिदीक्षितेन यद एकपदाश्रयणे "स्वमोर्नपुंसकात्" ( ७।१।६३ ) इति विषये तकारोच्चारण सामर्थ्येन' न लुमताङ्गस्य' ( १।१।६२ ) इत्यस्य प्रत्ययलक्षणविषयेऽप्रवृत्तावपि "सुपोधातु०" विषये प्रवृत्तिं स्वीकृत्य "एतच्छ्रितकः" इत्यादावेनदादेशाप्राप्तिरुक्ता, सा नोचिता।

लुग्विषये बहिरङ्गपरिभाषा न प्रवर्तते। तेन तत्रापि "न लुमताङ्गस्य" ( १।१।६२ ) इत्यप्रवृत्तौ प्रत्ययलक्षणं स्यादेवेति रत्नकारादिना यदुक्तम्, तदेवोचितम्। अन्यथा समासे सुतराम् एनदादेशाप्राप्तौ पुनः "एनच्छ्रितकः" इति प्राप्नोति "इति भाष्यासंगतिः स्पष्टैव। एवम् अत्र विषये "यथा लक्षणमप्रयुक्ते इति भाष्योक्तसमाधानस्य कैयटेन यद् व्याख्यातं "न लुमताङ्गस्य इत्यत्र अङ्गाधिकारनिर्देशे प्रत्ययलक्षणेन एनच्छ्रितक, अनङ्गाधिकारविहितमप्यङ्गकार्यं निषिध्यते, तदा एतच्छ्रितकः' इति नागेशेन चोद्योते - "अनङ्गाधिकारविषयेऽपि बहिरङ्गपरिभाषाया लुग्विषये दुर्बलता नियामकाभावेन समासेऽप्येनदादेशः

१. भैरव्याम् "अन्वादेशे०" इति वार्त्तिके ६३५–६६८ तमपृष्ठपर्यन्तम्।
२. भावप्रकाशे "अन्वादेशे०" इति वार्त्तिके ६६५–६६८ तमपृष्ठपर्यन्तम्।

स्यादेव' इति यदुक्तं तस्यासंगतिः स्यात्। "यथा लक्षण०" इत्यस्य द्वितीयव्याख्यानम् - अप्रयुक्ते लक्षणप्रवृत्तेरभावस्तेन "एतच्छ्रितकः' "एनच्छ्रितकः" इति प्रयोगयोरनभिधानमेव शोभनम्। "एतच्छ्रितकः" इति न सिद्ध्यति' इति वचनेन "द्वितीया टौ०" ( २।४।३४ ) इति सूत्रेण एनद् विधाने कृतेऽपि यदि "एतच्छ्रितकः" इति भवेत्, तदा "न सिद्धयति" इति भाष्यवचनस्यावहेलनं तेन "एतच्छ्रितकः" इति प्रयोगस्यानभिधानं वोद्धव्यम्। एनदादेशे कृते 'एनच्छ्रितकः' इति प्रयोगसाधने "यथालक्षण०" इति समाधानपर्यन्ताऽनुधावनं व्यर्थं स्यात्। एवम् एनच्छ्रितक इति प्राप्नोति" इत्यस्य आक्षेपकोटावुदाहरणदानस्य चासंगतिः स्यात्। यद्येनच्छ्रितक इति प्रयोगः सिद्धत्येव, तदा प्राप्नोतीति कथमुक्तम्? अस्यां स्थितौ तु "एनच्छ्रितकः" इत्येव भविष्यतीति वदेत्। एवं ये केचन नपुंसकविषये एनदादेश इति भाष्यसम्मतिः, तेन "कुण्डमानय प्रक्षालयैनत्" इत्याद्युदाहरणं दत्तम्, अतः पृथक् वार्त्तिकं करणीयमेवेति वदन्ति, तन्नोचितम्। तद्भाष्यस्य नपुंसकलिङ्गे अम्विभक्तौपरत एव "एनत्" इति स्वरूपस्य दर्शनं सम्पद्यते—इत्यर्थपरकत्वेन, अथवा पूर्वपक्षाभिप्रायेणेत्रास्य वचनस्योपस्थापनमस्ति, अतो न दोषावहत्वम्।

## जातिग्रहणविचारः

१—वार्त्तिकार्थः।

२—भट्टोजिदीक्षितमतेन 'शूद्रा चा०' इति वार्त्तिके जातिग्रहणं व्यर्थम्।

३—रत्नकारमतेन 'शूद्रा चा०' इति वार्त्तिके जातिग्रहणमावश्यकम्।

४—'शूद्रा चा०' इति वार्त्तिके जातिग्रहणे वैयाकरणानां विचारः।

५—युक्तायुक्तत्वसमीक्षणम्।

'अजाद्यतष्टाप्' ( ४।१।४ ) इति सूत्रे 'शूद्रा चामहत्पूर्वा' इति वार्त्तिकं पठितम्। "शूद्रा" इति प्रथमान्तम्, अमहत्पूर्वा इति प्रथमान्तम्, जातिरिति प्रथमान्तम्। 'च' इति अव्ययः। अमहत्पूर्वा = अमहत्पूर्वकः, शूद्रा = शूद्रशब्दः, 'च' इत्यनेन 'अजाद्यतष्टाप्' ( ४।१।४ ) इत्यतष्टाप् सम्बध्यते। जातिः = जातिवाच्यश्चेत्। इत्थम् 'अमहत्पूर्वकः शूद्रशब्दष्टापं लभते जातिवाच्यश्चेत्' इति वार्त्तिकार्थः सम्पद्यते।

  

शूद्रशब्दो ह्यद तः, तेन अजादिगणेऽस्य पाठेन 'अजाद्यतष्टाप्' (४।१।४) इति सूत्रेण टापि 'शूद्रा' इति रूपं भविष्यति, 'जातेरस्त्रीविषयादयोपधात्' (४।१।६३) इत्यनेन ङीषापत्तिस्तु न, गौणमुख्यन्यायेन 'तस्य बाधो भविष्यति। एवं शूद्रस्य स्त्री 'शूद्री' इत्यत्र 'पुंयोगादाख्यायाम्' (४।१।४८) इत्यनेन ङीप् स्यात्। अस्य 'अजाद्यतष्टाप्' इत्यनेन बाधो न भवति, यतो हि मुख्ये एव न्यायस्य प्रवृत्तिर्जायते। अत्र स्त्रीत्वं तु गौणम्। अतो वार्त्तिके जातिग्रहणं व्यर्थमिति भट्टोजिदीक्षितस्याभिप्रायः[1]। एवम् अस्य मतेन महाशूद्री' इत्यादिसिद्ध्यर्थं वार्त्तिकेऽमहत्पूर्वग्रहणमपि व्यर्थम्, महत्-पूर्वकशूद्रशब्दस्य आभीरादिजातौ प्रयोगेण शूद्रजात्यभावेन स्वतः टापोऽप्रवृत्तेः।

रत्नकृता[2] तु गौणमुख्यन्यायस्य प्रवृत्तिर्विभक्तिकार्यभिन्ने स्त्रीत्वनिमित्तककार्यभिन्न एव भवति, नान्यत्र। अतः पुंयोगादाख्यायाम् इत्यस्यापि 'अजाद्यतष्टाप्' (४।१।४) इत्यनेन बाधो भवति। एवम् अजस्य 'स्त्री' अजा इत्यत्र टाप् भवत्येव न पुंयोगलक्षणो ङीप्। तेन पुंयोगे टाप् बाधनार्थं जातिग्रहणमावश्यकम्। महाशूद्रशब्दस्य जात्यन्तरत्वेऽपि शूद्रत्वधर्मिण्येव पर्यवसानेन न शूद्रजातिभिन्नत्वम्। अतस्तत्र टाब्बाधनार्थममहत्पूर्वग्रहणमप्यावश्यकम् इति।

पदमञ्जर्यां[3] सुखप्रतिपत्त्यर्थं जातिग्रहणमिति प्रतिपादने एतद्विषयेऽरूचिरेव ध्वनिता। तत्त्वबोधिनीकारेण तु मनोरमोक्तमेव चर्वितम्।

भाष्ये[4] कैयटे च 'महाशूद्री' इति सिद्ध्यर्थम् अमहत्पूर्वग्रहणम्। तत्र जातेः

---

१. मनोरमायाम् 'शूद्रा चा०' इति वार्त्तिके ६७७–६७९ तमपृष्ठपर्य्यन्तम्।

२. शब्दरत्ने "शूद्रा चा०" इति वार्त्तिके ६७७–६८१ तमपृष्ठपर्य्यन्तम्।

३. पदमञ्जर्याम् "शूद्रा चा०" इति वार्त्तिके २७५–२७६ तमपृष्ठयोः।

४. महाभाष्ये कैयटे च 'शूद्रा चा०' इति वार्त्तिके ३००-३०२ तमपृष्ठपर्य्यन्तम्।

सम्बन्धार्थं जातिग्रहणं सूचितम् । काशिकायाम्[1], न्यासे[2], प्रक्रियाकौमुद्यां[3] तस्याः प्रसादाख्यटीकायां[4] च सर्वत्र 'महाशूद्री' इत्यत्र जातेः सम्बन्धार्थं जातिग्रहणम् अमहत्पूर्वं ग्रहणं चेति प्रतिपादितम् । नागेशेन,[5] भैरवीकारेण[6] भावप्रकाश-कारेण[7] च स्व,स्वग्रन्थे शब्दरत्नकारोक्तं यथावत् प्रपूजितं प्रपञ्चितञ्च ।

शाकटायनव्याकरणेऽपि[8] जातिग्रहणपरकमेव सूत्रं लक्ष्यते ।

समीक्षात्मकदृष्ट्या विचारेऽपि रत्नकारमतमेवौचित्यमावहति । यतो हि दीक्षितदृट्या अजस्य स्त्री—"अजा" इति न सिद्ध्यति । एवं शूद्रस्य स्त्री शूद्री इति न सिद्ध्यति । एवम् अमहत्पूर्वग्रहणाभावे "महाशूद्री" इत्यपि न स्यात् ।

महाशब्दस्तु शूद्रशब्दं प्रति विशेषणम् न तु विशेष्यम् । अतः शूद्ररूपविशे-ष्यस्य प्राधान्येन तत्रापि "टावेव स्यात् । तेन अमहत्पूर्वग्रहणं कर्त्तव्यम् । एवं शूद्रशब्दस्यादन्तत्वेऽपि 'जातेरस्त्री" (४।१।६३) "पुंयोगादाख्यायाम्" (४।१।४८) इति सूत्रद्वयेन "अजाद्यतष्टाप्" (४।१।४) इति सूत्रं परत्वाद् वाधितुं शक्यते । अतः परत्वाद् ङीव् एव स्याद् जातिवाच्ये न टाप् । एवम् अजाद्यतष्टाप् इत्यनेन गौणमुख्यन्यायप्रवर्तनेन जातिग्रहणं प्रत्याख्यायते । अदन्तत्वबलेन "टाप्"—स्वीकारे तु शूद्रा च इत्यपि करणीयं न भविष्यति । पुनः प्रथमं "शूद्रा च" इत्यस्यैव वैयर्थ्यम् । यदि "शूद्रा" च

---

१. काशिकायाम् "शूद्रा चा" इति वार्त्तिके २७५–२७६ तमपृष्ठयोः ।
२. न्यासे "शूद्रा चा०" इति वार्त्तिके २७५–२७६ तमपृष्ठयोः ।
३. प्रक्रियाकौमुद्याम् "शूद्रा चा०" इति वार्त्तिके ३२० तमे पृष्ठे ।
४. प्रसादटीकायाम् "शूद्रा चा०" इति वार्त्तिके ३२० तमे पृष्ठे ।
५. लघुशब्देन्दुशेखरे "शूद्रा च" इति वार्त्तिके ३६८–३७० तलपृष्ठपर्यन्तम् ।
६. भैरव्याम् "शूद्रा च" इति वार्त्तिके ६७७–६८१ तमपृष्ठपर्यन्तन् ।
७. भावप्रकाशे "शूद्रा च०" इति वार्त्तिके ६७७–६८१ तमपृष्ठपर्यन्तम् ।
८. शाकटायनव्याकरणे जातेररश्रीय शूद्रात् (१।१।६५) ९०–९१ तमपृष्ठयोः ।

इति योगः स्वीक्रियते, तदा तु जातिग्रहणममहत्पूर्वग्रहणं च सर्वं संग्रहीतव्यम्। कोशादौ यद्यप्याभीरजातिः, "महाशूद्री" विषये निर्दिष्टा तथाप्याभीरजातेर्ब्राह्मण-क्षत्रियवैश्येष्वन्तर्भावाभावेन शूद्रे एव पर्यवसायित्वम्। दृश्यते च लोके महाब्राह्मणोऽपि ब्राह्मण एव भवति, नान्यः। नहि महाब्राह्मणकथनेन ब्राह्मणातिरिक्त-स्यान्यस्य ग्रहणम्। कौशादौ तु महाशूद्रशब्दस्य जात्यन्तरे विधानेन महाशूद्रशब्दो जात्यन्तर एव प्रयुज्येतेति नियमो नास्ति, अपि तु जात्यन्तरेऽपि महाशूद्रशब्दस्य प्रयोग इति बोध्यम्। यतो हि कोशेऽनेकार्था हि शब्दा दृश्यन्ते। तेन हरिदीक्षि-तोक्तिः सर्वथा समुचिता।

## "याम्या" इति प्रयोगविचारः

१—"यमाच्चेति०" इति वार्त्तिकार्थः।

२—भट्टोजिदीक्षितमतेन "याम्याः" इति प्रयोगो भवति। तस्य सिद्धिस्तु ष्यन् प्रत्ययेन भवेत्।

३—शब्दरत्नकारमतेन लोके "याम्याः" इति प्रयोगो नास्ति।

४—"याम्याः" इति प्रयोगमादाय वैयाकरणानां विचारः।

५—युक्तायुक्तत्वसमीक्षणम्।

"यम" शब्दात् "यमाच्चेति" वक्तव्यम्' इति वार्त्तिकेन ण्यप्रत्ययेऽनुबन्धलोपे "यस्येति च" ( ६।४।१४८ ) इत्यकारलोपे, आदिवृद्धौ स्त्रीत्व-विवक्षायां टापि, विभक्तिकार्ये "याम्या" इति सिद्ध्यति।

अत्र "नाप्नुयां शतशो याम्याः पुनर्यातना" इत्यादौ "ण्य" प्रत्ययं कृत्वा "याम्याः" प्रयोगस्य साधनमनुचितम्। यतो हि "दित्यदित्या०" ( ४।१।८५ ) इति सूत्रभाष्येऽस्य वार्त्तिकस्योत्थानमपि नास्ति। अतः काशिकाकारेण यत् "यमाच्चेति वक्तव्यम्" इति वार्त्तिकं प्रकृतसूत्रे उक्तम्, तदयुक्तम्। प्रयोगसाधनं तु ष्यन् प्रत्ययेऽपि स्यादेव। षित्वात् स्त्रीत्वविवक्षायां ङीष् तु न, यतो हि "पितृव्यमातुलमातामहपितामहाः" ( ४।२।३६ ) इति सूत्रे "मातामही" इति सिद्ध्यर्थं भाष्ये "मातरि षिच्च" इति वार्त्तिकं दृश्यते। किन्तु गौरादिगणेऽपि

मातामही-शब्दस्य पाठो विद्यते। तेन यदि षित्करणबलेन ङीष् स्यात् पुनरस्य गौरादिगणे पाठकरणानर्थक्यं स्यात्, तत्सामर्थ्येन षित्प्रयुक्तो ङीष् न नित्यः। अत एव दंष्ट्रा" इत्यादौ षित्वे न ङीष् इति मनोरमाकाराशयः।[1]

रत्नकृता[2] त्वस्य प्रयोगस्य प्रामादिकतां कथयता "याम्याः शंसन्ति" इत्यादिवैदिकप्रयोगाणां सिद्धिस्तु छान्दसत्वाद् उक्ता।

काशिकाकारेण[3] पदमञ्जरीकारेण[4] च वार्त्तिकं स्वीकृतमेव किन्तु न्यासकारेण[5] 'दित्यदित्या०' (४।१।८५) इति सूत्रे पत्यन्तात् उच्चारणे लाघवं स्यात्, पुनः पत्युत्तरपदोपादानेनाधिकस्य विधानं सूच्यते। तत्र ग्रन्थाधिक्याद् अर्थाधिक्यं भवति। तेन यमशब्दादपि ण्यप्रत्ययो भविष्यति, अथवा 'अश्वपत्यादिभ्यश्च' (४।१।८४) इत्यतश्चकाराऽनुवर्तनेन समुच्चयार्थत्वेनात्र ण्यो भविष्यतीति प्रतिपादितम्। दीक्षितेन यथा निगदितम्, तत्त्वबोधिनीकारेण[6] तथैव समाहितम्।

नागेशेन[7] ण्यनन्तप्रयोगो नाङ्गीकृतः। तत्र ङीषापत्तिर्दुर्वारेत्युक्तम्। एवं 'याम्यः पुनर्यातनाः' इत्युचितमुक्तम्।

अत्र मतद्वये रत्नकारस्य प्रामादिकत्व कथनमसंगतम्। यतो हि छान्दसत्वात् समाधानं त्वगतिकगतिकम्। एतदरिक्तं लोकेऽप्यस्य प्रयोगस्य दर्शनम् भवत्येव। यथा रामायणे—

प्रगृह्य तु महीपालो जलपूरितमञ्जलिम्।
दिशं याम्यामभिमुखो रुदन् वचनमब्रवीत्॥ (२।१०३।२६)

---

१. मनोरमायाम् "यमाच्चेति वक्तव्यम्" इति वार्त्तिके ३७७-३७८ तमपृष्ठयोः।
२. शब्दरत्ने "यमाच्चेति वक्तव्यम्" इति वार्त्तिके ३७७-३७८ तमपृष्ठयोः।
३. काशिकायाम् "यमाच्चेति०" इति वार्त्तिके ४०२ तमे पृष्ठे।
४. पदमञ्जर्याम् "यमाच्चेति०" इति वार्त्तिके ४०२ तमे पृष्ठे।
५. न्यासे 'यमाच्चेति०' वार्त्तिके ४०२ तमे पृष्ठे।
६. तत्त्वबोधिन्याम् 'यमाच्चेति०' वार्त्तिके २७५ तमे पृष्ठे।
७. बृहच्छब्देन्दुशेखरे 'यमाच्चेति०' वार्त्तिके १२२५ तमे पृष्ठे।

एवम्— कण्ठे वद्धवा दशग्रीवं प्रमदा रक्तवासिनी ।
काली कर्दमलिप्ताङ्गीदिशं याम्यां प्रकर्षति ॥ ( ५।२७।४१ )

यमसम्वन्धी याम्यशब्दस्तु त्रिलिङ्गे । यथा महाभारते—

कथयिष्ये सभां याम्यां युधिष्ठिर निवोधताम् ।
वैवस्वतस्य यां पार्थ विश्वकर्मा चकारह ॥ ( २।८।१ )

इति । याम्यायामयनम् - याम्यानम्' याम्यमयनमिति वा । यथा मलमासतत्त्वे—
'याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत् ।' इति ।

उपर्युक्तोद्धरणद्वारा 'याम्याः' इति प्रयोगस्य सार्थक्यं सिद्धयति । तत्र ण्यञन्तो वा ण्यान्तो वेति विचारे ण्यप्रत्यये लक्ष्ये कोऽपि दोषो नायाति । ण्यञि तु ङीषापत्तिर्भवति । यद्यपि गौरादिगणे मातामहीशब्दस्य पाठेन षित्प्रयुक्तो' ङीष् अनित्य इत्युक्तं दीक्षितेन, तथापि न तदुचितम् । यतो हि फलं तु 'दंष्ट्रा' इत्यत्र ङीष् नेत्युक्तम् । किन्तु 'दंष्ट्रा' इत्यस्याजादिगणे पाठो विद्यते । यदि ङीष् अनित्यस्तर्हि सुतरां टाप् सिद्धौ, अजादिगणेऽस्य पाठस्य वैय्यर्थं स्यात् । तेत षित्प्रयुक्तो ङीष् नित्य एव । अत एव भाष्यकारस्य[1] 'मातरि षिच्च' इति वार्त्तिकेन षित्करणद्वारा मातामहीतिप्रयोगस्य साधनमपि संगच्छते । अत एतद् वार्त्तिकारम्भसामर्थ्येन गौरादिगणेऽस्य पाठोऽनार्ष एव । अथवा ब्राह्मणवशिष्ठमानय' इत्यत्र 'ब्राह्मणमानय' इत्युक्ते वशिष्ठानयनं सुतरां सिद्धौ पुनर्वशिष्ठपदोपादानं यथोत्कर्षाद्यर्थम्, तथैव गौरादिगणे पाठविषयेऽपि बोद्धव्यमिति । अतो ण्यप्रत्ययकरणमेव 'याम्याः' इति प्रयोगसिद्धर्थमु चितम् । किन्तु भाष्यवार्त्तिकाऽनुत्थानेनात्र विदुषां सम्मतिरपेक्ष्यते ।

---

## मरुत्तप्रयोगविचारः

१—भट्टोजिदीक्षितमतेन 'तपपर्व०' इति वार्त्तिकसाधित 'मरुत्तः' इति प्रयोगस्तु मध्यो दात्तः ।

---

१. महाभाष्ये 'मातरि षिच्च' इति वार्त्तिके ४१४ तमे पृष्ठे ।

२—शब्दरत्नकारमतेन 'मरुत्तः' इति आद्युदात्तम् ।

३—'मरुत्तः' इति प्रयोगमादाय वैयाकरणानां विचारनिदर्शनम् ।

४—युक्तायुक्तत्वसमीक्षणम् ।

'तप्पर्वमरुद्भ्याम्' ( २६१९ ) इति वार्त्तिकस्यार्थो भवति—पर्वमरुद्भ्यां तप् प्रत्ययो भवतीति । भट्टोजिदीक्षितमतेन[1] 'तप्पर्वमरुद्भ्याम्' इत्येव वार्त्तिकस्वरूपम् । तत्रास्य मतेन 'मरुत्तः' शब्दो मध्योदात्तः । मरुच्छब्दात् 'मृग्रोरुतिः' ( १।९४ ) इत्युणादिसूत्रेण उतिप्रत्ययेऽन्तोदात्ते तप्प्रत्ययान्तस्य मध्योदातत्वं सिद्धयति ।

यद्यप्यस्य वार्त्तिकस्य स्थाने हरदत्तेन 'तन्पर्वमरुद्भ्याम्' इति दर्शयित्वाऽऽद्युदात्तोऽयं मरुत्तशब्द इत्युक्तम्, तथाप्यस्य शब्दस्य मध्योदात्तत्वात् तन्नोचितम् । यद्यप्यैतरेयब्राह्मणे 'मरुतः परिवेष्टारो मरुत्तस्यावसनगृहे' इत्यत्र स्वररहित एव पाठः, तथाप्येकश्रुत्या तथात्वे न दोषावहत्वम् 'उपसर्गसंज्ञायां हि मरुच्छब्दस्योपसंख्यानम्' इति वार्त्तिकेन अधिकारबलाद् निपातसंज्ञया बाधो भवति । ततः सत्याम् उपसर्गसंज्ञायाम् 'उपसर्गश्चाभिवर्जम्' ( ८१ ) इति फिट्सूत्रेण अजुपसर्गादित्युपसर्गाभावेऽपि तकारे प्रातिपदिकान्तोदात्तप्रतिपादने तप्प्रत्ययं प्रति मध्योदात्तत्वं पर्यवसितं ज्ञातव्यम् । तनि कृते तु फलभेदः स्यात् ।

रत्नकारमतेन[2] निपातत्वमूलकमाद्युदात्तत्वं दुर्वारम् । यद्यप्यस्योपसर्गसंज्ञा विधीयते, तथाप्युपसर्गेऽपि निपात एव । तस्मात् तन्पर्वमरुद्भ्याम् इत्येव वार्त्तिकस्वरूपं बोद्धव्यम् ।

भाष्ये[3] 'पर्वमरुद्भ्यां तप् वक्तव्यः' इति वार्त्तिकस्वरूपम् । तेन 'मरुत्तः' इत्यत्राद्युदात्तत्वम् उपपद्यते ।

काशिकाकारेण[4] तु 'परममरुद्भ्यां तन् वक्तव्यः' इति वार्त्तिकं पठितम् ।

---

२. मनोरमायाम् 'तप्पर्व०' इति वार्त्तिके ४८३–४८४ तमपृष्ठयोः ।

२. शब्दरत्ने 'तप्पर्व०' इति वार्त्तिके ४८३–४८४ तमपृष्ठयोः ।

३. महाभाष्ये 'तप्पर्व०' इति वार्त्तिके ५९६ तमे पृष्ठे ।

४. काशिकायाम् 'तप्पर्व०' इति वार्त्तिके २२८ तमे पृष्ठे ।

  

पदमञ्जरीकारमतेन[1] 'तृतीयाकर्माणि' (६।२।४८) इत्यनेन प्राप्तप्रकृतिस्वरम्, 'मृग्रोरुतिः' (१।६४) उणादिसूत्रेण उतिप्रत्यये प्राप्तप्रत्ययस्वरं च प्रबाध्य 'उपसर्गश्चाभिवर्जम्' (८१) इत्याद्युदात्तमेव।

प्रक्रियाकौमुद्याम्[2] 'तप्पर्वं०' इति वार्त्तिकस्वीकरणेन मध्योदात्तं स्वीकृतम्। नागेशेनापि[3] पित्पाठं मत्वा मध्योदात्तमेवाङ्गीकृतम्। 'मरुद्भिर्दत्तौ मरुत्तः' इत्यत्रापि मध्योदात्तमेवेति प्रतिपादितम्। नागेशेन केचित्तु इति मतोपस्थापनद्वारा आद्युदात्तत्वम् अपि प्रदर्शितम्। मध्योदात्तपाठदर्शनं तुच्छान्दसम् वेति समाहितम्।

समीक्षात्मकदृष्ट्यात्र विचारे पक्षद्वये दीक्षितमतमेव युक्तम्। यतो हि भाष्ये 'तप्' इत्येवोपात्तं तेन मध्योदात्त एव। यद्यपि क्वचित् पुस्तके भाष्ये तन् पाठोऽपि दृष्यते। किन्तु प्रक्रियाकारादीनापि पित्पाठ एव स्वीकृतः। नागेशेन केचित्तु इति दृष्ट्या आद्युदात्तत्वपक्षस्य स्वीकृतिदानेऽपि स्वमतेन पित्पाठं मत्वा नित् पाठस्यापसिद्धान्त एव दर्शितः।

हरदत्तादिमतेन तु मध्योदात्तपाठस्य च्छान्दसत्वात् समाधानं तु नोचितं भाति। छान्दसत्वात् समाधानं त्वगतिकगतिकम्। यथा छान्दसत्वाद् मध्योदात्तत्वमुच्यते, तथैवाद्युदात्तत्वमपि वक्तुं शक्यते। वस्तुतः 'पर्वमरुद्भ्यां तप्-तन् वा' इति वार्तिकस्वीकारे तूभयविधपाठस्य साधुत्वमुचितमिति विदुषां चर्चाविषयः।

## यणः प्रतिषेधो वाच्यः' इति वार्त्तिकविचारः

१—भट्टोजिदीक्षतमतेन कार्यकालपक्षेऽन्तरङ्गपरिभाषायाः, त्रिपाद्यां प्रवृत्तिप्रदर्शनम्।

२—शब्दरत्नकारमतेन कार्यकालपक्षेऽपि त्रिपाद्यामअन्तरङ्गपरिभाषाया अप्रवृत्तिनिदर्शनम्।

३—कार्यकालपक्षेऽपि अन्तरङ्गपरिभाषाया अप्रवृत्तिनिदर्शने वैयाकरणानां विचारदानम्।

---

१. पदमञ्जर्याम् 'तप्पर्वं०' इति वार्त्तिके २२८ तमे पृष्ठे।
२. प्रक्रियाकौमुद्याम् 'तप्पर्वं' इति वार्त्तिके ८९५ तमे पृष्ठे।
३. उद्योते 'बहुलं छन्दसि' इति सूत्रे ५९६ तमे पृष्ठे।

  

४—युक्तायुक्तत्वसमीक्षणम् ।

सुद्ध्युपास्यः इत्यत्र 'सुद्ध् य्उपास्यः' इत्यवस्थायां 'संयोगान्तस्य लोपः' ( ८।२।२३ ) इत्यनेन यलोपे प्राप्ते 'यणः प्रतिषेधो वाच्यः' इतिवार्तिकेन लोपो निषिध्यते ।

इदं वार्तिकं वाचनिकम् । तत्र संयोगान्तसूत्रे 'झलो झलि' ( ८।२।२४ ) इति सूत्रतो झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोप इति सूत्रार्थे 'सुद्ध्य् उपास्यः' इत्यत्र यकारस्य झल्त्वाभावेन लोपाप्रवृत्तौ 'यणः प्रतिषेधो वाच्यः' इति वार्त्तिकं व्यर्थम् । अथवा कार्यकालपक्षे 'बहिरङ्गलक्षणाद्वा' इति दीक्षितस्य[1] सम्मतिः ।

रत्नकारनयेन[2] 'बहिरङ्गलक्षणाद्वा' इति समाधानं न युक्तम् । कार्यकालपक्षेऽपि बहिरङ्गपरिभाषायास्त्रिपाद्यामप्रवृत्तिरेव । अत एव 'खरवसानयोर्विसर्जनीयः' ( ८।३।१५ ) इति सूत्रे भाष्ये 'नार्कुटः' इत्यादौ विसर्गापत्तिमाशङ्क्य, 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनया परिभाषयाऽन्तरङ्गे विसर्गे कर्तव्ये बहिरङ्गायाः वृद्धेरसिद्धत्वान्न विसर्गः, इति समाधानान्तरं 'अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वाद्वा' इत्युक्तम् । तेन कार्यकालपक्षेऽपि बहिरङ्गपरिभाषाया अप्रवर्तनमेव लक्ष्यते ।

भैरवीकारेण[3] भावप्रकाशकारेण[4] च रत्नकासमर्थितमतमेवानुमोदितम् । हरिदीक्षिततः पूर्वं मनोरमाखण्डनेऽपि[5] इत्थमेव व्याख्यानमुपलभ्यते ।

---

१. प्रौढमनोरमायाम् 'यणः प्रति०' इति वार्तिके १८५–१८६ तमपृष्ठयोः ।
२. शब्दरत्ने 'यणः प्रति०' इति वार्तिके १८५–१८६ तमयोः पृष्टयोः ।
३. भैरव्याम् 'यणः प्रति०' इति वार्त्तिके १८६ तमे पृष्ठे ।
४. भावप्रकाशे 'यणः प्रति० 'इति वार्त्तिके १८६ तमे पृष्ठे 'द्वयोरेवोल्लेख उचितः' इत्युक्त्या प्रतिपादितम् ।
५. मनोरमाखण्डने 'अन्तरङ्गे द्वित्वे बहिरङ्गस्य यणोः असिद्धत्वेन त्रैपादिकेऽन्तङ्गे बहिरङ्गपरिभाषा न प्रवर्तते इति विसर्जनीयसूत्रे भाष्यकैयटयोर्व्यवस्थापितत्वादित्युक्तम् । तन्न, नार्कुट इत्यादौ विसर्गनिवृत्तेर्बहिरङ्गपरिभाषा निराकरणपूर्वकं वचनेनैव सिद्धिरिति पाक्षिकभाष्यार्थस्य कैयटेन करणात्तत्पक्षेणास्य ग्रन्थस्योपपत्तयेत्रैपादिक इत्यस्य क्वाचित्कत्रैपादिकपरत्वेन बहिरङ्गत्वेन यणः प्रतिषेध इत्यस्य व्याख्यानस्यसुवचत्वादिति ।

  

वस्तुतस्तु कार्यकालपक्षे बहिरङ्गपरिभाषायास्त्रिपाद्यां प्रवृत्तिर्भवत्येव। अत एव 'रदाभ्यां निष्ठातो नः[1] पूर्वस्य च दः' (८।२।४२) इति भाष्ये 'कार्तिः' इत्यत्र नत्वाभावाय 'वृद्धिनिमित्तात् प्रतिषेध' इति वार्त्तिकं बहिरङ्गपरिभाषया प्रत्याख्यातम्। 'बहिरङ्गा वृद्धिः, अन्तरङ्गं नत्वम्' इत्युक्तं भाष्ये। त्रिपाद्यां तस्याप्रवृत्तौ तु रदाभ्यामिति नत्वस्यान्तरङ्गत्वाभावेन भाष्यासंगतिः स्यात्। तस्माद् बहिरङ्गलक्षणत्वाद्वेत्यस्य फलितार्थकथनं 'यणः प्रतिषेधो वाच्यः' इति वार्त्तिकम् 'अयुक्तोऽयं परिहारो बहिरङ्गलक्षणत्वाद्वा' इति 'खरवसानयोः०' (८।३।१५) इति सूत्रस्थभाष्यासंगतिस्तु न शङ्क्या। तत्रत्य भाष्यं तु लक्षणैकचक्षुषामनुरोधे न। अत एव 'लक्ष्यवशात् क्वचिद् आनुमानिकेनापि प्रत्यक्षबाधइत्यभिमानः' इति नागेशेन[2] व्याख्यातम् किन्तु सत्यपि बहिरङ्गपरिभाषाया आनुमानिकत्वे, लक्ष्याऽनुरोधेन सैवोचिता। अतः कैयटेन[3] लक्ष्यानुरोधात् त्रिपाद्यामस्याः प्रवृत्तिः स्वीकृता। सत्यपि लक्ष्यलक्षणयोर्व्याकरणे सर्वत्र लक्ष्यस्यैव प्राधान्यम्। आचार्या हि लक्ष्यैकचक्षुष्काः, न लक्षणैकचक्षुष्काः। अत एव काशिका[4]-न्यास[5]-पदमञ्जर्यादिषु[6] चास्य पक्षस्य समर्थनम्। तेन दीक्षितमतमेव युक्तम्।

---

१. भाष्ये 'रदाभ्याम्०' इति सूत्रे ३९६—३९७ तमयोः पृष्ठयोः।
२. 'खरवसानयोः' इति सूत्रे उद्योते ४३९ तमे पृष्ठे।
३. खरवसानयो०:' इति सूत्रे प्रदीपे ४३९ तमे पृष्ठे 'यदा तु लक्ष्यवशाद्…… युक्त एव परिहारो बहिरङ्गलक्षणत्वादिति।'
४. काशिकायाम् 'यणः प्रति०' इति वार्त्तिके ३८३ तमे पृष्ठे 'दध्यत्र मध्वत्र इत्यत्र तु यणादेशस्य बहिरङ्ग………संयोगान्तलोपो न भवति।'
५. न्यासे 'यणः प्रति०' इति वार्त्तिके ३८४ तमे पृष्ठे 'अथ दध्यत्र मध्वत्रेत्यत्र संयोगान्त………अन्तरङ्गत्वम्'।
६. पदमञ्जर्याम् 'यणः प्रति०' इति वार्त्तिके ३८४ तमे।

# प्रौढमनोरमाशब्दरत्नयोर्विचारभेदानां युक्ता-युक्तत्वसमीक्षा

## उपपदपरिभाषाऽन्तरङ्गमूलिका नवेत्यत्र विचारः

१—'सह युक्ते०' इति सूत्रार्थ-प्रदर्शनम् ।

२—भट्टोजिदीक्षितमतेन 'उपपद०' इति परिभाषाऽन्तरङ्गमूलिकेति निदर्शनम् ।

३—शब्दरत्नकारमतेन 'उपपद०' इति परिभाषा नान्तरङ्गमूलिकेति प्रदर्शनम् ।

४—अन्तरङ्गमूलिकेति 'उपपद०' परिभाषा इति पक्षमादाय वैयाकरणानां विचारः ।

५—नान्तरङ्गमूलिका 'उपपद०' परिभाषा इति पक्षे शब्दशास्त्रज्ञानां विचारदानप्रदर्शनम् ।

६—अपाणिनीयव्याकरणे अस्य विषये विचारनिदर्शनम् ।

७—युक्तायुक्तत्वसमीक्षणम् ।

'सहयुक्तेऽप्रधाने' (२।३।१९) इति पदत्रयात्मकं सूत्रम् । सह इत्यव्ययपदम् । 'अप्रधाने' इति सप्तम्यन्तम् । युक्ते इति सप्तम्यन्तम् । 'कर्तृकरणयोस्तृतीया (२।३।१८) इत्यतस्तृतीया चाऽनुवर्तते । 'विभक्तिश्च' (१।४।१०४) इत्यनेन तृतीयार्थे समागतस्य सुप्प्रत्ययस्य विभक्तिसंज्ञा च । सहशब्दोऽत्र सहार्थपरः । तेनाप्रधाने कर्तरि सहार्थे युक्ते तृतीयाविभक्तिर्भवतीति सूत्रार्थः सम्पद्यते ।

अत्र भट्टोजिदीक्षिताऽनुसारेण[1] 'वृद्धो यूना०' (१।२।६५) इति निर्देशेन सह-शब्दं विनाऽपि तृतीयासिद्धौ सूत्रे सह-ग्रहणं नावश्यकम् । एवम् 'अप्रधाने'

१. प्रौढमनोरमायाम् 'सह युक्ते०' इति सूत्रे ८९४–९८ तमपृष्ठपर्यन्तम् ।

इत्यपि व्यर्थम् । 'पुत्रेण सहागतः पिता' इत्यत्रान्तरङ्गपरिभाषाबलेन तृतीयां बाधित्वा प्रथमा भविष्यति । एवं 'पुत्रेण सह पितुरागमनम्' इत्यत्र 'उपपद०' इति परिभाषया तृतीयां प्रबाध्य षष्ठी भविष्यति । एतापता सूत्रमिदं व्यर्थम् । एवं चेतया दृशा 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति परिभाषाऽन्तरङ्गमूलिकैव सिद्धयति ।

अत्र विचारप्रसङ्गे शब्दरत्नकारमतेनापि[1] सूत्रेऽप्रधानग्रहणमनावश्यकम् । नित्रस्य मतेन 'उपपद०' इति परिभाषया बलेनैवोभयस्थले तृतीया वारणं भवति, न तु भट्टोजिदीक्षितप्रतिपादितेनान्तरङ्गबलेन । तथाऽन्तरङ्गपरिभाषामूलिकैवोपपदविभक्तिरिति कथनमपि न हृदयावर्जकम् । अस्याः परिभाषाया वाचनिकत्वमेव प्रामाणिकम् । कारकविभक्तेः क्रियानिमित्तकत्वेनान्तरङ्गत्व-स्वीकारे सम्बन्धस्य क्रियाकारकभावमूलकत्वेन तत्प्रयुक्तं कार्यं बहिरङ्गम् इति स्वीकारे पुत्रेऽपि तृतीया न स्यात् ।

प्रधानाप्रधानमूलिकापि नास्तीयं परिभाषा । अप्रधानक्रियायामपि कारकान्वयो भवत्येव । अत 'उपपद०' इति परिभाषा निरवग्रहैव ।

तत्र भट्टोजिदीक्षितोक्तपक्षस्य बीजं पदमञ्जर्याम्[2], न्यासे[3], प्रदीपे[4] च प्राप्यते तत्त्वबोधिनीकारेण[5] तदेवानुमोदितम् ।

किन्तु प्रकृतसूत्रे भाष्ये वचनरूपेणैव[6] 'उपपदविभक्तेः कारकविभक्ति बलीयसी' इति परिभाषा वस्तुतः पठिता अत एव नागेशेन[7], भैरवीकारेण[8] च शब्दरत्नकारस्य हरिदीक्षितस्य मतमेव समर्थितम् ।

---

१. शब्दरत्ने 'सह युक्ते०' इति सूत्रे ८९७–८९८ तमयोः पृष्ठयोः ।
२. पदमञ्जर्याम् 'सह युक्ते०' इति सूत्रे १७५–१७७ तमपृष्ठपर्यन्तम् ।
३. न्यासे 'सह युक्ते०' इति सूत्रे १७५–१७७ तमपृष्ठपर्यन्तम् ।
४. प्रदीपे 'सह युक्ते०' इति सूत्रे ५०२ तमे पृष्ठे ।
५. तत्त्वबोधिन्याम् 'सह युक्ते०' इति सूत्रे १७४–१७५ तमपृष्ठयोः ।
६. भाष्ये 'सह युक्ते०' इति सूत्रे ५०२ तमे पृष्ठे ।
७. लघुशब्देन्दुशेखरे 'सह युक्ते०' इति सूत्रे ४८२ तमे पृष्ठे ।
८. भैरव्याम् 'सह युक्ते०' इति सूत्रे ८९७–८९८ तमयोः पृष्ठयोः ।

सरस्वतीकण्ठाभरणे[1], चान्द्रव्याकरणे[2], हैमव्याकरणे[3] चाप्रधानग्रहणं नास्ति। सारस्वते[4] तु तद् दृश्यते। किन्तु नास्मिन् विषये तत्र किमपि प्रतिपादितम्।

गुणदोषविवेचनात्मकदृशाऽस्याः परिभाषाया वाचनिकत्वमेव न्याय्यम्। भाष्ये नास्याः क्वाप्यन्तरङ्गमूलकत्वं लभ्यते। किन्तु वचनरूपेणैव पठितत्वं दृश्यते। यदि 'उपपद०' इति परिभाषाऽन्तरङ्गमूलिकाऽभविष्यत्, तदाऽन्तरङ्ग-बहिरङ्गत्वस्थल एवेयं प्रवर्तेत। किन्तु 'तत्र च दीयते' (५।१।९६) इति सूत्रभाष्येऽनन्तरङ्गाऽप्यधिकरणसप्तमी 'यस्य च भावेन भावलक्षणम्' (२।३।३७) इति सप्तम्यपेक्षया 'उपपद०' इति परिभाषाद्वारा बलवत्तरा ध्वनिता। कैयटेन[5] तत्र स्पष्टमुपपादितं च अतो नास्या अन्तरङ्गत्वमूलकत्वमिति सुधियो विभावयन्तु।

---

## अकृतव्यूहपरिभाषाविचारः

१—'अकृत०' परिभाषा अनित्येति भट्टोजिदीक्षितस्य पक्षः।

२—परिभाषाया अनित्यत्वे वैयाकरणस्य विचारः।

३—'अकृत०' परिभाषा नास्तीति शब्दरत्नकारस्य पक्षः।

४—'अकृत०' परिभाषा नास्तीति पक्षमादाय वैयाकरणानां विचार-निदर्शनम्।

५—युक्तायुक्तत्व-समीक्षणम्।

---

१. कण्ठाभरणे २।४।२३९ इति सूत्रे।

२. चान्द्रे १७४ तमे पृष्ठे।

३. हैमव्याकरणे २०९ तमे पृष्ठे।

४. सारस्वते २२० तमे पृष्ठे।

५. प्रदीपे 'तत्र च दीयते' इति सूत्रे ५२७ तमे पृष्ठे।

न कृतो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैः। एतत्फलितार्थमेव 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति। मानं चात्र 'समर्थानां प्रथमाद्वा' (४।१।८२) इति सूत्रे समर्थग्रहणमेव। अत एव 'पपुषः', 'तस्थुषः' इत्यत्र पूर्वं कृतोऽपीडागम एतत्—परिभाषया निवर्तते। 'पपा वस् अस्' इति स्थिते इट् च प्राप्नोति सम्प्रसारणं च। तत्र प्रतिपदविधानेन सम्प्रसारणस्य बलवत्वेन बलादित्वाभावेन इड् न भवति। एतत् परकं व्याख्यानं कैयटेनापि[1] कृतम्।

इयं परिभाषाऽनित्येति एकः पक्षः, परिभाषा नास्तीत्यपरपक्षः। तत्रानित्यत्वे 'न बहुव्रीहौ' (१।१।२९) इति सूत्रमेव मानम्। अन्यथा परिभाषाया नित्यत्वे त्वकं पिता यस्य', अहकं पिता अस्य' इहि विग्रहे' युस्मद्+सु+पितृसु', 'अस्मद्+सु+पितृ+सु' इत्यवस्थायां सर्वनामसंज्ञासत्त्वेऽनुपसर्जनत्वस्य विनाशोन्मुखत्वे तत्प्रयुक्तकार्यस्य परिभाषया वारणे 'त्वत्कपितृक,' इति रूप सिद्धौ सूत्रमिदं व्यर्थमेव। यद्यपि—

अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गमुक्तसंशयम्।
त्वकत्पितृक इत्येव नैव भवितव्यमिति॥

इत्यनेन भाष्ये[2] प्रत्याख्यातमिदं सूत्रम्। तथापि सूत्रसत्त्वेऽस्याः परिभाषायाः अनित्यत्वे प्रमाणं बोद्धव्यम्। सूत्राभावे तु "छ्वोः शूडनुनासिके[3] च" (६।४।१९) इति सूत्रे तुग्—विशिष्टनिर्देश एव प्रमाणम्। परिभाषाया नित्यत्वे परिभाषयैव तुग्निवृत्तिसिद्धौ "छ्वोः शूड" (६।४।१९) इति सूत्रे "अवश्यमत्र तुगभावार्थो यत्नः कार्योऽन्तरङ्गत्वाद्धितुक् प्राप्नोति" इति भाष्यवचनस्यासंगतिः स्यात्- अत एव ",अति+भवत्—अम्" इत्यलौकिकविग्रहवाक्ये अकच् प्रत्यय "अतिभवकान्' इति सिद्ध्यति। अस्य पक्षस्य समर्थनं मनोरमाकारेण[4] तत्त्वबोधिनी।

---

१. प्रदीपे 'समर्थानाम्०' इति सूत्रे तमे पृष्ठे।
२. महाभाष्ये 'न बहुव्रीहौ' इति सूत्रे २१७ तमे पृष्ठे।
३. महाभाष्ये 'छ्वोः' शूड' इति सूत्रे ९०३ तमे पृष्ठे।
४. प्रौढमनोरमायाम् 'अकृतव्यूह०' इति परिभाषायाम् ४४४—४४८ तमं पृष्ठपर्यन्तम्।

कारेण[1] च कृतम्। इत्थं परिभाषाया बीजं प्रदीपे सत्त्वेऽपि, अनित्यत्वसाधनं तु दीक्षितस्य स्वकीयोद्‌भावनम्।

परिभाषाया अभाववादकास्त्वस्याः परिभाषाया भाष्येऽनुक्तत्वेन 'छ्वोः शूड्०' (६।४।१९) इति सूत्रे प्रच्छ इत्यादौ अन्तरङ्गत्वेन जातस्य तुगूनिवृत्तये सतुग्-निर्देशं कुर्वन्ति। तेनान्त्यस्य सादेशो न भवति। परिभाषासत्त्वे तु सादेशो न निमित्तविनाशसत्त्वे पूर्वं तुकोऽप्रवृत्तौ षतुक् निर्देशो व्यर्थ एव। "वान्छ" धातोः क्विपि, तत्र सादेशाभावाय सतुग्निर्देश इति वक्तुं शक्यते, किन्तु 'यथालक्ष-णमप्रयुक्ते' इत्यादिनिर्देशन तादृशप्रयोगानामनभिधानेन तथाविधसमाधानदान-स्यैवाकिञ्चित् करत्वम्। 'समर्थानां प्रथमाद्वा' (४।१।८२) इति सूत्रस्थं समर्थ-ग्रहणं तु विषुणः' इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथा भ्रमवारणाय 'निमित्तं विनाशो०' इति न्यायसिद्धार्थानुवाद एव। एतदतिरिक्तम् 'आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्ययापत्तिश्च' इति वार्त्तिके प्रकृतिप्रत्ययापत्तिवचनं च परिभाषाया अभावे ज्ञापकम्। अन्यथा कंसवधमाचष्टे 'कंसघातयति' इत्यादौ कृल्लुकि, अनया परिभाषया पूर्वमादेशस्याप्रवृत्तौ प्रकृतिप्रत्ययवचनं व्यर्थमेव स्यात्। एवं पुष्ययोगं जानाति पुष्येण योजयति' इत्यस्य सिद्ध्यर्थं 'नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिज् वक्तव्यः, कृल्लुक् प्रकृतिवच्चकारकम्' इत्यत्र भाष्यकारेण कृत्प्रत्ययानुवृत्तिः कृता। तत्र कृत्प्रत्ययानुवृत्तिः परिभाषाया अभावे ज्ञापकम्। अत्र कुत्वे सति घित्वस्य विनाशः स्यात्, तत्र प्रत्ययलोपस्य बाधनं 'न लुमताङ्-गस्य' (१।१।६२) इत्यनेन भवति। तस्मात् परिभाषासत्त्वे' पुष्ययोगः' इति न निष्पद्येत। अस्य मतस्य समर्थनं रत्नकारेण,[2] नागेशेन,[3] भैरवीकारेण,[4] भावप्रकाशकारेण,[5] कौमुद्यादाधिमथटीकाकारेण[6] च कृतम्। अयं रत्नकारस्य स्वोपज्ञः पक्षः।

---

१. तत्त्वबोधिन्याम् 'अकृतव्यूह०' इति परिभाषायाम् ६२ तमे पृष्ठे।

२. शब्दरत्ने 'अकृतव्यूह०' परिभाषायाम् ४४५–४३९ तमपृष्ठपर्यन्तम्।

३. लघुशब्देन्दुशेखरे 'अकृतव्यूह०' परिभाषायाम् २१९ तमपृष्ठे।

४. भैरव्याम् 'अकृतव्यूह०' परिभाषायाम् ४४५–४४९ तमपृष्ठपर्यन्तम्।

५. भावप्रकाशे 'अकृतव्यूह०' परिभाषायाम् ४४५–४४९ तमपृष्ठपर्यन्तम्।

६. दाधिमथटीकायाम् 'अकृतव्यूह०' परिभाषायाम् ६२ तमे पृष्ठे।

अत्र मतद्वये मनोरमाकारादिभिः समर्थितः पक्ष एव युक्तः। यद्यप्यस्याः परिभाषाया भाष्ये उत्थानं नास्ति, इति चेत् सत्यम्, तथापि पाणिनीयव्याकरण-निकाये भाष्ये नास्ति, अतोऽनभिधानमित्तेतादृशनियमो नास्ति। किन्तु 'यथोत्तरं मुनीनां प्रामाण्यम्' 'आकरविरोधः' इत्येव नियमः। तेन भाष्येऽस्याः परि-भाषाया विरोधाभावेन परिभाषास्वीकारे न क्षतिः। अन्यथा भाष्याऽनुक्तस्य समस्त प्रक्रियाग्रन्थस्य व्याख्यानस्याप्रामाणिकताप्रसङ्गः। अतोऽभावोत्पाद-कसमस्तज्ञापकप्रमाणानां परिभाषाया अनित्यत्व एव तात्पर्यम्। एवं 'ज्ञापक-सिद्धं न सर्वत्र' इति परिभाषाज्ञापकविषयेऽपि प्रवर्तते। सप्तद्वीपा वसुमती' इत्युक्तम् भाष्यकारेण पस्पशाह्निके, तेन भाष्याऽनुक्तानामपि प्रामाणिकत्वं सूचितमेव। तस्मात् प्रकृतपरिभाषाया अनित्यत्वपक्ष एवोचितः।

## असवर्णग्रहणविचारः (वार्णादाङ्गंबलीयः' इति परिभाषा-ज्ञापने विचारः)

१—'अभ्यासस्यासवर्णे इति सूत्रार्थप्रदर्शनम्।

२—भट्टोजिदीक्षितमतेन 'वार्णदाङ्गं०' इति परिभाषायाम् असवर्णग्रहणं ज्ञापकम्।

३—शब्दरत्नकारमतेन 'वार्णादाङ्गं०' इति परिभाषायाम् 'अभ्यासस्यासवर्णे इति सम्पूर्णं सूत्रं ज्ञापकम्।

४—असवर्णग्रहणस्य वार्णादाङ्गं०' परिभाषायां ज्ञापकत्वे वैयाकरणस्य सम्मतिः।

५—सम्पूर्णसूत्रस्य 'वार्णादाङ्गं०' इति परिभाषायां ज्ञापकत्वे वैयाकरणस्य विचारदानम्।

६—युक्तायुक्तत्वसमीक्षणम्।

'अभ्यासस्यासवर्णे (६।४।७८) इति सूत्रे 'अचि श्नुधातुभ्रुवां य्वोरियङ्-वङौ' (६।४।७७) इति सूत्रतः 'य्वोः' 'अचि' 'इयङुवङौ' इति पदमनु-

वर्तते। 'येन विधिस्तदन्तस्य' (१।१।७२) इत्यस्मात् तदन्तपदमुपतिष्ठते। परशब्दश्चाक्षिप्यते। तस्मात् असवर्णेऽचि परतोऽभ्यासस्येवर्णोवर्णान्तस्य इयङ् उवङ्ग, इत्यादेशो जायेते' इति सूत्रार्थः।

तत्र 'ऋ' इति धातोर्लटि, तिपि, शपः श्लौ, द्वित्वे, 'ऋ + ऋ + ति' इत्यावस्थायाम् 'अर्तिपिपर्त्योश्च' इति इत्वे रपरत्वे हलादिशेषे 'इ + ऋ + ति' इति स्थितौ 'अभ्यासस्यासवर्णे' (६।४।७८) इति इयङादेशे, गुणे 'इयर्ति' इति रूपं निष्पद्यते। यदि अभ्यासस्यासवर्णे' (६।४।७८) इति सूत्रेऽसवर्ण-ग्रहणं न स्यात्, तदा 'इयर्ति' इत्यत्र इयङादेशो न भवेत्, तदर्थं असवर्णग्रहणम्। एवम् असवर्णग्रहणस्य फलसत्त्वेऽपि नैकमुदाहरणं योगारम्भं प्रयोजयति' इति सिद्धान्तेन 'अभ्यासस्यातौ' इति न्यासेनैवेष्टसिद्धौ, असवर्णग्रहणं 'वार्णादाङ्गं बलीयः' इत्यस्यां परिभाषायां ज्ञापकमिति भट्टोजिदीक्षिताशयः[२]।

शब्दरत्नकारमतेन[१] 'इयर्ति' इति प्रयोगस्य सिद्धिस्तु 'उः' इति सूत्रन्यास-करणेनैव स्यात्। तथाहि :'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' (६।४।७७) इत्यतो य्वोरित्यनुवर्तते। 'इणो यण्' (६।४।८१) सूत्रसाहचर्येण व्याख्यानात् 'ऋ' इति धातोर्ग्रहणम्। तत इयङि इयर्ति' इति सिद्धौ अभ्यासस्यासवर्णे' (६।४।७८) इति सूत्रं 'वार्णादाङ्गं बलीयः' इति परिभाषायां ज्ञापकम्।

तत्त्वबोधिनीकारेण[३] मनोरमाकास्य समर्थनं कृतम्। नागेशेन[४] च शब्देन्दुशेखरे 'अत्र च ज्ञापकम् इदमेव' असवर्ण 'ग्रहणमिति परिभाषाप्रकरणेषु' इत्युक्तम्। तेन मनोरमाकारमतस्यैव पुष्टिर्जायते।

काशिकाकारेण[५] न्यासकारेण[६] च 'इयेष' 'उवोष' 'इयर्ति' इति फलमुदा-हृतम्। तत्रासवर्णग्रहणस्य फलम् इयुत, ईयुः, ऊवतुः, ऊवुः, इत्यत्र कित्वाद्

---

१. प्रौढमनोरमायाम् 'अभ्यासस्यासवर्णे इति सूत्रे।

२. शब्दरत्ने 'अभ्यासस्यासवर्णे इति सूत्रे।

३. तत्त्वबोधिन्याम् 'अभ्यासस्या०' इति सूत्रे ४१८ तमे पृष्ठे।

४. बृहच्छब्देन्दुशेखरे 'अभ्यासस्या' इति सूत्रे १६६४ तमे पृष्ठे।

५. काशिकायाम् 'अभ्यासस्या०' इति सूत्रे ४३२ तमे पृष्ठे।

६. न्यासे 'अभ्यासस्या०' इति सूत्रे ४३२ तमे पृष्ठे।

गुणाभावेनासवर्णाभ.वाद् नाभ्यासस्येयङु०वङो'' इत्युदाहृतम् । 'वार्णादाङ्गम्' इत्यस्य चर्चा तत्र नास्ति ।

नागेशेन परिभाषेन्दुशेखरे[1] पूर्वं परिभाषायाम् 'असवर्णग्रहणस्य ज्ञापकतां प्रदर्श्य, ततः 'परेतु' इत्युक्त्या सम्पूर्णसूत्रस्यैव ज्ञापकतोक्ता । 'यदयमभ्यासस्यासवर्णे इत्यसवर्णग्रहणं करोति' इति भाष्योक्त्याऽसवर्णग्रहणमात्रस्यैव ज्ञापकत्वसत्त्वेऽपि 'नह्यन्तरेण गुणवृद्धि असवर्णपराभ्यासो भवति' इत्युक्त्या सम्पूर्णं सूत्रस्यैव ज्ञापकत्वम् । एवं 'नैतदस्ति ज्ञापकमत्यर्थमेतत् स्यात्' इत्यनेन सूत्रस्य सार्थक्यं च दर्शितम् । असवर्णग्रहणस्य यदि ज्ञापकत्वं भवेच्चेत्, तद् व्यावर्त्यं प्रदर्शनेन तत्सार्थक्यमेव प्रदर्शितं स्यात्' एतत् परकं व्याख्यातम् ।

गुणदोषविचारदृशा तु भट्टोजिदीक्षितमतमेव युक्तम् । यद्यपि गुणवृद्धि विनाऽभ्यासस्यासवर्णत्वं सिद्ध्यतीत्याभ्यासस्येयङ्वङौ न भवेताम् । तस्माद् असवर्णग्रहणवद् अभ्यासस्य ग्रहणमिति व्यर्थं सत् सम्पूर्णसूत्रस्यैव 'वार्णादाङ्गं बलीयः' इति परिभाषायां ज्ञापकत्वमुक्तम् । अन्यथा 'उः' इति न्यासेनेष्टसिद्धिर्भवेदिति रत्नकारेण प्रदर्शितम्, तथापि 'उः' इति न्यासे 'इणो यण्' (६।४।८१) इति सूत्र—साहचर्येण व्याख्यानात् 'ऋ' धातोर्ग्रहणेऽपि अभ्यासस्य' इत्यर्थ—लाभो न स्यात् । 'उः' इति न्यासेऽप्यभ्यासार्थलाभाय अभ्यासग्रहणस्य सार्थकत्वेऽसवर्णस्वरूपं गुणवृद्धी विना नोत्पद्येत । तत्रासवर्णग्रहणेन 'वार्णादाङ्गं बलीयः' इति परिभाषा ज्ञाप्यते । ज्ञापिता सती दीर्घादिकार्यं प्रबाध्य पूर्वं गुणवृद्धी प्रवर्तते । तस्माद् अभ्यासस्येयङ् सिद्धयति । 'दाश्वान् साह्वान् मीढ्वांश्च' ( ६।१।१२ ) इति सूत्रे' न ह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवति' इति भाष्योक्तिमादाय सम्पूर्णसूत्रस्य ज्ञापकत्वप्रदर्शनं नोचितम् । 'भाष्येऽसवर्णग्रहणस्य[2] परिभाषाया ज्ञापकत्वे ज्ञापकत्वप्रकारप्रदर्शनपरकं तद्भाष्यव्याख्यानमिति

१. परिभाषेन्दुशेखरे 'वार्णादाङ्गं०' इति परिभाषायाम् २१४-२१७ तमपृष्ठपर्यन्तम् ।

२. भाष्ये 'दाश्वान्साह्वा०' इति सूत्रे ६८६-६७८ तमपृष्ठयोः ।

बोधव्यम्। 'नैतदस्ति ज्ञापकमत्यर्थमेतत् स्यात्' इति भाष्यं तु न सिद्धान्तोक्तिः अन्यथा 'ननु चोक्तमत्यर्थमेतत् स्यादिति' इति भाष्यकृतपूर्वपक्षस्य 'नैकमुदाहरणमसवर्णग्रहणं प्रयोजयति' इत्युत्तरदानं व्याकुप्येत्। 'असवर्णग्रहणमेव तर्हि ज्ञापकम्' इति भाष्यं च विरुद्धयते। अत एव कैयटेनापि[1] 'अन्यथा अध्यासस्यार्तेः' इति समाहितम्। तेन शब्दरत्नकारोक्तव्याख्यानापेक्षया मनोरमाकारोक्तिरेव युक्तितरा।

---

## क्रुञ्च्-शब्दविचारः

१—भट्टोजिदीक्षितमतेन 'क्रुङ्' इत्यत्र क्रुञ्च्धातोर्नोपधत्वात् नलोपाभावो निपात्यते।

२—शब्दरत्नकारमतेन 'क्रुङ्' इत्यत्र क्रुञ्चधातोर्नोपधत्वात् कुत्वाभावो निपात्यते।

३—'क्रुङ्' इत्यत्र क्रुञ्चधातोर्नोपधत्वे वैयाकरणानां सम्मतिदानम्।

४—'क्रुङ्' इत्यत्र क्रुञ्चधातोर्नोपधत्वे शब्दशास्त्रज्ञानां विचारप्रदर्शनम्।

५—अपाणिनीयव्याकरणे क्रुञ्चधातौ विचारदानम्।

६—युक्तायुक्तत्वसमीक्षणम्।

'ऋत्विग्दधृक्०' (३।२।५९) इत्यस्मिन् सूत्रे चकारबलेन 'स्पृशोऽनुदके क्विन्' (३।२।५८) इति सूत्रतः क्विन् इत्यस्य सम्बन्धो भवति। तेन 'ऋत्विग्दधृग्प्रभृतिभ्यः शब्देभ्यः क्विन् प्रत्ययो भवति' इति सूत्रार्थः।

तत्र क्रुञ्च्-धातोः 'ऋत्विक्०' (३।२।५९) इत्यनेन क्विनि तस्य लोपे निपातनाद् न लोपाभावे संयोगान्तलोपे कुत्वे 'क्रुङ्०' इति सिद्धयति। अनेन 'क्रुञ्च्' - धातुर्नोपध इति मनोरमाशयः[2]।

---

१. प्रदीपे 'दाश्वान्०' इति सूत्रे ६७८ तमे पृष्ठे।

२. मनोरमायां 'ऋत्विक्०' इति सूत्रे ६२९–६३० तमपृष्ठयोः।

शब्दरत्नेऽस्य धातोर्नोपधत्वं सम्मतकारीयधातुवृत्त्यनुसारेण। 'परेश्च घाङ्कयोः' (८।२।२२) इति सूत्रे भाष्ये 'क्रुञ्च्' इत्यत्र कुत्वमाशङ्क्य 'क्रुञ्चामिति' 'ऋत्विग्०' (३।२।५९) इति सूत्रस्थेन 'निपातनात् सिद्धम्' इत्यादिना वार्त्तिकेन कुत्वाभाव उक्तः। तेनायं 'नोपध.' इति लभ्यते। नोपधत्वे तु परसवर्णस्य कुत्वदृष्ट्याऽसिद्धत्वेनानुस्वारे तस्य कुत्वप्राप्तिरेव न पुनर्निपातनपर्य्यन्तानुधावनं भाष्यकारस्य व्यर्थं स्यात्। 'बाधकान्येव निपातनानि' इति परिभाषामाश्रित्य कुत्वभावनिपातनेन 'क्रुङ्' इत्यत्रापि कुत्वं नेति न वक्तव्यम्। सूत्रे कुञ्च् इत्यत्र चकारदर्शनेन चकारस्य योगे कुत्वाभावो निपात्यते। तेन 'क्रुङ्' इत्यादौ तु कुत्वं भवत्येव। इत्थं 'क्रुञ्च्'-धातोर्नोपधत्वे नलोपाभावबोधनं नोचितमिति प्रतिपादितं हरिदीक्षितेन[1]।

काशिका[2] - पदमञ्जरी[3] - प्रक्रियाकौमुदीकारमतेन[4] च नोपध एव 'क्रुञ्च्' धातुः। तेन निपातनसाहचर्येण नलोपाभावोऽपि निपात्यत इति तेषां मतम्।

नागेशेन[5] 'परेश्च घाङ्कयोः' (८।२।२२) इत्यत्रोद्योते 'क्रुञ्च्यात्' इत्यत्र नकारश्रवणेन रत्नकारोक्तव्याख्यानुसारेण नोपधत्वमुक्तम्। किन्तु 'ऋत्विक्०' (३।२।५९) इत्यत्रोद्योते—'क्रुञ्च्' इत्यत्र नलोपाभाव इति परेश्च सूत्रे भाष्ये स्पष्टम्' इत्युक्तम्। एतेन नोपधत्वमप्यङ्गीकृतं नागेशेन। इत्थं नैकः पक्षः समाश्रितस्तेन।

भैरवीकारेण[6] भावप्रकाशकारेण[7] च 'क्रुञ्च्' इत्यस्य नोपधत्वमेवाङ्गीकृतम्। चान्द्रव्याकरणे[8] 'क्रुञ्चेरनुनासिकलोपाभावः' इत्युक्त्या नोपधत्वं स्वीकृतम्।

---

१. शब्दरत्ने 'ऋत्विक्०' इति सूत्रे ६२९–६३० तमपृष्ठयोः।
२. काशिकायाम् 'ऋत्विक्०' इति सूत्रे ५८४ तमे पृष्ठे।
३. पदमञ्जर्याम् 'ऋत्विक्०' इति सूत्रे ५८४ तमे पृष्ठे।
४. प्रक्रियाकौमुद्याम् 'ऋत्विक्०' इति सूत्रे २३८ तमे पृष्ठे।
५. 'ऋत्विक्०' इति सूत्रे उद्योते १५८ तमे पृष्ठे, 'परेश्चघाङ्कयोः इति सूत्रे उद्योते ३८७ तमे पृष्ठे।
६. भैरव्याम् 'ऋत्विक्०' इति सूत्रे ६२९–६३० तमपृष्ठयोः।
७. भावप्रकाशे 'ऋत्विक्०' इति सूत्रे ६२९–६३० तमपृष्ठयोः।
८. चान्द्रे दधृगुष्णिक् कुञ्चः (१।२।४९) ६७ तमे पृष्ठे।

अत्र मतद्वये नकारोपधत्वं यद् रत्नकारेण निगदितं तदेव युक्तम्। नागेशस्य तु कुत्रचिद् ञोपधत्वं कुत्रचिच्च नोपधत्वमिति कथनेन स्ववचनस्यैव विरोधः। अन्येषां नकारोपधत्ववादिनां कथनमपि न युक्तम्, नकारोपधत्वे 'परेश्च घाङ्कयोः (८।२।२२) इति सूत्रे भाष्ये[1] कुत्वमाशङ्क्य निपातनेन यथा तदभावो बोधितः, तथैव नलोपस्याशङ्का तदभावबोधनं वा न कृतम्।

एवं 'क्रुञ्च्' इत्यत्र 'चोः कुः' (८।२।३०) इत्यनेन कुत्वस्य शङ्का प्रदर्शनेनापि ञोपधत्वं सिद्ध्यति, न नोपधत्वम्। नोपधत्वं तु स्वीकर्तुं न युज्यते तथा स्वीकारे तु उपदेशावस्थायां क्रुञ्च्धातोर्नोपधत्वं न स्यात्। इत्थं क्रुञ्च्धातोः क्विनि प्रथमैकवचने सौ, सुलोपे संयोगान्तलोपे च कृते परसवर्णस्यासिद्धत्वेन नकारविशिष्टे 'क्रुन्' इत्यत्र पदान्तत्वात् 'चोः कुः' इति सूत्रस्य प्रवृत्तिरेव न स्यादिति कुत्वस्य प्राप्तिरेव नास्ति। ञोपधत्वे स्वीकृते तु संयोगान्तलोपेन चकारे लुप्तेऽपि नैमित्तिकस्यापायस्य प्रश्न एव नोदेतीति ञकारस्य स्थाने 'चोः कुः' इत्यनेन कुत्वाद् ङकारे सति 'क्रुङ्' इति सिद्ध्यति। क्रुञ्च् इत्यस्य ञोपधत्वादेव आशिषि 'अनिदितां हल्०' इति सूत्रस्याप्रवृत्त्या 'क्रुञ्च्यात्' इत्यत्र ञकारस्य श्रवणम् इति नागेशोक्तिः संगच्छते।

भाष्यविपरीतव्याख्यानस्वीकारे तु नोपधत्वस्यैवौचित्यम्। अत एव क्षीरतरङ्गिण्यां[2] माधवीयधातुवृत्तौ[3] च नोपधत्वसाधनं संगच्छते।

---

## उपेयिवान् इति निपातनविचारः

१—'उपेयिवाननाश्वाननूचानश्च' (३।२।१०९) इति सूत्रेण 'उपेयिवान्' इत्यत्र सवर्णदीर्घाभावः, निपातनाद् वलादिलक्षणस्येटः प्रतिप्रसव इति भट्टोजिदीक्षितमतेन।

---

१. महाभाष्ये 'परेश्च घाङ्कयोः' इति सूत्रे ३८७ तमे पृष्ठे।

२. क्षीरतरङ्गिण्याम् ३८ तमे पृष्ठे 'क्रुञ्चगतौ', 'युजि क्रुञ्चाम्' ३।२।५९ इति निपातनात् नलोपाभावः।

३. माधवीयधातुवृत्तौ ६३—६४ तमयोः 'क्रुन्च, क्रुन्च कौटिल्यापीभावयोः। दन्त्योपधौ।'

१०

२—शब्दरत्नकारमतेन 'उपेयिवान्' इत्यत्र सवर्णदीर्घः, क्रादिनियमेन निपातनात् 'इट्' इति प्रदर्शनम्।

३—'उपेयिवान्' इति प्रयोगमादाय निपातनप्रयुक्तकार्यविषये वैयाकरणानां विचारप्रदर्शनम् ।

४—अपाणिनीयव्याकरणेऽस्य सूत्रस्य स्थानें सूत्रस्वरूपनिदर्शनम् ।

५—युक्तायुक्तत्वसमीक्षणम् ।

६—वस्तुतस्त्वोक्त्या स्वमतप्रदर्शनम् ।

'उपेयिवाननाश्वाननूचातश्च' ( ३।१।१०९ ) इति सूत्रेण 'उपेयिवान्', ,अनाश्वान्', 'अनूचान्' इत्येते शब्दा निपात्यन्ते ।

उपपूर्वकाद् इण्धातोर्लिटि क्वसु-प्रत्यये, अनुन्धलोपे बलादिलक्षण इटिप्राप्तौ 'नेड्वसिकृति' ( ७।२।८ ) इत्यनेन तन्निषेधे, ततो द्वित्वे उप इ + इ + वस्' इत्यवस्थायां क्रादिनियमेन इटि प्राप्ते, सचेट् 'वस्त्रेकाजाद्घसाम्' ( ७।२।६७ ) इति एकाज्विषय एव भविष्यति। किन्तु 'इ + इ' इति द्वित्वावस्थायां नैकाच्त्वप्राप्तिरिति क्रादिनियमप्राप्तस्येटोऽप्रवृत्तिः। ततः 'इणः कित्' इति उणादिसूत्रेणाभ्यासस्य दीर्घे 'उप + ई + इ + वस्' ईति जाते, अकः सवेंण दीर्घः' ( ६ १।१०१ ) इत्यनेन पुनः सवर्णदीर्घः प्राप्तः स चाभ्यासस्य दीर्घविधानेन वार्यते। तदा सर्वथा इडप्राप्तौ 'उपेयिवान्' इति न स्यात्। अतौ निपातनबलेन धातोरिकारस्य 'यणि' बलादिलक्षणेटः प्रतिप्रसवे, विभक्त्यादिकार्यें, 'उपेयिवान्' सिद्धयतीति दीक्षिताभिप्रायः[1] ।

शब्दरत्नकारमतेन[2] तु 'ईयतुः' इत्यादौ दीर्घस्य सावकाशत्वे 'उप + ई + इ + वस्' इत्यत्र सवर्णदीर्घे 'वस्त्रेकाजाद्घसाम्' ( ७।२।६७ ) इति क्रादिनियमविषये एकात्वे एव इति कृत नियमेन इटि। कृतैकादेशस्य निपातनाद् इयादेशे गुणे विभक्तिकार्ये 'उपेयिवान्' इति सिद्चति। 'अचः परस्मिन् पूर्वविधौ ( १।१।५७ ) इति पूर्वविधेर्विषयत्वात् सवर्णदीर्घस्य स्थानिवद् भावेनानेकाच्त्वं

१. प्रौढमनोरमायाम् 'उपेयिवान०' इति सूत्रे उत्तरार्धे ८०७ तमे पृष्ठे।

२. शब्दरत्ने 'उपेयिवान०' इति सूत्रे उत्तरार्धे ८०७ तमे पृष्ठे।

तु न भविष्यति। एतावता सवर्णदीर्घो न स्यादिति भट्टोजिदीक्षितोक्तिरसंगता।

भाष्यकारेण[1], काशिकाकारेण[2], न्यासकारेण[3], प्रसादटीकाकारेण[4], प्रक्रियासर्वस्वस्य प्रकाशिकाटीकाकारेण[5] च यद् व्याख्यातं तेन भट्टोजिदीक्षितस्यैव पुष्टिर्भवति। भाष्ये तु 'उप + इ + वस्' इत्यवस्थायां द्विर्वचनं प्रबाध्य पूर्वम् इटि, गुणे, निपातनाद् इयादेशे, विभक्त्यादिकार्ये च कृते 'उपेयिवान्' इत्यपि कस्यचिद् मतमित्यभिप्रायेणापि प्रदर्शितमतमेकं तत्र दृश्यते।

न्यासे रत्नकारस्यापि पक्षः। पदमञ्जरीकारेण[6] पक्षत्रयं निगदितम्। तत्रैकेन भट्टोजिदीक्षितस्य, अपरेण च शब्दरत्नकारस्य पुष्टिर्जायते। तृतीयपक्षेण तु 'क्वसुश्च' (३।१।१०७) इति सूत्रे एव इड्ग्रहणं कर्त्तव्यम् एवं च निपातनश्रमो व्यर्थ एव।

चान्द्रे[7] तूपसर्गरहितमेव सूत्रम्। तत्र सामान्येन निपातनस्य निर्देशः। सरस्वतीकण्ठाभरणेऽप्युपसर्गरहितं[8] 'ईयिवाननाश्वाननूचानः' (१.४।१४५) इत्येव सूत्रम्। तस्य टीकाकारेण नारायणशास्त्रिणा भट्टोजिदीक्षितोक्तमेव समर्थितम्।

नागेशेन[9] रत्नकारोक्तं मतमेव समर्थितम्। अद्यप्यत्र मतद्वयसमाश्रयणेन लक्ष्ये न कोऽपि विरोधो भवति, तथापि भाष्यव्यानबलेन, अनेकेषां विदुषां चानुरोधेन भट्टोजिदीक्षितमेव युक्तम्।

---

१. महाभाष्ये 'उपेयिवान०' इति सूत्रे १७३–१७४ तमयोः पृष्ठयोः।
२. काशिकायाम् 'उपेयिवान्०' इति सूत्रे ६२०–६२१ तमयोः पृष्ठयोः।
३. न्यासे 'उपेयिवान्०' इति सूत्रे ६२०–६२१ तम पृष्ठयोः।
४. प्रक्रियाकौमुद्याः प्रसादटीकायाम् 'उपेयिवान्' इति सूत्रे ५७६ तमपृष्ठे।
५. प्रक्रियाकौमुद्याः प्रसादटीकायाम् 'उपेयिवान्०' इति सूत्रे ५० तम पृष्ठे।
६. पदमञ्जर्याम् 'उपेयिवान्०' इति सूत्रे ६२०–६२१ तम पृष्ठयोः।
७. चान्द्रव्याकरणे १।२।७५ इति सूत्रे ७४ तमे पृष्ठे।
८. सरस्वती कण्ठाभरणस्य नारायणशास्त्रिकृत् टीकायां 'इयिवान०' इति सूत्रे १६३ तमे पृष्ठे।
९. वृहच्छब्देन्दुशेखरे 'उपेयिवान०' इति सूत्रे २०६६–२०६७ तमयोः पृष्ठयोः।

वस्तुतस्तु भट्टोजिदीक्षितमतेन अभ्यासदीर्घेण सवर्णदीर्घबाधः बलादिलक्षणस्वेडः प्रतिप्रसवः, रत्नकारमतेन न सवर्णदीर्घबाध एवम् 'वस्वेकाधाद्घसाम्' (७।२।६७) इत्यनेन इड् प्रवृत्तिः। भाष्योक्तस्यकस्यचिन्मतेन द्विवचनं प्रबाध्य पूर्वम् इटि, काशिकारमतेन क्रादिनियमेन क्रादिनियमेन प्राप्तस्येटः प्रतिप्रसवः, इत्यनेके विरोधा निपातनशरणग्रहणानन्तरमपि दृश्यतेन तन्नोचितम्। तस्मात् सर्वविरोधपरिहाराय बलादौपरतः द्वित्वमिडादिकं च प्रबाध्य 'ईयि' निपातनस्वीकारे न दोष इति सुधियो विभावयन्तु।

## मान्तत्वनिपातनविचारः

१—'स्वादुमि०' इति सूत्रार्थ प्रदर्शनम्।

२—भट्टोजिदीक्षितमतेन 'स्वादु०' इति सूत्रेण मान्तत्वनिपातनं भावप्रत्ययमात्रविषयकम्।

३—शब्दरत्नकारमतेन 'स्वादु०' इति सूत्रेण मान्तत्वनिपातनं णमुल् प्रत्ययमात्रविषयकम्।

४—भावप्रत्ययमात्रं मान्तत्वनिपातनमिति पक्षमादाय वैयाकरणानां सम्मतिदानम्।

५—णमुल्प्रत्ययमात्रं मान्तत्वनिपातनमिति पक्षे वैयाकरणानांविचारदानम्।

६—अपाणिनीये व्याकरणे अस्य सूत्रस्य स्थाने कृतसूत्रस्वरूपनिदर्शनम्।

७—युक्तायुक्तत्वसमीक्षणम्।

'स्वादुमि णमुल्' (३।४।२६) इत्यस्मिन् सूत्रे 'स्वादुमि' इत्येकं पदम्, 'णमुल्' इत्तपरं पदम्। अत्र सूत्रे 'समानकर्तृकयोः पूर्वकाले' (३।४।२१) इति सूत्रमनुपर्तते। 'कर्मण्याक्रोशे कृञः खमुन्' (३।४।२५) इत्यतः कृञश्चानुवर्तते। स्वाद्विति स्वाद्वर्थपरः। तेन स्वाद्वर्थेषूपपदेषु समानः कर्ता ययोर्धात्वर्थयोस्तत्र पूर्वकाले धात्वर्थे वर्तमानात् 'कृञ्–धातोर्णमुल् प्रत्ययो भवतीत्यर्थः संपद्यते।

अत्र सूत्रे 'स्वादुम्' इत्यत्र मान्तत्वं निपात्यते। अस्वादुं स्वादुं कृत्वा भुङ्क्ते इत्यस्मिन्नर्थे 'कृ' धातोर्णमुलि, अनुबन्धलोपे, 'स्वादु' इयतत्र निपातनात् 'स्वादुम्' इति कृते विभक्त्यादिकार्ये 'स्वादुङ्कारं भुङ्क्ते' 'लवणङ्कारं भुङ्क्ते' इत्यादिप्रयोगाः सिद्ध्यन्ति।

यद्यपि 'खमुञ्' प्रत्यये कृते 'खित्यनव्ययस्य' (६।३।६६) इत्यनेन मुमि 'स्वादुङ्कारम्' इति स्यात्, तथापि च्व्यन्तस्याव्ययत्वेन मुम न स्यात्, तदा 'च्वौ च' (७।४।२६) इति दीर्घापत्तिः, स्त्रियां 'वोतो गुणवचनात्' (४।१।४४) इति ङीषापत्तिश्च। अतो हेतोर्मान्तमृन्तित्वनिपातनम्। इदं निपातनम् 'तुमर्थाच्च भाववचनात्' (२।३।१५) इत्यधिकारेण भावप्रत्ययमात्रविषयकमिति भट्टोजिदीक्षिताशयः[1]।

शब्दरत्नकारमतेन[2] तु णमुल्प्रत्ययमात्रविषयकं निपातनम्। अन्यथा 'साक्षात् प्रभृतीनि' (१।४।७४) इति सूत्रे अस्वाद्वी-स्वाद्वी कृत्वा इत्युदारणस्यासंगतिर्भवेत्। यतो हि लिङ्गविशिष्टपरिभाषया तस्यापि मान्तत्वनिपातनं स्यात्।

भाष्ये[3], काशिकायाम्[4], प्रदीपे[5], न्यासे[6], पदमञ्जर्याम्[7], प्रक्रिया कौमुद्यां[8], प्रसादटीकायां[9], च यद् व्याख्यातम्, तमेव पक्षमानुपूर्व्येण मनोरमायामपि प्रतिपादितवान् मनोरमाकारः, न तु कश्चिद् नवीनतम्।

---

१. प्रौढमनोरमायाम् 'स्वादुम्०' इति सूत्रे ९२४—९२५ तमयोः पृष्ठयोः।
२. शब्दरत्ने 'स्वादुम्०' इति सूत्रे ९२४—९२५ तमयोः पृष्ठयोः।
३. महाभाष्ये 'स्वादुम्०' इति सूत्रे २५१—२५३ तमपृष्ठपर्यन्तम्।
४. काशिकायाम् 'स्वादुम्०' इति सूत्रे १७० तमे पृष्ठे।
५. प्रदीपे 'स्वादुम्०' इति सूत्रे २५१—२५३ तमपृष्ठपर्यन्तम्।
६. न्यासे 'स्वादुम्०' इति सूत्रे १७०—१७१ तमयोः पृष्ठयोः।
७. पदमञ्जर्याम् 'स्वादुम्०' इति सूत्रे १७०—१७१ तमयोः पृष्ठयोः।
८. प्रक्रियाकौमुद्याम् 'स्वादुम्०' इति सूत्रे ६८९ तमे पृष्ठे।
९. प्रसादटीकायाम् 'स्वादुम्०' इति सूत्रे ६८९ तमे पृष्ठे।

शब्दरत्नकारोक्तस्य मतस्य समर्थनं नागेशेन[1] शब्देन्दुशेखरे विहितम्। अयं हरिदीक्षितस्य स्वोपज्ञः पक्षः।

चान्द्रे व्याकरणे[2] 'स्वाद्वर्थाद्दीर्घात्' (१।३।१३५) इति सुत्रं लभ्यते। तत्र 'स्वादुंकारम्', 'सम्पन्नकारम्' इत्यादिप्रयोगाणां साधनं खमुञ्प्रत्ययेनैव दृश्यते, न तु णमुल्प्रत्ययेन मान्तत्वनिपातनाङ्गीकारेणेति। भट्टोजिदीक्षितेनायं पक्षः पूर्वपक्षरूपतया समुपस्थापितः।

समीक्षात्मकदृष्ट्या विचारे कृते सति भट्टोजिदीक्षितमतमेव युक्तम्। दृश्यते च 'स्वादुं कृत्वा', 'स्वादुं कृत्य', 'स्वादुं कारम्', 'लवणं कारम्' इत्यादौ स्वाद्वर्थे णमुलन्तातिरिक्तं चोदाहरणम्। यदि णमुलविषय एव निपातनं स्यात् तदा 'स्वादुं कृत्वा', 'स्वादुं कृत्य' इत्यादयः प्रयोगाः न सिद्ध्येयुः। यद्यप्यस्मिन् पक्षे लिङ्गविशिष्टपरिभाषया 'अस्वाद्वीं स्वाद्वीं कृत्वा' इत्यत्र मान्तत्वनिपातनत्वापत्तिः, तथापि 'हरतेरनुद्यमने च' (३।२।९) इति सिद्धान्तकौमुदीसूत्रस्थ 'शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरूपसंख्यानम्' इति वार्त्तिके घट-घटी,—ग्रहणेन परिभाषाया अनित्यत्वेन न भाष्यासंगतिरिति सुधियो विभावयन्तु।

## अतिशायन इति सूत्रे दीर्घनिपातनविचारः

१—भट्टोजिदीक्षितमतेन अतिशायन इत्यत्र निपातनाद् दीर्घत्वेऽपि लोके ह्रस्वोऽपि साधुः।

२—शब्दरत्नकारमतेन सर्वत्र निपातनाद् दीर्घ इत्येवोचितः।

३—लोके ह्रस्वस्य साधुत्वे वैयाकरणानां सम्मतिः।

४—सर्वत्र दीर्घस्य साधुत्वे वैयाकरणानां निर्णयदानम्।

५—युक्तायुक्तत्वप्रदर्शनम्।

६—स्वमतप्रदर्शनम्।

---

१ बृहच्छब्देन्दुशेखरे 'स्वादुम्०' इति सूत्रे २१५२–२१५३ तमयोः पृष्ठयोः।

२. चान्द्रव्याकरणे 'स्वाद्वर्था०' इति सूत्रे १२५ तमे पृष्ठे।

अतिशायनार्थे वर्तमानात् प्रातिपदिकात् तमविष्ठनौ प्रत्ययौ भवत इति सूत्रार्थः ।

भट्टोजिदीक्षितमतेनातिशयनमतिशायनम्[1] । अतिपूर्वकाद्

शेतेर्ल्युट्, निपात नाद् दीर्घः—अतिशायनमिति । सौत्रत्वाद् दीर्घकथनेऽन्यत्र दीर्घो न स्यात् तेन निपातनोक्तिः । अतो लोकेऽपि दीर्घः साधुः । अबाधकान्यपि निपातनानि तेन लोके ह्रस्वोऽपि सिद्ध्यत्येव ।

रत्नकारानुसारेण[2] तु 'बाधकान्येव निपातनानि' इति समाहितपक्षेण निपातनाद् दीर्घत्वे सर्वत्र दीर्घप्रयोग एव, न ह्रस्व इति ।

काशिकाकारेण[3], न्यासकारेण[4], पदमञ्जरीकारेण,[5] प्रसादकारेण[6] च यदुक्तम्, तदेव मनोरमाकारेणानुक्तम् ।

यद्यप्येतद्विषये प्रकृतसूत्रभाष्ये किमपि नोक्तम्, तथापि 'सर्वादीनि[7] सर्वनामानि' ( १।१।२७ ) इति सूत्रे सर्वादीनीत्यत्र निपातनाद् षत्वाभावप्रसङ्गेनो सततं-सन्ततमित्यत्र 'समो वा हिततयोः' इत्युक्त्या तत्र 'बाधकान्येव निपातनानीति समाहितम् ।

नागेशेनापि[8] शब्देन्दुशेखरे, परिभाषेन्दुशेखरे, परिभाषेन्दुशेखरे च बाधकान्येवेति पक्षस्य समर्थनं विहितम् ।

---

१. प्रौढमनोरमायाम् 'अतिशायने०' इति सूत्रे ४८३–४८४ तमपृष्ठयोः ।
२. शब्दरत्ने 'अतिशायने०' इति सूत्रे ४८३–४८४ तमपृष्ठयोः ।
३. काशिकायाम् 'अतिशायने०' इति सूत्रे २७० तमे पृष्ठे ।
४. न्यासे 'अतिशायने०' इति सूत्रे २७० तमे पृष्ठे ।
५. पदमञ्जर्याम् 'अतिशायने०' इति सूत्रे २७० तमे पृष्ठे ।
६. प्रक्रियाकौमुद्याः प्रसादाख्यटीकायाम् 'अतिशायने०' इति सूत्रे ९१७ तमे पृष्ठे ।
७. भाष्ये 'सर्वादीनि०' इति सूत्रे २०६ तमे पृष्ठे ।
८. बृहच्छब्देन्दुशेखरे 'अतिशायने०' इति सूत्रे १४९९–१५०० तमपृष्ठयोः । परिभाषेन्दुशेखरे 'बाधकान्येव०' इति परिभाषायाम् ३२६ तमेपृष्ठे ।

  

अत्र मतद्वये रत्नकारोक्तमेव न्याय्यम्। भाष्ये 'बाधकान्येव निपातनानि' इति पक्षस्य स्वीकृतिदानेन ह्रस्वत्वोपपादनं नोचितम्। लोके 'अतिशयनम्' इति ह्रस्वस्य साधुत्वोपपादनमयुक्तम्। अन्यथा निपातनाद् दीर्घोक्तेर्वैयर्थ्यम्। सोपसर्गकस्य ल्युडन्तस्य 'शीङ्' धातोः अतिशयनप्रयोगो न पाणिनेः पूर्वं दृश्यते। अन्यथा सौत्रत्वादेव समाधानं स्यात्। भाष्ये सर्वत्रातिशयनशब्दप्रयोग एव दृश्यते, अतिशयनशब्दप्रयोगः क्वापि नास्ति। कैयटेनापि[1] 'अतिशायन इति देश्याः सूत्रनिबन्धाः क्रियन्ते। देष्टव्याः देश्याः, साधुत्वेन प्रतिपाद्याः, एते सूत्रे निबध्यन्ते। प्रसङ्गेन साधुत्वप्रतिपादनार्थं निपातनाद्दीर्घत्वमित्युक्तं भवति' इत्युक्तम्। अत्र साधुत्वप्रतिपादनार्थत्वोक्त्या ह्रस्वप्रयोगस्यासाधुत्वं सुतरां संलक्ष्यते। अमरटीकाकारेण रमानाथेन तु 'अतिशयनम्' इत्यपि निगदितमस्ति। तत्र अति शी + ल्युट् (भावे) तद्युक्ते त्रिलिङ्गमिदम्। शयनमतिक्रान्तमतिशयनमित्यत्रात्यादीति समासः। अतिक्रान्तशयनमित्यर्थः। आस्तां नामातिक्रान्तशयनार्थे ह्रस्वप्रयोगस्य साधुत्वम्, अतिशयद्योतकार्थकस्य ल्युडन्तस्य तु 'अतिशायनम्' इति दीर्घप्रयोग एव। यद्यपि निपातनोक्तिं विनाप्यतिशायनं सम्पद्यते, तद्यथा—अतिशी+णिच् (स्वार्थे) ततो ल्युटि (भावे) अतिशायनमिति सिद्ध्यति। आधिक्यम्, प्रकर्षः प्रशंसा चास्यार्थाः, एतत् सर्वं रत्नावलीकारेण प्रतिपादितम्। तच्च शब्दकल्पद्रुमे[2] संगृहीतम्, तथापि पाणिनिव्याकरणनिकाये प्रायो ये केचन वैयाकरणास्ते सर्वे निपातनबलेनैव दीर्घं इति मन्यन्ते।

मन्मते निपातनोक्तिस्तु गले पतितन्यायेन भवति। सति सम्भवे स्वार्थे णिचि प्रयोगसिद्धौ निपातनेनात्रसाधनप्रकारस्यौचित्योपपादनं तु विदुषां विचारविषयः। किन्तु प्रकर्षार्थे दीर्घस्यैव साधुत्वमित्यत्र नास्ति शङ्कापङ्ककलङ्क इति।

---

१. 'अतिशायन०' इति सूत्रे प्रदीपे ६१२ तमे पृष्ठे।
२. शब्दकल्पद्रुमे (प्रथमभागे) २७–२८ तमपृष्ठयोः।

# प्रौढमनोरमाशब्दरत्नयोर्विचारभेदानां युक्ता-युक्तत्वसमीक्षा

## षटत्वस्याल्विधित्वे विचारः

१—भट्टोजिदीक्षितमतेन षट्त्वस्याःल्विधित्वेन यथोद्देश पक्षेऽपि स्थानिवद्भावाप्रवृत्तौ 'न लोपः सुप्०' इति नलोपासिद्धत्वोपपादनस्यावश्यकत्वप्रदर्शनम् ।

२—नलोपासिद्धत्वोपपादनस्य षट्संज्ञां प्रति आवश्यकत्वे वैयाकरणानां सम्मतिनिदर्शनम् ।

३—शब्दरत्नकारमते षट्त्वं नाल्विधित्वं तेन नलोपस्य स्थानिवद्भावादिष्टसिद्धौ 'नलोपः सुप्०' इति नलोपासिद्धत्वस्यानर्थक्यप्रकाशनम् ।

४—नलोपासिद्धत्वोपपादनस्यानर्थक्ये वैयाकरणानां विचारदानप्रकटनम् ।

५—युक्तायुक्तत्वसमीक्षणम् ।

६—स्वमतदानम् ।

पञ्चन्शब्दाद् जशि षट्संज्ञायां 'षड्भ्यो लुक्' इति लुकि, नान्तस्य पदत्वे 'न लोपः प्राति०' (८।२।७) इति लोपे 'पञ्च' इति । ततस्त्रीत्वविवक्षायाम् अदन्तत्वात् पञ्चशब्दस्य टाप्प्राप्तौ 'न लोपः सुप स्वर०' (८।२।२) इत्यनेन षट्संज्ञां प्रति न लोपस्यासिद्धत्वेन 'न षट् स्वस्रादि०' (४।१।१०) इत्यनेन निषेधे टाबभावः ।

यद्यपि न लोपासिद्धत्वोपपादनं कार्यकालपक्ष एवोपयोगी, यथोद्देशपक्षे तु 'एकदेशविकृत०' इति परिभाषयैव निर्वाहः स्यात्, तत्र न लोपस्यासिद्धत्वोपपादनं व्यर्थमिति वक्तुं शक्यते, तथापि 'एकदेशविकृत०' इत्यस्य स्थानिवदादेशविषयकत्वेन नान्तसंख्यावाचकषट्त्वस्याल्त्वधर्मत्वेन स्थानिवद्भावाप्रवृत्तौ

यथोद्देशपक्षेऽपि 'नलोपः सुप्०' ( ८।२।२ ) इत्यसिद्धत्वोपपादनमावश्यकमेव[1] इति भट्टोजिदीक्षितस्य पक्षः।

एतस्मात् पूर्वं प्रक्रियाकौमुदीकारेण[2], प्रसादटीकारेण[3] च षट्संज्ञां प्रति 'न लोपः सुप् स्वर०' ( ८।२।२ ) इति नलोपाद्धत्वोपपादनं ततो न षट्स्वस्रा इति निषेधे सति न टाप् इत्याशयकव्याख्यानद्वारा कार्यकालपक्षे यथोद्देशपक्षे च नलोपासिद्धत्वमावश्यकमिति सूचितम्। पश्चात् तत्त्वबोधिनीकारेणापि[4] तथैव व्याख्यातम्।

रत्नकृता[5] तु षट्त्वस्य सान्तनान्तोभयनिष्ठत्वेन, अल्विधित्वाभावाद् 'अनल्विधौ' इत्यप्रवृत्तावेकदेशविकृतन्यायेन स्थानिवद्भावविषयकत्वेऽपि षट्त्वानयने 'न षट्स्वस्रादिभ्य इति निषेधे रूपसिद्धौ यथोद्देशपक्षे 'नलोपः सुप्स्वर०' ( ८।२।२ ) इत्यसिद्धत्वोपपादनं नावश्यकम्।

'न षट्स्वस्रादिसूत्रे भाष्ये[6], काशिकायाम्[7], न्यासे[8], प्रदीपे[9], पदमञ्जर्यां[10] च ( तन्त्रावृत्त्या ) स्त्रियामित्यनुवर्त्य स्त्रियामर्थे यत् प्राप्नोति ङीप्, टाप्, इत्यादयो वा तन्न, अत एव अनन्तरस्य विधिर्भवति प्रतिषेधो वा' इति न्यायेन न ङी०मात्रस्य निषेधः शङ्क्य इति व्याख्यानेन नलोपासिद्धत्वोपपादनमना-

१. प्रौढमनोरमायाम् 'टावृचि' इति सूत्रे ६८३ तमे पृष्ठे।
२. प्रक्रियाकौमुद्याम् 'टावृचि' इति सूत्रे ३२५ तमे पृष्ठे।
३. प्रसादाख्य टीकायाम् टावृचि' इति सूत्रे ३२५ तमे पृष्ठे।
४. तत्त्वबोधिन्याम् 'टावृचि' इति सूत्रे १३४ तमे पृष्ठे।
५. शब्दरत्ने 'टावृचि' इति सूत्रे ६८३ तमे पृष्ठे।
६. 'न षट्स्वस्रादिसूत्रे भाष्ये ३०५–३०६ तमपृष्ठयोः।
७. 'न षट्स्वस्रादिसूत्रे काशिकायाम् २८२–२८५ तमपृष्ठपर्य्यन्तम्।
८. 'न षट्स्वस्रादिसूत्रे न्यासे २८२ तमपृष्ठतः २८५ तमपृष्ठपर्य्यन्तम्।
९. 'न षट्स्वस्रादिसूत्रे प्रदीपे ३०५–३०६ तमपृष्ठयोः।
१०. 'न षट्स्वस्रादि सूत्रे पदमञ्जर्यां २८२–२८५ तमपृष्ठपर्य्यन्तम्।

वश्यकमेव। नागेशेन[1], भैरवीकारेण[2], भावप्रकाशकारेण[3], कौमुद्या दाधिमथटीकाकारेण[4] चानावश्यकमेवोट्टङ्कितम्।

अत्र मतद्वये रत्नकारोक्तपक्ष एव युक्तः। अत एव 'न लोपः सुप् स्वर०' (८।२।२) इति सूत्रे भाष्ये[5] 'संज्ञाग्रहणानर्थक्यं च तन्निमित्तत्वाल्लोपस्य' इति सिद्धान्तितम्।

यतो हि षट्संज्ञासत्त्वे जश्शसोर्लुक्, लुकि सति पदसंज्ञा, पदसंज्ञासत्त्वे नलोपः। अतः संज्ञाया उदाहरणं नास्त्येवेत्युपपादितम्। यदि षट्त्वस्याल्विधित्वं स्यात्, तदा संज्ञाविधेर्नलोपासिद्धत्वोपपादनं फलवलकल्पनया 'पञ्च' इति स्यादेव पुनः 'संज्ञाविधेरुदाहरणं' नास्त्येव' इति कथनस्यासंगतिर्भवेत्। 'न षट्स्वस्रादिभ्यः' (४।१।१०) इत्यस्य प्रवृत्तिस्तु भूतपूर्वषट्त्वमादाय भविष्यति। षट्त्वं च स्थानिवद्भावविषयकमेव। मानं चात्र न षट्स्वस्रादिभ्यः' (४।१।१०) इति सूत्रस्थ स्त्रियां यत् प्राप्नोति तन्न' इति भाष्यव्याख्यानमेव।

मन्मते तु 'न लोपः' इति सूत्रस्थ भाष्यरीत्या संज्ञाविधेरुदाहरणं पञ्च इति नास्त्येवेति पक्ष एवोचितः। एवं 'पञ्चन्' इत्यवस्थायां ङीप् इत्यस्य न लोपे सति टाप् इत्यस्य 'स्त्रियां यत् प्राप्नोति०' इति वारणे पदमञ्जरीकारेण 'सकृदुच्चरितत्व' बलेन दोषमुद्भाव्य, यत् तन्त्रावृत्त्यादिकमुक्तम्, तदपि न शोभनम्। यतो ह्यत्र सूत्रोपात्तशब्दबलेन ङीप्-टावित्युभयोर्निवृत्तिर्न भवति, अपि तु स्त्रियामित्यनुवृत्तिबलेन। अतः सूत्रस्य सकृदुच्चरितत्वेऽपि तत्प्रयुक्तनिषेधस्यानुच्चरितत्वेन न तदपेक्षा। एवं 'सकृदुच्चरितः' इति न्यायो न सार्वत्रिकः। अन्यथा श्लेषस्थले प्रश्लेषस्थले च दोषः। एवम् अनेन सूत्रेण क्वचिद् ङीप्' क्वचिच्च टाप् निषिध्यते। तेन भिन्न भिन्न लक्ष्ये सकृदनिवृत्तिकरणेन तन्त्रावृत्त्यादिकमन-

१. 'टावृचि' इति सूत्रे लघुशब्देन्दुशेखरे ३७३ तमे पृष्ठे।
२. 'टावृचि' इति सूत्रे भैरव्यां ६८३ तमपृष्ठे।
३. 'टावृचि' इति सूत्रे भावप्रकाशे ६८३ तमे पृष्ठे।
४. 'टावृचि' इति सूत्रे दाधिमथटीकायां १३४ तमपृष्ठे।
५. 'नलोपः०' इति भाष्ये सूत्रे ३५९ तमे पृष्ठे।

र्थकम् । स 'एकः पूर्वपरयोः'[१] (६।१।८४) इति सूत्रे भाष्ये सकृदुच्चरित-प्रयुक्तकार्यस्योदाहरणं 'लभ्यते गर्भाष्टमे ब्राह्मण उपनेयः' इति । अत्र सकृदेवो-पनेयो भवति । किन्तु 'एकः शब्दः सम्यग् ज्ञातः' इत्यत्र 'ब्राह्मणो न हन्तव्यः' इत्यादिस्थले च न तथा । अतः सकृद्गतिन्यायस्यासार्वत्रिकतयाऽऽवृत्तिर्निरपेक्षेति विदुषां सम्मतिविषयः ।

---

## पञ्चमीसमासविषयविचारः

१—भट्टोजिदीक्षितमतेन 'अचः प०' इति सूत्रे पूर्वविधौ इत्यत्र पञ्चमीसमा-सस्वीकारो व्यर्थः ।

२—पञ्चमीसमासस्वीकारो व्यर्थं इति पक्षमादाय वैयाकरणस्य सम्मतिः ।

३—'पञ्चमीसमासोऽनित्यः' इति शब्दरत्नकारस्य पक्षः ।

४—पञ्चमी समासानित्यत्वपक्षस्वीकारे वैयाकरणानां विचारदानम् ।

५—युक्तायुक्तत्वसमीक्षणम् ।

'अचः परस्मिन् पूर्वविधौ' (१।१।५७) इति सूत्रे 'पूर्वविधौ' इत्यत्र पञ्चमीसमासः स्वीक्रियते । तेन वेभिद्यते' इत्यत्र यङ्लुगन्तात् तृचि अल्लोपे, तस्य स्थानिवद्भावेन अकारव्यवधानेन वेभिदिता इत्यत्र 'एकाच उपदेशेऽनुदात्तात्' (७।२।१०) इत्यनेन इट्प्रतिषेधो न भवति । मथितं पण्यमस्येति विग्रहे 'माथितिकः' इत्यत्र ठकि, तस्येकादेशे 'यस्येति च' (६।४।१४८) इत्यल्लोपे 'इसुसुक्तान्तात्कः' (७।३।५१) इति कादेशः प्राप्नोति, अल्लोपस्य स्थानिवद्-भावेन न भवति । तथा 'अपोपचन्' इत्यत्र पररूपे कृते 'सिजभ्यस्तविदिभ्यश्च' (३।४।१०९) इत्यनेन जुस्भावः प्राप्तः, स्थानिवद्भावेन न भवति । किन्तु 'वेभिदिता' इत्यत्र यङन्तात् तृचि, इट्प्रतिषेधमाशङ्क्य 'एकाच उपदेशे' इत्यस्य भाष्ये 'एकाचोऽङ्गात्' इत्यर्थंकरणेन, विभित्सति इत्यत्रापि इण्निषेधौ न स्यात् । तदर्थम् उपदेशग्रहणस्य एकाजंशे सम्बन्धे तेन 'वेभिदिता' इत्यत्र परिहारसम्भवे

१. 'एकः पूर्वपरयोः' इति सूत्रे भाष्ये ७३१–७३३ तमपृष्ठपर्य्यन्तम् ।

'एकाच उपदेशे' ( ७।२।१० ) इत्यस्य 'एकाज्धातुभ्यः' इत्यर्थंकरणेन 'माथितिकः' इत्यत्र ठकाराभावेन तस्याल्विधित्वेन 'अपीपचन्' इत्यत्र पूर्वसाहचर्यात् परसाहचर्यात् परसाहचर्यस्य बलीयस्त्वेन विदि साहचर्येण, अभ्यस्तादपि लङ्येव झेर्जुस्विधानेन दोषाभावे पञ्चमीसमासस्वीकारो व्यर्थः। अस्य पक्षस्य समर्थनं मनोरमाकारेण[1] कृतम् ततः पूर्वं पदमञ्जरीकारेणापि[2] तदेवाङ्गीकृतम्।

एतद्विपरीतम् 'अचः परस्मिन् पूर्वविधौ' ( १।१।५७ ) इति सूत्रे पूर्वविधावित्यत्र पञ्चमीसमासस्य सापेक्षत्वपक्षः। अस्य मतेन 'अपरविधाविति तु वक्तव्यम्' इति वार्त्तिकस्य कैयटानुरोधेन[3] परसाहचर्यस्य बलवत्त्वे मानाभावेन 'अपीपचन्' इत्यत्र जुस् वारयितुं पञ्चमीसमासस्वीकारोऽपेक्ष्यते। विप्रतिषेधसूत्रे कार्यशब्देन शास्त्रीयस्यैव ग्रहणेन, अत्र न तस्य प्रवृत्तिः।

नित्यः परयणादेशः, परश्चासौ व्यवस्थया।
'आरभ्यमाने नित्योऽसौ' इति वा
युगपत् सम्भवो नास्ति, बहिरङ्गेण सिद्ध्यति॥

इति 'अचः परस्मिन्०' ( १।१।५७ ) इति सूत्रस्य भाष्योक्तरीत्या[4] पूर्वसाहचर्यस्यान्तरङ्गत्वेन तस्यैव ग्रहणमुचितम्। पूर्वसाहचर्यस्यान्तरङ्गत्वस्वीकारे 'नुदविदोन्द' ( ८।२।५६ ) इत्यत्र च परसाहचर्याश्रयणे विरोधस्तु न वक्तव्यः। उक्तस्थले 'लुग् विकरण०' परिभाषाबलेनान्तरङ्गपरिभाषाया अनित्यत्वेन च परसाहचर्याश्रयणम्। एवं परसाहचर्येऽपि 'प्रत्यैषिषन्' इत्यत्र लङ्लकारे जुसवारणाय पञ्चमीसमास एव शरणम्। यद्यपि पूर्वसाहचर्यस्वीकारे भावारूपादेशाभावविकरणकाभ्यतस्य ग्रहणेन दोषाभावः, तथापि लाघवदृष्ट्या तदपेक्षातः पञ्चमोसमास एव सुलभः। यद्यपि पन्चमीसमासस्वीकारे 'प्रविगणय्य' इत्यत्राल्लोपस्य स्थानिवद्भावेन णेर्यदिशो न स्याद्, इति दोष आयाति, तथाप्यनेन

१. प्रौढमनोरमायाम् - पञ्चमीसमासविचारे ६१९–६२७ तमपृष्ठपर्य्यन्तम्।
२. 'अचः पर०' इति सूत्रे पदमञ्जर्याम् १९५–१९७ तमपृष्ठपर्य्यन्तम्।
३. 'अचः पर०' इति सूत्रे प्रदीपे ३०८–३०९ तमपृष्ठयोः।
४. महाभाष्ये 'अचः परस्मिन्०' इति सूत्रे ३११ तमे पृष्ठे।

  

पञ्चमीसमाससस्यानित्यत्वमात्रं स्वीकर्त्तव्यम्। अस्य पक्षस्य समर्थनं रत्नकारेण[1], नागेशेन[2], भैरवीकारेण[3] भावप्रकाशकारेण[4] च कृतम्।

यद्यप्यस्य पक्षस्योत्थापनं भाष्येऽस्ति, किन्तु तत्रानित्यत्वरूपेण स्थापनं नास्ति। तेनास्यानित्यत्वोक्ती रत्नकारस्य स्वोपज्ञत्वम्।

अत्र मतद्वये दीक्षितस्य मतेनापि न दोषः। यतो हि 'वेभिदिता' 'माथितिकः' 'अपिपचन्' इत्यादौ स्वतो भाष्यकारेणापि[5] 'प्रातिपदिकनिर्देशोऽयम्, प्रातिपदिकनिर्देशाश्च अर्थतन्त्रा भवन्ति' इत्यादिना समाहितम्, किन्तु यत्र यत्र दोषा भवति तत्र तत्र पञ्चमीसमासस्यानित्यत्वकल्पनमेव युक्तम्। 'नित्यः परयणादेशः' इत्यादिना पूर्वं यणादेशस्यान्तरङ्गत्वम्। एवम् 'एकाच उपदेशेऽनुदात्तात्[6] (७।२।१०) इति सूत्रे वेभिदिता' इत्याद्यर्थं पूर्वस्माद्विधौ तथा 'उभेऽभ्यस्तम्[7]' (६।१।५) इति सूत्रे उभे ग्रहणप्रयोजनावसरे जुस्वारणाय पञ्चमीसमास एव भाष्यकारेण प्रदर्शितः। पञ्चमीसमासस्य सर्वथाऽभावस्वीकारे पूर्वापरभाष्यकैयटादिविरोधः स्यात्। अतएव तत्त्वबोधिनीकारेणापि[8] 'अचः परस्मिन्०' (१।१।५७) इति सूत्रे पञ्चमीसमास स्वीकृतः एव। 'अपीपचन्' इत्यादौ परसाहचर्यस्य बलीयस्त्वोक्त्या लङि एव जुसापत्तिरित्यादिकथनमप्यसंगतम्। यतो हि साहचर्यं सर्वत्र न गृह्यते। अत एव चतुष्कपाल इत्यत्र 'द्वित्रिचतुर०' (८।३।४३) इत्यनेन पाक्षिकषत्वं न भवति।

एवम् 'दीधीवेवीटाम्' (१।१।६) इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणम्। 'सिजभ्यस्तविदिभ्यश्च' (३।४।१०९) इति सूत्रेऽपि साहचर्यग्रहणे

---

१. शब्दरत्ने 'पञ्चमीसमासविचारे' ६१९–६२७ तमपृष्ठपर्य्यन्तम्।
२. शब्देन्दुशेखरे 'पञ्चमीसमासविचारे' ६१६–६१७ तमपृष्ठयोः।
३. भैरव्याम् 'पञ्चमीसमासविचारे' ६१९–६२७ तमपृष्ठपर्यन्तम्।
४. भावप्रकाशे 'पञ्चमीसमासविचारे' ६१९–६२७ तमपृष्ठपर्य्यन्तम्।
५. 'अचः परस्मिन्०' इति सूत्रे भाष्ये ३०७–३०८ तमपृष्ठयोः।
६. महाभाष्ये 'एकाच उपदेशे०' इति सूत्रे ११३ तमे पृष्ठे।
७. महाभाष्ये 'उभेऽभ्यस्तम्' इति सूत्रे ६७७ तमे पृष्ठे।
८. तत्त्वबोधिन्याम् 'अचः परस्मिन्०' इति सूत्रे सप्तदशे पृष्ठे।

यदि विद्-साहचर्येण लङ् लकारस्य ग्रहणं भविष्यति, तदा विद्साहचर्येण सिच्पदेन सिच् धातोरेव ग्रहणं स्यात्, न तु च्लेः सिजादेशस्य किन्त्वत्र सूत्रे सिच्पदेन सिजादेशरूपविकरणस्यैव ग्रहणं भवति । अतः साहचर्यस्यासार्वत्रिके 'अपीपचन्' इत्यत्र जुस्वारणाय पञ्चमी-समासाश्रयणपक्षस्यैवोचित्यम् ।



## स्वशब्दानुवृत्तिविचारः

१—भट्टोजिदीक्षितमतेन 'आदिरन्त्येन०' इति सूत्रे स्वशब्दस्यानुवृत्ति-प्रदर्शनम् ।

२—'आदिरन्त्येन०' इति सूत्रे स्वशब्दानुवृत्तिविषये वैयाकरणानां सम्मतिः ।

३—शब्दरत्नकारमतेन 'आदिरन्त्येन०' इति सूत्रे 'स्व' शब्दाऽनुवृत्ति-स्वीकारो व्यर्थः ।

४—'आदिरन्त्येन०' इति सूत्रे 'स्व' शब्दाननुवृत्तिपक्षे वैयाकरणानां विचारनिदर्शनम् ।

५—अपाणिनीयव्याकरणे सूत्रस्वरूपप्रदर्शनं विचाराश्च ।

६—युक्तायुक्तत्वसमीक्षणम् ।

सूचनात् सूत्रमिति संक्षेपिष्ठता भवति तत्र वर्णेनाप्यनर्थकेन न भवितव्यमिति महाभाष्यम् । एवं तावद् विभिन्नैरुपायैः पाणिनिना संक्षेपविधिरवलम्बितः सूत्रप्रणयने । तत्रानुवृत्तिरप्यैकतमा । सूत्रे स्वदृष्टं पदं सूत्रान्तरादनुवर्त्यते । तदुक्तं परिभाषापाठे—'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' इति 'आदिरन्त्येन सहेता' ( १।१।७१ ) इति 'सूत्रे स्वं रूपं शब्दस्याशब्दसंज्ञा' ( १।१।६८ ) इति सूत्रतः स्वशब्दस्यानुवृत्तिरस्ति न वेति विवदन्ते वैयाकरणाः ।

पाणिनीयस्य व्याकरणस्य स्वोपज्ञता प्रत्याहारकल्पनामाधारी कृत्यैव प्रथिता । न ततः प्राग् भारतीये वाङ्मये प्रत्याहारस्यैतादृशं स्वरूपं निरूपणं वा दृश्यते । यद्यपि प्राग् अक्षरमुष्टिकाया भूतविद्याया वा व्यवहार आसीद् इति ज्ञायते कामशास्त्रस्य जयमङ्गलाटीकातः, तथापि तत्र सम्पूर्णस्य पदस्य सङ्केत-स्तदाद्याक्षरबलेन विधीयते स्मेति ज्ञायते । यथा 'चैत्रम्' इत्यस्य कृते 'चै' इति

  

'वैशाख:' इत्यस्य स्थाने 'वै०' इति। ज्योतिषशास्त्रीयेषु ग्रन्थेष्वपीयं सरणिः समाश्रिता पदसंक्षेपरूपेति। एवं तावत् पाणिनेरियमाद्या प्रत्याहारशैली तत्रैतादृशो विवादो नैसर्गिकः, अतो वैयाकरणानां मतान्युपस्थाप्य युक्तायुक्तत्वमन्ते विचारयिष्यते।

अत्र सूत्रे 'आदिः', 'अन्त्येन', 'सह', 'इता' इति चत्वारि पदानि। अन्त्येनेता सह आदिरिति सूत्रोपात्तशब्दार्थः। भट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुद्यां तु 'अन्त्ये नेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात्' इत्यर्थः प्रदर्शितः। यद्यपि मध्यगानामर्थकरणविषये न कश्चिद् शब्दनिर्देशः सूत्रे कृतः, तथापि 'संज्ञायाः पारार्थ्यनिर्णयात्' इति नियमेनाऽऽद्यन्तशब्दतो मध्यगानां बोधो भवति। आद्यन्तशब्दौ पृथक् पृथक् अवयवपरकौ सम्मिलितौ तु समुदायाक्षेपं करिष्यतः। समुदिताद्यन्तशब्दयोरेकस्मिन् लक्ष्ये युगपत् प्रयोगो भवितुं नार्हति। अतः प्रतिवर्णम् अवतरन्त्याः संज्ञाया मध्यगवर्णे विश्रान्तिः आद्यवर्णस्यान्तवर्णस्य वा ग्रहणं निर्दिष्टरीत्या न सभाव्यते। तेन 'स्वं रूपं०' (१।१।६८) इति सूत्रतः स्वं पदमनुवर्त्य 'सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वेन आदेर्ग्रहणं करणीयम्। अन्त्यस्य ग्रहणं तु स्वमितिपदेन न स्यात्। यतो हि 'सहयुक्तेऽप्रधाने' (२।३।१९) इति सूत्रेऽप्रधानेति तृतीया विधानेनान्त्येनेत्यस्याप्रधानेन स्वपदेन सहैकवाक्यता। तेनान्त्यस्य ग्रहणम्। ततो बोधकक्रियायाः स्यात् क्रियाया वाऽध्याहारे सति सूत्रस्योक्तार्थः सम्पद्यते। एतत्तात्पर्यमूलक एव भट्टोजिदीक्षितस्य[1] पक्षः।

उपस्थापितपक्षस्य मूलं काशिकायाम्,[2] पदमञ्जर्याम्,[3] प्रदीपे,[4] रूपावतारे[5]

१. प्रौढमनोरमायाम् 'आदिरन्त्येन०' इति सूत्रे ३६-३७ तमपृष्ठयोः।

२. काशिकायाम् 'आदिरन्त्येन०' इति सूत्रे २५० तमे पृष्ठे।

३. पदमञ्जर्याम् 'आदिरन्त्येन०' इति सूत्रे २५० तमे पृष्ठे।

४. प्रदीपे 'आदिरन्त्येन०' इति सूत्रे ३८० तमे पृष्ठे।

५. रूपावतारे 'आदिरन्त्येन०' इति सूत्रे द्वितीये पृष्ठे।

प्रक्रियाकौमुद्याम्[1], प्रसादाख्यायां[2] तट्टीकायां चेत्यादिग्रन्थेषु लभ्यते। सिद्धान्तकौमुद्याष्टीकायां तत्त्वबोधिन्यां[3] तु भट्टोजिदीक्षितमतमेव समर्थितम्।

हरिदीक्षितमतानुसारेण[4] तु 'अच्च घेः' (७।३।११९) इति सूत्रे 'घि'—शब्दस्य 'घि' संज्ञा गुणादिकार्यं च विहितम्। तेन संज्ञायाः पारार्थ्यमात्रावबोधकतेति नियमस्तु न, किन्तु सा तु पारार्थ्यबोधनपूर्वकं स्वार्थमपि बोधयत्येव। अत आदेः संज्ञासिद्ध्यर्थं स्वशब्दानुवृत्तिर्निरपेक्षा। यद्यप्यादेः संज्ञावद् अन्त्यस्यापि संज्ञया भाव्यम्, तथापि पाणिनिप्रभृतिभ्य आचार्येभ्यस्तस्य संज्ञा न रोचते। लक्ष्ये तस्य संज्ञासत्वे दोषः स्यात्। यतो हि प्रत्याहारेऽन्त्यवर्णानां ग्रहणे 'अच्' प्रत्याहारे ककारादिव्यञ्जनवर्णानामपि ग्रहः। तदा 'मुखनासिकावचनोऽनुनासिकः' (१।१।८) इत्यत्रानुनासिकपदे यः सकारोत्तरवर्तीकारः, तदव्यवहितोत्तरम् अज्रूपककारं मत्वा 'इको यणचि' (६।१।७७) इति यणापत्तिप्रसङ्गः। इत्थं सर्वत्रैव लक्ष्ये व्यतिक्रमा भविष्यन्ति।

रत्नकारसमर्थितमतस्याऽनुमोदनमुद्धरिष्यमाणमहाभाष्यकारवचनाद्[5] भवति।

'सम्बन्धिशब्दाः यथा मातरि वर्तितव्यम्, पितरि शुश्रूषितव्यम्, न चोच्यते स्वस्यां मातरि, स्वस्मिन् पितरि। सम्बन्धाच्च गम्यते या यस्य माता यो यस्य पिता, एवमिहापि 'आदिः', 'अन्त्यः' इति सम्बन्धिशब्दावेतौ। यद्यपि भाष्येऽपि स्वस्य च रूपस्येत्युक्तम्, तथाप्युक्तभाष्यवचसा तस्य फलितार्थकथनमेव।

नागेशेन[6] शब्देन्दुशेखरे चाननुवृत्तिपक्ष एवाऽनुमोदितः। रत्नटीकाप्रटी-

---

१. प्रक्रियाकौमुद्याम् 'आदिरन्त्येन०' इति सूत्रे अष्टादशे पृष्ठे।
२. प्रसादटीकायाम् 'आदिरन्त्येन०' इति सूत्रे अष्टादशे पृष्ठे।
३. सिद्धान्तकौमुद्याः तत्त्वबोधिनीटीकायाम् 'आदिरन्त्येन०' इति सूत्रे चतुर्थे पृष्ठे।
४. शब्दरत्ने 'आदिरन्त्येन०' इति सूत्रे ३७-३९ तमपृष्ठपर्य्यन्तम्।
५. महाभाष्ये 'आदिरन्त्येन०' इति सूत्रे ३८० तमे पृष्ठे।
६. लघुशब्देन्दुशेखरे 'आदिरन्त्येन०' इति सूत्रे १५ तमे पृष्ठे।

कारैर्भैरवमिश्रवैद्यनाथपायगुण्डेप्रभृतिविद्वद्भिश्चास्य पक्षस्य समर्थनं भैरव्यां[1] भावप्रकाशे[2] च कृतम् ।

किं बहुना, पाणिनीयव्याकरणेतरव्याकरणेष्वप्यादेर्ग्रहणार्थं स्वपदोपादानं यत्नान्तरं वा न लक्ष्यते । किन्त्वादिवर्णस्यापि सुतरां बुद्धावरोहणम् । यथा—शाकटायनव्याकरणे[3]—'सात्मेतेत्' इति सूत्रे, जैनेन्द्रव्याकरणे[4]—'अन्त्येनेतादिः' (१।१।७३) इति सूत्रे, सरस्वतीकण्ठाभरणे[5]—'आदिरितान्तेन समध्यः' इति सूत्रे, मुग्धबोधे[6]— 'आद्यन्ताभ्याम्' (११) इति सूत्रे सारस्वते[7], सिद्धान्तचन्द्रिकायां[8] च तत्तत्सूत्रे समवलोक्यते ।

समीक्षात्मकदृष्ट्याप्यननुवृत्तिपक्ष एवौचित्यमावहति । महाभाष्ये[9] 'स्वं रूपम्' (१।१।६७) इति सूत्रस्य खण्डने सङ्केतः । सत्यां प्रत्याख्यातावस्थायामनुवृत्तिप्रसङ्ग एव नोदेति । एवं 'आदिरन्त्येन सहेता' (१।१।७१) इत्यस्मिन् सूत्रे मर्यादाऽभिविध्योर्मध्येऽभिविधिपक्षोऽङ्गीकृतः प्रतीयते, न तु मर्यादापक्षः । मर्यादापक्षस्योरीकरणे सूत्रगतस्यादिशब्दस्य ग्रहणं न स्यात् । एवमुआचारादप्रधानत्वाद् लोपश्च वलवत्तर इति भणित्याऽन्त्यस्याग्रहणम् ।



---

१. भैरव्याम् 'आदिरन्त्येन०' इति सूत्रे ३७—३९ तमपृष्ठपर्य्यन्तम् ।
२. भावप्रकाशे 'आदिरन्त्येन०' इति सूत्रे ३७—३९ तमपृष्ठपर्य्यन्तम् ।
३. शकटायने प्रथमे पृष्ठे ।
४. जैनेन्द्रव्याकरणे द्वितीये पृष्ठे ।
५. सरस्वतीकण्ठाभरणे ६५ तमे पृष्ठे ।
६. मुग्धबोधे दशमे पृष्ठे ।
७. सारस्वते षष्ठे पृष्ठे ।
८. सिद्धान्तचन्द्रिकायाम्, द्वितीये तृतीये च पृष्ठे ।
९. महाभाष्ये 'स्वं रूपम्०' इति सूत्रे ३६८—३६९ तमयोः पृष्ठयोः ।

## क्रियावाचित्वार्थविचारः

१—'भूवादयो०' इति सूत्रार्थप्रदर्शनम् ।

२—भट्टोजिदीक्षितमतेन 'याः पश्यसि' इति वाक्ये 'याः' इत्यस्य धातुत्व-वारणार्थं क्रियावाचित्वार्थप्रदर्शनम् ।

३—शब्दरत्नकारमतेन विकल्पार्थकस्य 'वा' इति शब्दस्य धातुत्ववारणार्थं क्रियावाचित्वार्थप्रदर्शनम् ।

४—क्रियावाचित्वार्थं स्वीकारे उभयपक्षे फलदानविषये वैयाकरणानां विचारदानम् ।

५—अपाणिनीयव्याकरणे सूत्रस्वरूपं क्रियावाचित्वार्थस्य फलदाने विचारश्च ।

६—युक्तायुक्तत्वसमीक्षणम् ।

७—स्वमतप्रदर्शनम् ।

'भूवादयो धातवः' (१।३।१) इति सूत्रस्यार्थः—'भू, वाऽऽदयः क्रियावाचिनो धातुसंज्ञा स्युः' इति ।

तत्र भूश्च वाश्चेति द्वन्द्वः । आदिशब्दश्च व्यवस्थाप्रकारवाची, तयोरेकशेषः । भुवो आदियेषाम् इति बहुव्रीहिः । भूप्रभृतयो वा-सदृशाः । एवं भूनिष्ठाऽऽद्यवयव-निरूपकाः, वा- प्रतियोगिकसादृश्यविशिष्टा धातुसंज्ञका भवन्ति ।

'भू' इत्यस्य द्वावर्थौ भूमिः, सत्ता च । वाशब्दो विकल्पार्थको गत्यर्थकश्च । द्विविधस्यापि वा-शब्दस्य लिङ्गसंख्यादावन्वयो न भवति । अतः 'वा' शब्दोऽसत्त्ववाची । तत्साहचर्येण 'भू' शब्दोऽप्यसत्त्ववाची सत्ताद्यर्थक एव गृह्यते । सत्ता च क्रियावाचिनी अतो वाशब्दोऽपि साहचर्येण क्रियावाच्येव गृह्यते । तेन क्रियावाचकत्वे सति भूवादिगणपठितत्वं धातुत्वमित्यर्थः फलितः ।

अत्र सूत्रे भूवादिगणपठितत्वमेतावन्मात्रार्थे 'याः पश्यसि' इत्यादौ 'याः' इत्यस्य धातुसंज्ञायां 'आतो धातोः' (६।४।१४०) इत्यालोपापत्तिरिति मनोरमाशयः[1] ।

---

१. प्रौढमनोरमायाम् 'भूवादयो०' इति सूत्रे ८६–९० तमपृष्ठपर्यन्तम् ।

शब्दरत्नकारमतेन[१] तु 'आतोऽनाप०' इति वार्त्तिकमतेन 'याः पश्यसि' इत्यत्र न कश्चिद् दोषः। तस्माद् विकल्पार्थकस्य 'वा'-शब्दस्य धातुसंज्ञायां प्रातिपदिकत्वाभावे सुबनुत्पत्तौ पदत्वाभावेन 'देवदत्तः पचति वा गच्छति' इत्यादौ 'तिङ्ङ तिङः' ( ८।१।२८ ) इत्यनेन निघातो न स्यात्। क्रियावाचिग्रहणे तु विकल्पार्थकस्य 'वा' शब्दस्य साध्यत्वेन प्रतीयमानाभावेन न क्रियावाचित्वम्, अतो वा-शब्दस्य धातुसंज्ञावारणमेव क्रियावाचित्वस्य मुख्यं फलं ज्ञेयम्।

भाष्ये[२]—निपातरूपे वाशब्दे 'निपातस्यानर्थकस्य प्रातिपदिकत्वं चोदितम् इति वार्त्तिकेऽनर्थकग्रहणाभावेन दोषं परिहृत्य 'याः पश्य' इत्यत्र 'अतोऽनाप इति वार्त्तिकेन दोषं निराकृत्य क्रियावाचित्वार्थस्य फलं 'दिव' इत्यव्युत्पन्नस्य प्रातिपदिकस्य स्वाद्युत्पत्त्यभावो निर्दिष्टः। प्रदीपेऽपि[३]—'अधातुरिति प्रातिपदिकसंज्ञानिषेधन्निरनुबन्धकात् सोरसंभवः। उभयसंभवे चास्याः परिभाषायाः प्रवृत्तिः 'इत्युक्त्या भाष्योक्तमनुमोदितम्। उद्योतेऽपि[४] तत्परकमेव व्याख्यानम्।

न्यासे[५], पदमञ्जर्याम्[६], प्रक्रियाकौमुद्याम्[७], तटीकाप्रसादे[८], प्रक्रियासर्वस्वेति[९] ग्रन्थेषु च 'यावत् सिद्ध० इति कारिकोपस्थापनपूर्वकं क्रियावाचित्वार्थं स्वीकृत्य या, वा, दिव, प्रभृतिधातुसमानशब्दानाम् अक्रियावचनानां धातुत्वाभाव इति फलरूपेणोपात्तम्।

---

१. शब्दरत्ने 'भूवादयो०' इति सूत्रे ८६–९० तमपृष्ठपर्य्यन्तम्।
२. भाष्ये 'भूवादयो०' इति सूत्रे ११२–११४ तमपृष्ठपर्य्यन्तम्।
३. प्रदीपे 'भूवादि०' इति सूत्रे ११२-११४ तमपृष्ठपर्य्यन्तम्।
४. उद्योते 'भूवादि०' इति सूत्रे ११२-११४ तमपृष्ठपर्य्यन्तम्।
५. न्यासे 'भूवादि० इति सूत्रे ३९० तमे पृष्ठे।
६. पदमञ्जर्याम् 'भूवादि०' इति सूत्रे ३८९ तमे पृष्ठे।
७. प्रक्रियाकौमुद्याम् 'भूवादि०' इति सूत्रे द्वात्रिंशे पृष्ठे।
८. प्रसादे 'भूवादि०' इति सूत्रे त्रयस्त्रिंशे पृष्ठे।
९. प्रक्रियासर्वस्वे 'भूवादि०' इति सूत्रे अष्टादशे पृष्ठे।

शब्देन्दुशेखरे[1], भैरव्याम्[2], भावप्रकाशे[3] च विकल्पार्थकस्य 'वा'—शब्दस्य धातुत्ववारणं क्रियावाचित्वस्य फलमुपस्थापितम्।

सरस्वतीकण्ठाभरणे[4] 'भूवादिः क्रियावचनो धातुः' इति सूत्रम्। तत्र तट्टीकाकारेण नारायणशास्त्रिणा भूः, द्यौः, इत्यादौ धातुसंज्ञा न भवति क्रियावाचित्वार्थस्वीकारे इति निगदितम्। काशिकाकारेण[5] धातुशब्दः पूर्वाचार्याणां संज्ञा ते च क्रियावचनानां कृतवन्तः। शाकटायने 'क्रियार्थो धातुः' (१।१।२२) इति सूत्रम्। तत्र क्रियापरिणतिः प्रवृत्तिर्वा सा अर्थो वाच्यो यस्य स शब्दो धातुसंज्ञो भवति इत्यर्थद्वारा क्रियावाचित्वं स्वीकृतम्।

सारस्वते[6]—'भ्वादिः' इति सूत्रस्वरूपम्। तत्र प्रसादनाम्न्यां टीकायां क्रियावाचित्वस्य फलं याः, फलं याः, वाः, दिव,—प्रभृतीनां धातुत्वनिवृत्तिरेवोक्तम्।

मुग्धबोधे[7] 'भ्वादिर्धुः' (११) इति सूत्रस्वरूपम्। तत्रापि पृथ्वीवाचकभू-शब्दस्य 'धु'—संज्ञाया निरसनाय सत्ताद्यर्थकस्य ग्रहणम्।

अत्र मतद्वये समीक्षात्मकदृष्ट्या विचारे 'याः पश्यसि' इत्यत्र 'या' इति शब्दस्य विकल्पार्थक वा शब्दस्य च क्रियावाचीत्यर्थकरणाभावेऽपि न दोषः, किन्तु 'दिव' इत्यव्युत्पन्नप्रातिपदिकस्य धातुत्वापत्तिरितीदं फलमुक्तं भाष्ये। सरस्वतीकण्ठाभरणस्य टीकाकारेण, वोपदेवेन च पृथ्वीवाचकस्य 'भू' शब्दस्य धातुत्वपत्तिः प्रदर्शिता। अत्र क्रियापदेन कारकाणां प्रवृत्तिविशेषः, अथवा

१. लघुशब्देन्दुशेखरे 'भूवादि०' इति सूत्रे त्रयोश्चत्वारिंशे ४४ पृष्ठे च।
२. भैरव्याम् 'भूवादि०' इति सूत्रे ८६–९० तमपृष्ठपर्य्यन्तम्।
३. भावप्रकाशे 'भूवादि०' इति सूत्रे ८६–९० तमपृष्ठपर्य्यन्तम्।
४. सरस्वतीकण्ठाभरणे 'भूवादिः०' इति सूत्रे पञ्चमे पृष्ठे।
५. काशिकायाम् भूवादिः०' इति सूत्रे ३८९ तमे पृष्ठे।
६. सारस्वते प्रसादटीकायाम् उत्तरार्धे द्वितीये पृष्ठे।
७. मुग्धबोधे 'भ्वादिर्धुः' इति सूत्रे विंशे पृष्ठे।

  

भूत भविष्यद्-वर्तमानकाला येन व्यज्यन्ते तस्य ग्रहणं भवति। इत्थं दीक्षितेन रत्नकारेण च क्रियावाचिनो यत् फलमुपस्थापितं तत् फलकोटा नायाति। किन्तु मन्मते सामान्येन 'समानशब्दानाम्' क्रियावचनारिक्तानां धातुत्ववारणमेव फलम्। यद्यपि समानशब्दस्य धातुत्ववारणे या—वादीनां कृते भाष्यविरोधो भवति, तथापि तत्र 'अनापः' इति ज्ञापनदाऽनर्थकाभावकरणे च गौरवं भवति। एवं 'आतो धातोः' (६।४।१४०) इति सूत्रे निपातनबलेन, योगविभागबलेन वा कार्यसिद्धौ 'अनापः' इति वचनस्य प्रत्याख्यानं च दृश्यते। अत एव सरलाकारेण गोपालशास्त्रिणा—वार्त्तिकसत्त्वे 'याः पश्य' इति क्रियावचनस्य फलं न भवति। प्रत्याख्याते तु भवतीति फलभेदं प्रदर्श्य तद्वारणाय 'भाष्यमते धातो रिति विभक्तसूत्रारम्भसामर्थ्येन 'आतः' इति पूर्वसूत्रस्य अनाबन्त एव प्रवृत्तेः स्वीकारेण भाष्यमतेऽपि दोषाभावात् इत्युक्तम्। वस्तुतस्तु 'क्रियावाची' इति तु धातुविषये प्राचां संज्ञा। तामेवाऽऽदाय वृत्तिकृता—'क्रियावचनो धातुः' इत्युच्यते। फलं तु पूर्वोक्तमेव।

---

## 'गतिबुद्धि०' (१।४।५२) इति सूत्रस्य नियमार्थत्वं विध्यर्थं त्वं वेति विचारः

१—सूत्रार्थप्रदर्शनम्।

२—भट्टोजिदीक्षितनयेन 'गतिबुद्धि०' इति सूत्रस्य विध्यर्थत्व निदर्शनम्।

३—शब्दरत्नकारमतेन 'गतिबुद्धि०' इति सूत्रस्य नियमार्थत्वप्रदर्शनम्।

४—'गतिबुद्धि०' इति सूत्रस्य विध्यर्थत्वे वैयाकरणानां विचारदानम्।

५—'गतिबुद्धि०' इति सूत्रस्य नियमार्थत्वप्रकाशने शाब्दिकानां सम्मतिः।

६—अपाणिनीयव्याकरणे सूत्रस्वरूपं प्रकृतविषये भावप्रकाशनञ्च।

७—युक्तायुक्तत्वसमीक्षणम्।

गत्यर्थकबुद्ध्यर्थकभोजनार्थशब्दकर्मकाकर्मकधातूनामण्यन्तावस्थायां यः कर्ता, तस्य ण्यन्तावस्थायां कर्मसंज्ञा भवतीति सूत्रार्थः।

अस्य सूत्रस्य नियमार्थत्वं विध्यर्थत्वं वेतिविचारे 'आकडार०' (१।४।१) इति सूत्रे भाष्ये 'परं कार्यम्' इति पाठे 'गत्यादीनां ण्यन्तानां कर्मकर्तृसंज्ञापि प्राप्नोति। आरम्भसामर्थ्यात् कर्मसंज्ञा, परं कार्यत्वात् कर्तृसंज्ञा प्राप्नोति' इत्युक्तम्।

एवम् 'प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता' इति भर्तृहरिणा च निगदितम्। तेन प्रयोज्यकर्तुरुपजीव्यत्वेन चास्य सूत्रस्य विध्यर्थत्वमेवोचितमिति दीक्षिताशयः[1]।

शब्दरत्नकारस्तु[2] 'आकडार०' (१।४।१) इति सूत्रस्थस्य 'आरम्भसामर्थ्यात्' इत्यस्य एतन्नियमारम्भसामर्थ्यात् इत्यर्थकरणेन 'पाचयति देवदत्तेन यज्ञदत्तः' इत्यादौ कर्मसंज्ञाभावप्रदर्शनेन कर्तृग्रहणं धात्वर्थप्रधानीभूतव्यापाराश्रयरूपस्वतन्त्रोपलक्षणत्वेन प्रयोजकव्यापारेऽन्याधीनत्वलक्षणार्थप्राधान्यस्य शाब्दाधान्यस्य च प्रयोजकव्यापारसत्त्वेन तदनुरोधिकर्मत्वस्य सर्वतो बलवत्त्वेन 'कर्त्तुरीप्सित' (१।४।४९) इत्यनेनैव कर्मत्वासिद्धौ गत्यादिसूत्रम् अणौ कर्त्तुर्णौ यदि कर्मसंज्ञा स्यात् तर्हि गत्यर्थादीनामेवेति नियमार्थत्वेन प्रतिपादितवान्।

काशिकाकारेण[3], न्यासकारेण[4], पदमञ्जरीकारेण[5], प्रक्रियासर्वस्वकारेण[6] च यथा सूत्रार्थं प्रदर्शितम्, तेन विध्यर्थत्वं सूच्यते।

प्रसादकारेण[7] 'प्रयोजकव्यापारेण व्याप्यमानस्य यदि कर्मसंज्ञा स्यात्, तर्हि गत्यर्थादीनामेव स्यान्नान्येषाम् इति नियमाकारः। विश्वेश्वरसूरिणा सिद्धान्त-

१. 'गतिबुद्धि०' इति सूत्रे प्रौढ़मनोरमायां ८४७–८६० तमपृष्ठपर्य्यन्तम्।
२. 'गतिबुद्धि०' इति सूत्रे शब्दरत्ने ८४७–८६० तमपृष्ठपर्यन्तम्।
३. 'गतिबुद्धि०' इति सूत्रे काशिकायां ५७७ तमे पृष्ठे।
४. 'गतिबुद्धि०' इति सूत्रे न्यासे ५७७ तमे पृष्ठे।
५. 'गतिबुद्धि०' इति सूत्रे पदमञ्जर्यां ५७७–५७८ तमपृष्ठयोः।
६. 'गतिबुद्धि०' इति सूत्रे प्रक्रियासर्वस्वे १४८ तमे पृष्ठे।
७. 'गतिबुद्धि०' इति सूत्रे प्रसादटीकायां ३९३ तमे पृष्ठे।

  

सुधानिधौ 'णिजर्थेनाप्यमानस्य यदि भवति, तर्हि गत्यर्थादीनामेव' इति भिन्नो नियमाकारो दर्शितः।

नागेशेन[1] 'हेतुमति च' (३।१।२६) इति सूत्रस्थम् 'णिजर्थेनाप्यमानस्य यदि भवति, तर्हि गत्यर्थादीनामेव' इति भाष्यमुपस्थापयता नियमार्थत्वं निगदितम्।

भैरवीकारेण[2]—'गत्यर्थानामणौ कर्तुर्णौ यदि भवति, तदा कर्मसंज्ञैव' इत्युपपादितम्। भावप्रकाशकारेण[3] च्यास्यानुमोदनं कृतम्।

सरस्वतीकण्ठाभरणे[4]—अस्य सूत्रस्य स्थाने 'गतिज्ञानप्रत्यवसानार्थशब्द-क्रियाकर्मकश्रुद्दृशिनामणि कर्ताणौ' इति सूत्रस्वरूपम्। अस्य टीकाकारेण नारायणशास्त्रिणा—

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः।
नियमात् कर्मसंज्ञायाः स्वधर्मेण विधीयते॥

इत्यादिप्रमाणं प्रदर्शयता 'प्रयोजकव्यापारेण व्याप्यमानस्य गत्यर्थादि-सम्बन्धिन एव प्रयोज्यकर्तुः कर्मसंज्ञा नान्यधातुः सम्बन्धिनः' इति नियमस्वरूपं प्रकटितम्।

हैमव्याकरणे[5]—'गतिबोधाहारार्थ - शब्दकर्मनित्याऽकर्मण्यमनीयवाद्यदिह्वा शब्दाय क्रन्दाम्' (२।२।५) इति सूत्रस्वरूपम्।

अत्रोपस्थापितानेकग्रन्थानुसारेण समीक्षात्मकनयेन विचारे कृते विधि-नियम-मध्ये, नियमपक्ष एव सबलः। 'कतुरीप्सित०' (१।४।४९) इति तु सामान्यं सूत्रम्। तेन सामान्येन प्रयोज्यकर्तुः कर्मसंज्ञाप्राप्ताऽनेन नियम्यते। अस्य विध्यर्थत्वं

---

१. 'गतिबुद्धि०' इति सूत्रे लघुशब्देन्दुशेखरे ४६३ तमे पृष्ठे।
२. 'गतिबुद्धि०' इति सूत्रे भैरव्यां ८४७-८६० तमपृष्ठपर्यन्तम्।
३. 'गतिबुद्धि०' इति सूत्रे भावप्रकाशे ८४७-८६० तमपृष्ठपर्यन्तम्।
४. 'गतिज्ञान०' इति सूत्रे सरस्वतीकण्ठाभरणे चतुर्दशे पृष्ठे।
५. 'गतिबोधा०' इति सूत्रे हैमव्याकरणे २०९ तमे पृष्ठे।

तु तदा भवेत्, यदाऽन्येन सूत्रेणास्य धातोः कर्मत्वं न सिद्धयेत् । एवं प्रकृतसूत्रस्य विध्यर्थत्वस्वीकारेऽन्येभ्योऽपि धातुभ्यः कर्मसंज्ञा-सिद्धौ 'गतिबुद्धि०' ( १।४।५२ ) इति सूत्रमेव व्यर्थं स्यात् । 'शाब्दप्राधान्यम् आर्थप्राधान्यमुभयविप्राधान्यम्' इति यद् रत्नकृता प्रदर्शितम्, तेन प्राधान्यं सर्वतो बलवत्, प्रयोज्यकर्तुः कर्मसंज्ञां प्रति प्रयोजकव्यापाराधीनत्वाद् उपजीव्यत्वाभावेन—

'प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता ।'

इति कारिकायास्तु भैरवीकारप्रदर्शितनियमाकारेण सङ्गतिः । 'गत्यादेर्विधितोचिता' इत्यस्य नियमविधानतः कर्मसंज्ञैवोचितेति तात्पर्यम् । अन्यथा 'गुणक्रियायाम्' इति कारिकातो विरोधो जायेत । अत एव 'हेतुमति च' ( ३।१।२६ ) इति सूत्रे भाष्ये[1]—'पाचयत्वोदनं देवदत्तो यज्ञदत्तेन इति प्रयोज्ये कर्तरि कर्मसंज्ञाप्राप्नोतीति गतिबुद्धि० इत्येतन्नियमार्थं भविष्यति' इत्युक्तम् । प्रदीपे[2] च—'न च स्वव्यापारापेक्षया स्वातन्त्र्यात् परत्वात् कर्तृसंज्ञा प्राप्नोतीति युक्तं वक्तुम् । प्रयोज्यव्यापारस्याप्राधान्यात् प्रधानव्यापारसंनिधौ च प्रधाननिमित्तस्य कार्यस्य युक्तत्वात् । नियमेन तु प्रधानप्रयुक्त कार्यव्यावृत्तौ गुणनिमित्तकार्यसद्भावात् कर्तृत्वं भवत्येव' इत्यादियदुक्तं तत् संगतम् ।

---

## 'लक्षणेत्थम्०' ( १।४।९० ) इत्यादिसूत्रफलविचारः

१—सूत्रार्थप्रदर्शनम् ।

२—भट्टोजिदीक्षितमतेन 'लक्षणेत्थम्०' इति सूत्रस्य 'वृक्षं वृक्षं प्रति सिन्चति' इत्यत्र षत्वाभावमात्रफलनिदर्शनम् ।

३—शब्दरत्नकारनयेन 'वृक्षं वृक्षं प्रति सिन्चति' इत्यत्र षत्वाभावः द्वितीयोत्पत्तिश्च 'लक्षणेत्थम्०' इति सूत्रस्य फलम् ।

---

१. 'हेतुमति च' इति सूत्रे भाष्ये ५३-५५ तमपृष्ठपर्यन्तम् ।

२. 'हेतुमति च' इतिसूत्रे प्रदीपे ५३-५५ तमपृष्ठपर्यन्तम् ।

४—'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र 'लक्षणेत्थम्०' इति सूत्रेण द्वितीया षत्वाभावश्चेत्यत्र वैयाकरणानां विचार प्रकाशनम् ।

५—अपाणिनीयव्याकरणे सूत्रस्वरूपं तथा विचार प्रकटनम् ।

६—'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र 'लक्षणेत्थम्०' इति सूत्रस्य षत्वाभावमात्रफलमित्यत्र शाब्दिकानां सम्मतिदानम् ।

७—युक्तायुक्तत्वसमीक्षणम् ।

८—स्वमतप्रदर्शनम् ।

'कर्मप्रवचनीयाः' ( २।३।८ ) इतिसूत्राधिकारे पठितमिदं सूत्रम् । तेन लक्षण इत्थंभूताख्याने, भागे, वीप्सायां च द्योत्ये प्रति परि, अनु इत्येतेषां कर्मप्रवचनीयसंज्ञास्यादिति सूत्रार्थः । तत्र या या संज्ञा भवति, सा सा फलवतीति नियमे कर्मप्रवचनीयसंज्ञायाः किं फलमिति जिज्ञासायाम्—

भट्टोजिदीक्षितमतेन[1] 'वृक्षस्य प्रति सेचनम्' इत्यादौ षष्ठीदर्शनेन भाष्ये लक्षणादीनां विषयतयोपात्तत्वेन, परिशब्दस्य क्रियया सम्बन्धत्वेन च सेकक्रियानिरूपितकर्मत्वस्य वृक्षेऽवस्थितो कर्मणि द्वितीया ( २।३।२ ) इत्यनेनैव द्वितीया भविष्यति, कर्मप्रवचनीयसंज्ञायाः फलं षत्वाभावमात्रम् । तेन 'प्रतिसिञ्चति' इत्यत्र 'उपसर्गात्०' ( ८।३।६५ ) इत्यनेन षत्वं नेत्युपस्थापितम् ।

शब्दरत्नकारमतेन[2] प्रतेः क्रियाविशेषणत्वेन 'कर्मक्रियां प्रोक्तवन्तः' इत्यन्वर्थत्वेन कर्मप्रवचनीयसंज्ञैव न स्यात् । तस्मात् कर्मत्वाविवक्षायामपि द्वितीयार्थं संज्ञाया आवश्यकत्वेन कर्मप्रवचनीयसंज्ञाविधानफलं द्वितीयोत्पत्तिः षत्वाभावश्च ।

प्रकृतसूत्रभाष्ये[3] समाधानरूपेण 'कर्मप्रवचनीय०' ( २।३।८ ) इत्यनेन द्वितीया-विधानार्थं 'लक्षणेत्थं०' ( १।४।९० ) इति सूत्रमुक्तम् । तेन 'वृक्षं प्रति विद्योतते विद्युत्' इत्यादौ द्वितीया सिद्ध्यति ।

---

१. 'लक्षणेत्थम्०' इति सूत्रे प्रौढमनोरमायाम् ८७४–८७५ तमपृष्ठयोः ।
२. 'लक्षणेत्थम्०' इति सूत्रे शब्दरत्ने ८७४—८७६ तमपृष्ठपर्य्यन्तम् ।
३. 'लक्षणेत्थम्०' इति सूत्रे महाभाष्ये २९५ तमे पृष्ठे ।

प्रदीपे[1] 'द्युत्' धातोरकर्मकत्वेन 'कर्मणि०' ( २।३।२ ) इति द्वितीयाप्राप्तिः । तत्र द्वितीयाविधानार्थं प्रति सिञ्चति' इत्यत्र द्वितीया पत्वाभावश्चेति निगदितम् ।

शाकटायनव्याकरणेऽस्य[2] सूत्रस्य स्थाने 'वीप्सलक्षणेत्थं भवनेस्वभिन्ना' ( १।३।१०१ ) इति सूत्रेण चान्द्रव्याकरणे च 'लक्षणवीप्सेत्थंभूतेष्वभिन्ना' ( २।१।५४ ) इतिसूत्रेण द्वितीयैव विधीयते ।

भट्टोजिदीक्षितोक्तपक्षस्य स्वरूपं तत्पूर्ववर्तिन आचार्याः न्यासकाराः[3], पदमञ्जरीकाराः,[4] प्रक्रियाकौमुद्याः प्रसादटीकाकाराश्च[5] प्रदर्शितवन्तः ।

अत्र मतद्वये समीक्षात्मकदृष्ट्या विचारे कृते तु रत्नकारमतमेव युक्तं प्रतिभाति । यद्यपि मनोरमाकारेण 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र 'कर्मणि द्वितीया' ( २।३।२ ) इत्यनेन द्वितीयेति प्रतिपादितम्, तथापि 'वृक्षं प्रति विद्योतते विद्युत्' इत्यत्र द्युत्धातोरकर्मकत्वेन कर्मत्वाभावे कर्मणि द्वितीयेति द्वितीयाऽप्राप्तौ तत्र द्वितीयोत्पत्तिश्चास्य सूत्रस्य फलम् । भाष्यकारेण कैयटेन च द्वितीयोत्पत्तिरेव मुख्यं फलमुक्तम् । नागेशेन[6] तु सकर्मकधातोरप्यकर्मकत्वविवक्षायां द्वितीयाकरणार्थमिदमित्युक्तम् । षत्वाभावमात्रं कर्मप्रवचनीयसंज्ञायाः फलमिति स्वीकारे अस्य सूत्रास्यास्य भक्तो विष्णुं प्रति, परि, अनु, वा, लक्ष्मीर्हरिं प्रति, परि, अनु वा, 'वृक्षं प्रति विद्योतते विदयुत्' इत्याद्युदाहरणदानस्यासंगतिः स्यात् । यतो ह्यत्र कर्मप्रवचनीयसंज्ञाभावेऽपि षत्वस्य विषयाभावेन न क्षतिः । तेनोक्तस्थले दीक्षितमतेऽपि द्वितीयोत्पत्तिरेवास्याः फलम् । अनेन सूत्रेण कर्म-

१. 'लक्षणेत्थम्०' इति सूत्रे प्रदीपे २९५ तमे पृष्ठे ।
२. 'वीप्सलक्षणेत्थम्', इति सूत्रे शाकटायने ९३ तमे पृष्ठे ।
३. 'लक्षणेत्थम्०' इति सूत्रे न्यासे ६२०—६२२ तमपृष्ठपर्य्यन्तम् ।
४. 'पदमञ्जर्यां' लक्षणेत्थम्०' इति सूत्रे ६२०—६२२ तमपृष्ठपर्य्यन्तम् ।
५. 'लक्षणेत्थम्०' इति सूत्रे प्रक्रियाकौमुद्याः प्रसादटीकायाम् ४०१—४०२ तमपृष्ठयोः ।
६. 'लक्षणेत्थम्०' इति सूत्रे लघुशब्देन्दुशेखरे ४७०—४७१ तमपृष्ठयोः ।

  

प्रवचनीयसंज्ञायां जातायां सत्यां 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र द्वितीयोत्पत्ति-र्नास्य फलम्। 'वृक्षं प्रति विद्योतते' इत्यत्र द्वितीयोत्पत्तिः फलमित्यत्र विनिगम-नाविरहः। तेन 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र 'कर्मणि द्वितीया' (२।३।२) इत्यनेन द्वितीयायां प्राप्तायां सत्यामपि कर्मप्रवचनीयसंज्ञाविधानसामर्थ्येन तां प्रबाध्य 'कर्मप्रवचनीययुक्ते द्वितीया (२।३।८) इति विशिष्टसूत्रेणैव द्वितीया। एवम् 'सिञ्चति' इत्यत्र षत्वाभावश्च फलम्।

मन्मते 'लक्षणेत्थम्०' इति सूत्रे सिद्धान्तरूपेण द्वितीया—मात्रफलम् इति भाष्ये व्याख्यातत्वेन तच्च वृक्षं प्रति विद्योतते इति प्रदर्शनेन 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र प्रति इत्यस्य वृक्षेणान्वये सिच धातुना सहान्वयाभावे क्रियायोगाभवेन प्रति इत्यस्य उपसर्गता एव नास्ति। तथा सति उपसर्गाभावे सुतरां षत्वप्रवृत्तेः चर्चाऽनुदयेन द्वितीयोत्पतेस्तु 'कर्मणि द्वितीया' (२।३।२) इत्यनेनापि सिद्धौ एतादृशप्रयोगोऽस्य सूत्रस्य उदाहरणमेव नास्तीति मन्तव्यम्।

---

## कित्-धातुः परस्मैपदी वाऽत्मनेपदी वेति विचारः

१—भट्टोजिदीक्षितनयेन 'कित्'-धातोः परस्मैपदत्वनिदर्शनम्।

२—शब्दरत्नकारनयेन 'कित्' धातोरात्मने पदत्वनिदर्शनम्।

३—'कित्' धातोरात्मनेपदत्वे परस्मैपदत्वे च विषये भिन्न-भिन्न वैयाकर-णानां विचारप्रदर्शनम्।

४—अपाणिनीयव्याकरणे तत्स्वरूपनिदर्शनम्।

५—युक्तायुक्तत्वसमीक्षणम्।

कित् धातुर्निवासार्थे रोगापनयने प्रतीकारे च वरिवर्ति। तत्र निवासार्थे 'केतति' इति रूपम्। रोगापनयनार्थे तु धातोः सन् प्रत्ययो भवति। तेन 'चिकित्सति' इति रूपम्। प्रतीकारेऽपि सन्नन्तप्रयोग एव। अतः 'शत्रुं चिकित्सति'। क्षेत्रे तृणं 'चिकित्सति'। चुरादौ तु केतयति इति रूपम्। तत्र वर्द्धमानेन

  

'स्वाश्रयं कश्चिचकित्सतु' इति श्लोकभागे 'चिकित्सतु' इत्यस्य स्थाने 'चिकित्सताम्' इत्येवोचितः प्रयोग इत्युक्तम्। किन्तु कित्धातोः परस्मैपदत्वेन वर्द्धमानोक्तं प्रामादिकमिति भट्टोजिदीक्षिताभिप्रायः[1]।

रत्नकारमतेन[2] 'गुप्तिज्कित्मनोऽनुदात्तेतः' इति माष्यस्वारस्येन 'कित्' धातोरनुदात्तेतत्वे वर्द्धमानोक्तं युक्तमेव।

भाष्ये[3] 'गुप् तिज् किद् भ्यः सन्' (३।१।५) इति सूत्रे रत्नकारस्य प्रमाणभूतं वार्त्तिकमुपस्थाप्य, ततोऽनुबन्धनिर्देशसामर्थ्येन 'सन्नन्तादपि एतेभ्यो धातुभ्य आत्मनेपदं भवतीति व्याख्यातम्। 'पूर्ववत्सनः' (१।३।६२) इति सूत्रे भाष्येऽप्येतत्परकमेव व्याख्यानं दृश्यते।

प्रदीपकारेण[4] तु भाष्यवार्त्तिकपाठमनुक्रमप्रदर्शनार्थं तेन कार्यातिदेशेऽनुबन्ध-निर्देशसामर्थ्येनात्मनेपदत्वलाभो भवति। किन्तु नायं धातुरात्मनेपदी। अन्यथा लिङ्गातिदेशेऽपि तस्य तथात्वस्वीकरे 'अनुचिकीर्षति' इत्यादावप्यात्मनेपदप्रसङ्ग इत्येतत्परकं निगदितम्।

काशिकाकारेण[5], न्यासकारेण[6], पदमञ्जरीकारेण[7] च गुपादिधातोरात्मने-पदित्वेऽपि कित् धातोर्न तथा। तस्मात् सन्नन्तादपि कित् धातोः परस्मैपदमेव तैरुक्तम्।

---

१. प्रौढमनोरमायाम् 'कित्' धातौ ६३६ तमे पृष्ठे।
२. 'कित्' धातौ शब्दरत्ने ६३६–६३७ तमपृष्ठयोः।
३. 'गुप्तिज्०' इति सूत्रे महाभाष्ये विंशे पृष्ठे।
४. 'गुप्तिज्०' इति सूत्रे प्रदीपे विंशे पृष्ठे।
५. 'गुप्तिज्०' इति सूत्रे काशिकायां ३४३–३४४ तमपृष्ठयोः।
६. 'गुप्तिज्०' इति सूत्रे न्यासे ३४३–३४४ तमपृष्ठयोः।
७. 'गुप्तिज्०' इति सूत्रे पदमञ्जर्यां ३४३–३४४ तमपृष्ठयोः।

उद्योते[1] 'कित' धातोरात्मने पदमेव लोके भवति। वेदे परस्मै पदत्वं तुच्छान्दसबलेन इति प्रतिपादितम्। किन्तु शेखरे नागेशेन 'कित्' धातोर्गुपादिना सह वार्त्तिके पाठोऽनुक्रमप्रदर्शनाय मतः, नाऽनुदात्तार्थम्। अत एवाऽनुबन्धकरणे नाऽत्मने पदमिति भाष्ये निहितम्। अत्र विषये केचित्तु इति मतप्रदर्शनेन कित्धातोरप्युदात्तेत्वम्। भाष्येऽनुबन्धनिर्देशेन आत्मनेपदं न केवलं कित्धात्वर्थं-मुक्तम्, किन्तु सामान्येन।

तत्त्वबोधिनीकारेण[2] मनोरमाकारस्यैवाभिमतं प्रतिपादितम्।

सारस्वतव्याकरणे[3] 'कित्' धातू रोगापनयने संशये च वर्तते, तत्र 'चिकित्सति' इत्युदाहरणदानेन परस्मैपदत्वं सूच्यते।

कविकल्पद्रुमग्रन्थोक्तः 'कित्' इति धातुः संशयेच्छावासारोग्यार्थक इति शब्दकल्पद्रुमः[4]। तत्रारोग्यार्थे सन्नन्तादपि परस्मैपदमेव। इच्छा निवासार्थे तु सन् प्रत्ययो नेति वोपदेवः।

रमानाथेन त्विच्छानिवासार्थेऽपि सन्प्रत्ययमङ्गीकृत्य तस्मिन्नर्थे आत्मनेपदमेव भवति। तेन 'इति नवनितामेतां हन्तुं मनो विचिकित्सते' इत्युदाहरणं दुर्गादासेन दत्तम्। एवम् 'अन्तर्भूतव्यर्थतया कर्मकर्तरि सन् श्रन्थ ग्रन्थ इत्यादिना यक् निषेधे सिद्धम्' इत्यपि तेनोक्तम्।

इत्थं प्रस्तुतप्रमाणबलेन 'कित्' धातोः परस्मैपदमेव वाऽत्मने पदमेवेति व्याख्यानं न युक्तम्। किन्तु समीक्षात्मकदृष्ट्या विचारे कित्' धातोरनुदात्ते-त्वमेवोचितम्। एतत्स्वीकारे त्वनुदात्तेत लक्षणमात्मनेपदस्यानित्यत्वेन उभयपदीयोधातुरिति सिद्धम्।

---

१. 'गुप्तिज्०' इति सूत्रे उद्योते विंशे पृष्ठे।
२. 'कित्' धातौ तत्त्वबोधिन्याम् ४५१ तमे पृष्ठे।
३. 'कित्' धातुविचारे सारस्वतव्याकरणे ५९ तमे पृष्ठे।
४. शब्दकल्पद्रुमे द्वितीये भागे १२६ तमे पृष्ठे।

## लुगाक्षेपविचारः

१—सूत्रार्थप्रदर्शनम् ।

२—भट्टोजिदीक्षितमते 'पुरुषात् प्रमाणे' इति सूत्रे लुगाक्षेपनिदर्शनम् ।

३—शब्दरत्नकारमतेन 'पुरुषात् प्रमाणे०' इति सूत्रे लुगाक्षेपस्यानर्थक्य-प्रकाशनम् ।

४—'पुरुषात्०' इति सूत्रे लुगाक्षेपाभावे वैयाकरणस्य सम्मतिः ।

५—'पुरुषात्०' इति सूत्रे लुगोक्षेपाभावे वैयाकरणानां सम्मतिप्रदर्शनम् ।

६—युक्तायुक्तत्वसमीक्षणम् ।

७—'पुरुषात्०' सूत्रे प्रकृतविषये आनुषङ्गिकविचार—मादाय वैयाकरणानां विचारप्रदर्शनपूर्वकं स्वमतप्रकाशनम् ।

'पुरुषात् प्रमाणेऽन्यतरस्याम्' ( ४।१।२४ ) इति सूत्रे 'ऋन्नेभ्यो ङीप्' ( ४।१।५ ) इत्यतः ङीप् अनुवर्तते । ततः 'द्विगोः' ( ४।१।२१ ) इति सूत्रमनुवर्तते । ततः 'अपरिमाणविस्ताचितकम्बलेभ्यो न तद्धितलुकि' ( ४।१।२२ ) इति सूत्रतो 'न तद्धितलुकि' इत्यनुवर्तते । 'येन विधिस्तदन्तस्य' ( १।१।७२ ) इत्यनेन तदन्तपदस्योपस्थितिर्भवति । ततः प्रमाणे यः पुरुषशब्दस्तदन्ताद् अन्यतरस्यां ङीप् न द्विगोस्तद्धितलुकि सति इति सूत्रार्थो जायते । 'अपरिमाण०' इति सूत्रात् 'तद्धितलुकि' इत्येतावन्मात्राऽनुवर्तने तु प्रमाणे यः पुरुषशब्दस्तदन्ताद् अन्यतरस्यां ङीब्भवति द्विगोस्तद्धितलुकि । तेन 'द्विपुरुषी', 'द्विपुरुषा' इति रूपद्वयम् ।

पुरुषशब्दस्य जातिपरकत्वेन परिमाणवाचित्वाभावे 'अपरिमाणविस्ता-चितकम्बलेभ्यो न तद्धितलुकि' ( ४।१।२२ ) इत्यनेन ङीनिषेधे द्विपुरुषी' इति रूपं न स्यात्, तस्मात् पाक्षिकनिषेधसिद्ध्यर्थमिदं सूत्रम् । अथवा पुरुषशब्दस्य जातिवाचकत्वेऽपि द्वौ पुरुषौ प्रमाणमस्या' इति वाक्ये प्रमाणेऽपि विद्यमानत्वेन पुरुषशब्दस्य अपरिमाण इति निषेधाभावेन 'द्विगोः' ( ४।१।२१ ) इति नित्यं ङीपि 'द्विपुरुषी' इत्येव स्याद् इति नित्यङीब्बाधनार्थमिदं सूत्रम् ।

'पुरुषशब्दस्य प्रमाणवाचित्वे तु प्रमाणं 'पञ्चारत्निः पुरुषः' इति शुल्वसूत्रमेव। अत्र सूत्रे 'द्विगोस्तद्धितलुकि' इत्यनुवर्तते। एवं तत्सामर्थ्याद् लुग् आक्षिप्यते। तस्मात् 'पुरुषहस्तिभ्यामण् च' (५।२।३८) इति सूत्रे 'तस्मादप्राप्त एवात्र लुग् विधीयते' इति पदमञ्जरीकारोक्तस्य संगतिर्भवतीति भट्टोजि-दीक्षिताशयः[1]।

शब्दरत्नकारमतेन[2] तु 'द्वौ पुरुषौ प्रमाणमस्याः' इत्यत्र 'तदस्य परिमाणम्' (५।१।५७) इत्यनेन ठक्प्रत्यये ठञ् प्रत्यये वा कृते 'अध्यर्द्धपूर्वाद् द्विगोर्लुग-संज्ञायाम्' (५।१।२८) इत्यनेन ठकष्ठञो वा लुकि ततः पुरुषात् प्रमाणेऽन्य-तरस्याम्' (४।१।२४) इति पाक्षिक ङीपि 'द्विपुरुषी' 'द्विपुरुषा' इति सिद्धौ शास्त्रस्य चरितार्थ्ये 'द्विगोर्लुग् नित्यम्' (२४५२) इति वार्त्तिकाद् लुगाक्षेपे न मानमिति तदाशयः।

भट्टोजिदीक्षितसमर्थितपक्षस्य समर्थनं तत्त्वबोधिनीकारेण[3] कृतम्। रत्नकारस्यानुमोदनं नागेशेन[4], भैरवीकारेण[5], भावप्रकाशकारेण[6] च विहितम्।

गुणदोषविवेचनदृशा तु रत्नकारमतमेव युक्तम्। पुरुषशब्दस्य प्रमाणवा-चित्वाभावस्वीकारे 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (५।२।३७) इत्यत्र द्वयसच्करणमेवासंगतम्। अत एव 'अपरिमाणविस्ताचितकम्बलेभ्यो न तद्धितलुकि' (४।१।२२) इति सूत्रे 'काण्डान्तात् क्षेत्रे' (४।१।२३) इति सूत्रे च मनोरमाकारेण, तत्त्वबोधिनीकारेण च 'तदस्यपरिमाणम्' (५।१।५७) इति ठकमुक्त्वा 'अध्यर्धपूर्वाद द्विगोर्लुगसंज्ञायाम्' (५।१।२८) इत्यनेन लुक्

१. 'पुरुषात्०' इति सूत्रे प्रौढमनोरमायां ७१३–७१४ तमयोः पृष्ठयोः।
२. 'पुरुषात्०' इति सूत्रे शब्दरत्ने ७१४–७१५ तमयोः पृष्ठयोः।
३. 'पुरुषात्०' इति सूत्रे तत्त्वबोधिन्यां १४४ तमे पृष्ठे।
४. 'पुरुषात्०' इति सूत्रे लघुशब्देन्दुशेखरे ३९२ तमे पृष्ठे।
५. 'पुरुषात्०' इति सूत्रे भैरव्यां ७१४–७१५ तमयोः पृष्ठयोः।
६. 'पुरुषात्०' इति सूत्रे भावप्रकाशे ७१४–७१५ तमपृष्ठयोः।

स्वीकृतः। तेनात्र तथाऽस्वीकारे सति स्ववचनविरोध एव। अन्यथा तत्रापि लुगाक्षेपः स्यात्। अस्यापरिमाणवाचित्वं काशिकाकारेण[1], प्रसादकारेण[2] च अपरिमाणेति निषेधे प्राप्ते विकल्पार्थमिदम्' इत्युक्त्या सूचितम्। अस्यापरिमाण-वाचकत्वास्वीकारे 'अपरिमाण' इति वचनस्यासंगतिः स्यात्। तस्मादयमेव पक्षः समीचीनः।

मन्मते तु 'पुरुषात् प्रमाणेऽन्यतरस्याम्' (४।१।२४) इत्यत्र प्रमाण-पददानेन 'अपरिमाणविस्ताचितकम्बलेभ्योलुकि' (४।१।२२) इति सूत्रेऽपरि-माणान्ताद् निषेधेन परिमाणवाचिपुरुषशब्दाद् अपरिमाणेति सूत्रेण ङीविषेधो न स्यात्, तदर्थमिदं सूत्रम्। अथवा भाष्ये निषेधद्वयप्रदानमनर्थकमिति प्रतिपादितत्वेन प्रमाणान्ताद् ङीप्प्राप्तावनेन विकल्प्यत इति। 'पञ्चारत्निः पुरुषः' इत्योक्त्या पुरुषशब्दस्यापि कुडववत् प्रमाणत्वं सिद्ध्यत्येव।

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात् संख्याबाह्या तु सर्वतः॥

इत्यनेनापि पुरुषशब्दस्य प्रमाणपरकत्वं सिद्ध्यति।

'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम।'

इति भाष्यसिद्धान्तेन[3] ऊर्ध्वमानस्यापि प्रमाणपरकत्वमिति सिद्धान्तः। अतो 'द्विपुरुषा परिखा' इत्यत्र द्वयसचि, तस्य 'प्रमाणे ल' इति वार्त्तिकेन लुक्करणे न क्षतिः 'लुगाक्षेपकरणं मनोरमाकारस्यासंगतमेव। अत एव कैयटेन[4] 'प्रमाणे द्वयसच्' (५।२।३७) इति सूत्रे परिच्छेद्यमात्रेऽपि 'ऊर्ध्वमाने एव' इति नियमं स्वीकृत्य प्रमाणादपकृष्य द्वयसच् स्यादित्युक्तम्।

'प्रमाणे लः' इति वार्त्तिकस्यकैयटोक्त्या लोकप्रसिद्धस्य

दिष्टहस्तादिशब्दस्यैव प्रमाणवाचित्वस्वीकारे पुरुषशब्दस्य लोकप्रसिद्धप्रमा-णाभावेन 'प्रमाणे लुक्' इति न लुक् इति स्वीकारे द्वयसचो लुग् न स्यात्।

१. 'पुरुषात्०' इति सूत्रे काशिकायां ३१२ तमे पृष्ठे।
२. 'पुरुषात्०' इति सूत्रे प्रसादे ३४४ तमे पृष्ठे।
३. प्रमाणेद्वयसच्०' इति सूत्रे भाष्ये ५५९ तमे पृष्ठे।
४. 'प्रमाणे द्वयसच्०' इति सूत्रस्थ प्रदीपे ५५९ तमे पृष्ठे।

तस्मात् पुरुषशब्दस्याप्रमाणवाचित्वेन द्वयसचो लुक्करणार्थं लुगाक्षिप्यत इति भट्टोजिदीक्षितस्य समाधानुमुचितं तु न वक्तव्यम्, 'द्विगोर्नित्यम्' इत्यनेन अपरिमाणवाचिनोर्लुग्विधानेन द्वयसचो लुकि 'द्विपुरुषी' 'द्विपुरुषा' इति सिद्धे, वृथाक्षेपः। शब्दकौस्तुभे[1] दीक्षितेन नाक्षेपचर्चा कृता।

अन्यच्च—'सिंहो माणवकः' इति वाक्ये सिंहशब्दस्य जातिपरकत्वेऽपि माणवकशब्देन सम्बन्धे शौर्यादिगुणपरकत्वं यथा भवति, तथैव पदान्तरसम्बन्धेन शब्दस्यार्थान्तरे वृत्तिः - इति नियमेन पुरुषशब्दस्य जातिपरकत्वेऽपि 'द्विपुरुषा' 'द्विपुरुषी' इत्यत्र प्रमाणपरकत्वसिद्धौ द्वयसचो लुक् स्यात्।

उपपादितं चैतद् न्यासकारेण[2] सर्वम्। पुरुषशब्दस्य प्रमाणवाचित्वात् केचिदपि वैयाकरणा आक्षेपं न स्वीकृतवन्तः। दीक्षितेन पुरुषशब्दस्य प्रमाणवाचित्वं स्वीकृतम्, पुरुषशब्दाच्च द्वयसच्प्रत्ययस्य विधानमुक्तम्। किन्तु द्वयसचो लुक्करणाय लुगाक्षिप्तम्। अतस्तस्याक्षेपरूपसमाधानदानम् एवं रत्नकारस्यापरिमाणवाचकत्वकथनंम् 'अपरिमाणेति निषेधे प्राप्ते' इत्यादिकाशिकाकारस्य, प्रसादकारस्य च कथनम् असमीचीनम्। एतदपेक्षया पुरुष 'शब्दस्य' पुरुषात् प्रमाणेऽन्यतरस्याम्' (४।१।२४) इत्यनेन स विकल्प्यते। द्वयसचो लुक् तु 'प्रमाणे ल' इति वार्त्तिकेन भवत्येव। इत्थं 'द्वयसच्'—प्रत्ययं विहाय ठक्प्रत्ययस्य ठञ्प्रत्ययस्य वा कथनमपि नोचितम्। अत्रत्य पुरुषशब्दस्य प्रमाणातिरिक्तत्वस्वीकारे 'पुरुषात् प्रमाणेऽन्यतरस्याम्' (४।१।२४) इति सूत्रमेव न प्रवर्तेत। अत एव 'सरस्वतीकण्ठाभरणेऽपि[3] 'पुरुषाद्वा' इति सूत्रितम्। तत्र तस्य टीकाकारेण नारायणशास्त्रिणा 'पुरुषशब्दो यः प्रमाणपरिमाणं तदन्ताद् द्विगोस्तद्धितलुकि वा ङीब् भवति' इत्युक्तम्।



---

१. शब्दकौस्तुभे 'पुरुषात्०' इति सूत्रे २१ तमे पृष्ठे ( द्विगोर्लुंग् इत्यनुवर्तते )।

२. 'पुरुषात्०' इति सूत्रे न्यासे ३१२ तमे पृष्ठे।

३. 'पुरुषाद्वा' इति सूत्रे सरस्वतीकण्ठाभरणे १२० तमे पृष्ठे।

## जातिपक्षे व्यक्तिपक्षे वा स्थानेऽन्तरतम इति सूत्रस्यानावश्यकत्वविचारः

१—सूत्रार्थप्रदर्शनम् ।

२—भट्टोजिदीक्षितनयेन 'इको यणचि' इति सूत्रे व्यक्तिपक्षे 'स्थानेऽन्तर०' इति सूत्रस्यावश्यकत्वनिदर्शनम् ।

३—शब्दरत्नकारमतेन 'इको यणचि' इति सूत्रे व्यक्तिपक्षेऽपि 'स्थानेऽन्तर०' इति सूत्रमनावश्यकम् ।

४—'इको यणचि' इति सूत्रे 'स्थानेऽन्तरतम' इति सूत्रस्यानावश्यकत्वे वैयाकरणानां सम्मतिप्रकाशनम् ।

५ —युक्तायुक्तत्वसमीक्षणम् ।

६—स्वमतप्रदर्शनम् ।

'इको यणचि' ( ६।१।७७ ) इत्यत्र 'इकः' इति षष्ठ्यन्तम्, 'यण' इति प्रथमान्तम्, 'अचि' इति सप्तम्यन्तम् । अत्र सूत्रे 'अचि' इति सप्तमीनिर्देशेन 'तस्मिन्निति०' इति ( १।१।६६ ) परिभाषासूत्रोपस्थित्याऽव्यवहितपूर्वस्योपस्थितिर्भवति । 'परः सन्निकर्षः संहिता' ( १।४।१०९ ) इत्यतः संहितापदमनुवर्तते । 'षष्ठी स्थानेयोगा' ( १।४।४९ ) इत्यतः स्थाने-पदस्योपस्थितिर्भवति । ततोऽव्यवहितपूर्वस्येकः स्थाने यण् भवति, अचि परे संहितायामित्यर्थः सम्पद्यते ।

अत्र सूत्रे पक्षद्वयम्-जातिपक्षो व्यक्तिपक्षश्चेति । तत्र यद्यपि जातिपक्षे 'यथा संख्य०' ( १।३।१० ) इति सूत्रेणैव इकारस्य स्थाने यकाररूपयण्सिद्धौ 'स्थानेऽन्तरतमः' ( १।१।५० ) इति सूत्रस्यात्र न प्रयोजनम्, तथापि व्यक्तिपक्षे इक्पदेन इकां षटषष्टेरुपस्थितौ यण्—पदेन तु सप्तस्यैव तत्र यथासंख्यं न संभव इति दीक्षितस्याशयः[1] ।

शब्दरत्नकारमताऽनुसारेणात्र[2] जातिपक्षे व्यक्तिपक्षे वा सर्वत्र 'यथासंख्य०' ( १।३।१० ) इति सूत्रेणैव निर्वाहः स्यात् । मानं चात्र 'ल्वादिभ्यः' ( ८।२।४४ ) इत्यत्र 'दीर्घस्य' ऊकारस्य स्थाने कृतो वकारनिर्देश एव ।

१. 'इको यणचि' इति सूत्रे प्रौढमनोरमायां १२४–१३३ तमपृष्ठपर्य्यन्तम् ।
२. 'इको यणचि' इति सूत्रे शब्दरत्ने १३३–१३९ तमपृष्ठपर्य्यन्तम् ।

एवम् 'अ इ उ ण्' इति सूत्रस्य भाष्ये 'रूपसामान्याद्वा सिद्धम्' इत्युक्त्या 'इक्' इति स्वरूपं यथा ह्रस्व इकारे, तथैव दीर्घं ईकारेऽप्यस्त्येव। अतोऽत्र सूत्रे व्यक्तिपक्षेऽपि स्थानेऽन्तरतमः' इति सूत्रमनावश्यकम्। अस्य मूलम् अ इ उ ण् सूत्रस्थ[1]-प्रदीप-व्याख्याने रूपावतारे[2] चास्ति। न्यासे[3] पदमञ्जर्याञ्चायमेव[4] पक्षः।

अत्र मतद्वये दीक्षितमतमेव युक्ततरम्। यतो हि स्थानेऽन्तरतमः (१।१।५०) इति सूत्रे भाष्ये[5] 'इको यणचि' (६।१।७७) इति सूत्रे यथासंख्यसूत्रेण निर्वाहः। 'स्थानेऽन्तरतमः' इत्यस्योदाहरणं तु 'अकः सवर्णे दीर्घः' (६।१।१०१) इति सूत्रे 'दण्डाग्रम्', 'कूपाग्रम्' 'दधीन्द्रः', 'मधूष्ट्रः' इत्यत्र कण्ठस्थानयोः कण्ठस्थानस्य, तालुस्थानयोः तालुस्थानस्य, ओष्टस्थानयोः ओष्ठस्थानस्य च प्रदर्शनेन 'यथासंख्ये०' (१।३।१०) इति सूत्रे भाष्ये[6] च 'दध्यत्र' 'मध्वत्र' इत्यत्र स्थानेऽन्तरतमे नाप्येतत् सिद्धम्' इत्युक्तम्। यथासंख्यस्य च समसंख्यातार्थं एव विधानेन, प्रदीपकारेण च 'संख्यासाम्येऽपि स्वरितत्वप्रतिज्ञातस्थल एव शब्दतोऽर्थतो वा साम्याश्रयणे यथासंख्यं प्रतिपादितम्। तेनोभयसूत्रस्थ भाष्य-प्रदीपावलोकनेन व्यक्तिपक्षे सर्वत्र 'यथासंख्य०' (१।३।१०) इति सूत्रेण निर्वाहस्वीकारे पदस्परविरोधो भवति। तत्-परिहाराय 'स्थानेऽन्तरतमः' (१।१।५०) इति सूत्रस्थाभाष्यं 'इको यणचि' (६।१।७७) इति सूत्रे जातिपक्षमादाय। 'यथासंख्य०' (१।३।१०) इति सूत्रस्थ भाष्यकैयटस्तु व्यक्तिपक्षमादाय। अतो व्यक्तिपक्षे स्थानेऽन्तरतमः' इति सूत्रमावश्यकमिति पक्ष एवोचितः।

मन्मते तु 'इको यणचि' (६।१।७७) इति सूत्रे इकः' इति षष्ठीनिर्देशन 'षष्ठी स्थानेयोगा' (१।४।४९) इत्यतः स्थाने इत्यस्योपस्थितौ 'यत्रानेकवि-

१. 'अइउण्' इति सूत्रे प्रदीपे ७१ तमे पृष्ठे (व्यक्तिपक्षेऽपि भेदा सिद्धमिष्टम्)
२. 'इको यणचि' इति सूत्रे रूपावतारेऽष्टमे पृष्ठे।
३. 'इको यणचि' इति सूत्रे न्यासे ५३६ तमे पृष्ठे।
४. 'इको यणचि' इति सूत्रे पदमञ्जर्यां ५३६ तमे पृष्ठे।
५. स्मानेऽन्तरतमः इति सूत्रे भाष्ये १६६ तमे पृष्ठे।
६. भाष्ये 'यथासंख्यसूत्रे १३९ तमे पृष्ठे।

धमातन्यं तत्र स्थानत आन्तर्यं बलीयः' इति परिभाषया जातिपक्षे व्यक्तिपक्षे च सर्वत्र 'स्थानेऽन्तरतमः' ( १।१।५० ) इत्यस्यैव 'इको यणचि' ( ६।१।७७ ) इति सूत्रेऽपेक्षा। अत एव यथासंख्यसूत्रे 'यथासंख्यमनुदेशः समानां स्वरितेन ततोऽधिकारः, अधिकारश्च भवति' इति भाष्यस्य तत्रत्यकैयटस्य च संगतिः। अनेन यत्र स्वरितत्वम्, तत्रैव संख्यासाम्येऽपि यथासंख्यमित्युक्त्या 'इको यणचि' ( ६।१।७७ ) इत्यत्र स्वरितत्वं नास्तीति प्रतीयते। अन्यथा स्वरितत्वबलेन 'इको यणचि' ( ६।१।७७ ) इत्यत्र व्यक्तिपक्षेऽपि 'यथासंख्य०' ( १।३।१० ) इति सूत्रेण निर्वाहे दध्यत्र मध्वत्र' इत्याद्यर्थं स्थानत आन्तर्येऽपि 'स्थानेऽन्तरतमः' ( १।१।५० ) इत्यस्याप्रवृत्तावत्र सूत्रे 'स्थानेऽन्तरतमः' ( १।१।५० ) इत्यनेन निर्वाहकथनस्य चासंगतिः स्यात्। 'स्थानेऽन्तरतमः' ( १।१।५० ) इति सूत्रस्थं भाष्यं तु सामान्यदृष्ट्या। अइउण् सूत्रस्थभाष्यस्य प्रदीपस्य च न सार्वत्रिकम्। अन्यथा सर्वत्र तथात्वस्वीकारे ह्रस्वदीर्घादिव्यवस्थाकरणस्यैवानौचित्यं स्यात्। 'ल्वादिभ्यः' ( ८।२।४४ ) इत्यत्र 'दीर्घस्य उकारस्य वकारनिर्देस्तु' स्थानेऽन्तरसः' ( १।१।५० ) इत्यनेनापि सिद्धेः 'यथासंख्य' ( १।३।१० ) इति सूत्रस्य 'इको यणचि' ( ६।१।७७ ) इत्यस्य व्यक्तिपक्षे ( सार्थक्याय तद्निर्देशकथनमसंगतमेवाभिगम्यत इति विदुषां विचारोऽपेक्ष्यते।



## 'यथालक्षणमप्रयुक्ते' इत्यस्य व्याख्याने प्रथमपक्षो द्वितीयपक्षो वा'

१—भट्टोजिदीक्षितमतेन 'यथालक्षणमप्रयुक्ते इत्यस्य अप्रयुक्ते लक्षणमनतिक्रम्यकार्यं भवतीति व्याख्यानप्रदर्शनम्।

२—शब्दरत्नकारमतेन 'यथालक्षण०' इत्यस्याप्रयुक्ते लक्षणाभावस्यैव योग्यतेति निदर्शनम्।

३—उभयविधव्याख्याने वैयाकरणानां सम्मतिदानम्।

४—युक्तायुक्तत्वसमीक्षणम्।

५—स्वमतप्रदर्शनम्।

  

प्रियाष्टन्शब्दाद् शसि भसंज्ञायाम् अल्लोपे 'प्रियाष्टनः' इति सिद्ध्यति। 'अष्टाभ्य औश्' (७।१।२१) इति वक्तव्ये कृतात्वनिर्देशो जस्शसोर्विषय आत्वं ज्ञापयति। औश्त्वविधौ कृतात्वनिर्देशवद् अनेन अनुमीयमानमप्यात्वं प्राधान्य एवोचितम्। अत एव जसि प्रियाष्टनः' इत्येव स्यात्, न तु प्रियाष्टा इति। आवादेशेवकारस्य 'लोपः शाकल्यस्य' (८।३।१९) इति लोप इत्याशङ्क्य उक्तं भाष्ये 'यथालक्षणमप्रयुक्ते' इति। तत्र 'न भवत्येवात्रात्वमित्यर्थः' इति कैयटः 'अष्टाभ्य औश्' (७।१।२१) इति सूत्रे तदन्तग्रहणेन 'परमाष्टौ' इत्युक्त्वा 'प्रियाष्टनः' इत्यत्र आत्वाभावे औश्त्वं न भवति इति वामनः। यथा पुनर्गौणतायाम् आत्वं न भवति, तथा मुख्यरूपेण यत्राष्टन्-शब्दस्तत्रैव जश् शसोः परत आत्वे सति, औश्त्वादिकम्, तेन 'प्रियाष्टःपश्ये' इति हरदत्तमतेन। एवं मतोल्लेखपूर्वकं मनोरमाकारेण कैयट-वामन-रीत्या 'प्रियाष्टानः' हरदत्तरीत्या' प्रियाष्टः'पश्ये' इति रूपं स्वीकृतम्। तेन दीक्षितमतेन[1] कैयटस्य प्रथमव्याख्यानुसारेण लक्षणमनतिक्रम्य यथालक्षणम् इति। अप्रयुक्ते लक्षणमनतिक्रम्य कार्यं भवतीति 'यथालक्षणमप्रयुक्ते' इति वचनस्यार्थः।

शब्दरत्नकारमतेन[2] कैयटस्य द्वितीयव्याख्याऽनुसारेण 'प्रियाष्टानः' 'प्रियाष्टनः 'प्रियाष्टा', प्रियाष्टौ प्रियाष्टः इत्यादिप्रयोगाणामनभिधानमेव। भाष्यकारस्तु लक्ष्यैकचक्षुष्कः, 'प्रयुक्तानामिदमन्वाख्यानम्' इति अभियुक्तोक्तिश्च। तेन 'यथालक्षणम्' इत्यत्र 'अलक्षणम्' इति च्छेदं कृत्वा लक्षणस्याभावः—अलक्षणम्, लक्षणाभावस्य योग्यता-यथालक्षणम्। इत्थं 'यथालक्षणमप्रयुक्ते' इत्यस्य-अप्रयुक्ते लक्षणाभावस्यैव योग्यता, न तु लक्षणप्रवृत्तेः-इत्यर्थः। पूर्वोक्तव्याख्याने 'अप्रयुक्ते' इति वाक्यशेषासंगतिर्भवति।

'ष्णान्ता षट्' (१।१।२४) इति सूत्रभाष्ये[3]-'अष्टन आ विभक्तौ' (७।२।८४) इति सूत्रे 'रायोहलि' (७।२।८५) इत्यतः 'हलि' इत्यस्यापकर्षं

---

१. 'अष्टन' आविभक्तौ इति सूत्रे मनोरमायां ६२८–६२९ तमपृष्ठयोः।
१. 'अष्टन' आ' इति सूत्रे शब्दरत्ने ६२८-६२९ तमपृष्ठयोः।
२. 'ष्णान्ताषट्' इति सूत्रे महाभाष्ये २०० तमे पृठे।

स्वीकृत्य 'प्रियाष्टौ' 'प्रियाष्टानः' इति न सिद्धयति, प्रियाष्टानौ, इति प्राप्नुत इत्यादिप्रदर्श्य 'यथालक्षणमप्रयुक्ते' इति वचनेन समाहितम् ।

प्रदीपकारेणास्य[1] वचनस्य व्याख्यानद्वयं कृतम् । तत्र प्रथमेन व्याख्यानेन प्रियाष्टानौ, 'प्रियाष्टानः इति रूपम् । अपरेण व्याख्यानेन चैतादृशानां प्रयोगाणामभाव एव ।

काशिकाकारेण,[2] न्यासकारेण,[3] 'प्रियाष्टानः' पदमञ्जरीकारेण[4] च 'प्रियष्टिः' 'प्रियाष्टनः' इति रूपं स्वीकृतम् । एवम् उपसर्जने आत्वाभावेन औश्त्वं न इति प्रदर्शितम् ।

नागेशेन,[5] भैरवीकारेण,[6] भावप्रकाशकारेण[7] च कैयटस्य द्वितीयव्याख्यानमेव 'यथा लक्षण०' इति वचनस्य स्वीकृतम् । तेनोक्तप्रयोगाणामनभिधानमेव ।

अत्र मतद्वये रत्नकारोक्तमेव साधु । यतो हि 'रायो हलि' ( ७।२।८५ ) इत्यतः 'अष्टन आ विभक्तौ' ( ७।२।८४ ) इत्यत्र 'हलि' इत्यस्यापकर्षस्वीकारे 'हलादि' विभक्तेरभावे, आत्वं न स्यात्, तदा—'प्रियाष्टौ,' 'प्रियाष्टा' इत्यादिप्रयोगः कथमपि न सिद्ध्यति । तेन यदि कश्चित् प्रियाष्टौ, प्रियाष्टा' इति वदेत्, तदा 'न सिद्ध्यति' इति भाष्यवचनस्य विरोधः ।

अतो भाष्यवचनविरोधात् 'प्रियाष्टौ' 'प्रियाष्टा' इति प्रयोगस्यानभिधानम् । 'प्रियाष्टानौ प्रियाष्टानः' इति प्राप्नोति' इति आक्षेपस्य 'यथालक्षण०' इति समाधानदानेन 'प्रियाष्टानौ' 'प्रियाष्टानः' इत्यादिप्रयोगस्य न सिद्धिः । तेनानयोः प्रयोगयोरप्यनभिधानं लक्ष्यते । अस्य वचनस्य द्वितीयव्याख्याने

---

१. 'ष्णान्ताषट्' इति सूत्रे प्रदीपे २०० तमे पृष्ठे ।
२. 'अष्टन आ०' इति सूत्रे काशिकायां ५६७ तमे पृष्ठे ।
३. 'अष्टन आ०' इति सूत्रे न्यासे ५६७ तमे पृष्ठे ।
४. 'अष्टन आ०' इति सूत्रे पदमञ्जर्यां ५६७ तमे पृष्ठे ।
५. 'अष्टन आ०' इति सूत्रे लघुशब्देन्दुशेखरस्य ३२०–३२१ तमपृष्ठयोः ।
६. भैरव्याम् 'अष्टना आ०' इति सूत्रे ६२८–६२६ तमपृष्ठयोः ।
७. 'अष्टन आ०' इति सूत्रे भावप्रकाशे ६२८–६२६ तमपृष्ठयोः ।

  

'अलक्षण' च्छेदकरणे यद्यपि गौरवं भवति, तथापि तस्यैवोचित्यम्। अन्यथा प्रथमव्याख्यानस्वीकारे 'प्रियाष्टान:' इति प्रयोगस्य सिद्धौ भाष्येऽस्य विषये 'प्राप्नोति' इति साक्षेपवचनस्यासंगतिः स्यात्। आक्षेपकोटावस्योपस्थापनेन 'सिद्धौ इत्यनभीष्टत्वमेव सूच्यते। अन्यथा भवति वा भविष्यति वेति वदेत्।

मन्मते 'यथालक्षणमप्रयुक्ते' इति वचनस्य द्वितीयव्याख्यानस्वीकारे 'प्रियाष्टौ' 'प्रियाष्टा,' 'प्रियाष्टानौ, 'प्रियाष्टान:' 'प्रियाष्ट:' इत्यादिप्रयोगाणामनभिधान-स्वीकारे दीक्षितद्वारा कैयट-वामनवचनस्वीकारे प्रियाष्टान:' इति प्रयोगे दोषेऽपि हरदत्तोक्तस्य 'प्रियाष्टन:' इति प्रयोगस्य समर्थने न दोषः। एवं दीक्षितेन 'प्रियाष्टान:' इति वामनः इति यदुक्तम्, तदप्युचितम्। यतो हि काशिकायां न्यासे च 'प्रियाष्टान:' इत्येवोपस्थापितम्। एवं कैयटरीत्यापि' प्रियाष्टान:' इति मन्तव्यम्। इत्थं 'यथालक्षण०' द्वितीयव्याख्यानेन 'अष्टन आविभक्तौ' (७।१।८४) इति लक्षणस्य प्रवृत्तिमस्तु, तथापि 'प्रियाष्टन:' इति तु सिद्ध्यत्येव। एवम् अत्र प्रथमव्याख्यानस्वीकारेऽप्यात्वं न स्यात्। यथा—'सर्वादीनि' सर्वानामानि' (१।१।२७) इति सूत्रे भाष्ये[1] संज्ञाभूतसर्व शब्दस्य सर्वनामप्रयुक्त कार्याभावेन 'सर्वाय' इति भवति, न तु सर्वस्य' इति; उपसर्जनीभूतातिसर्वशब्दस्य तत्प्रयुक्तकार्याभावेन 'अतिसर्वाय' इत्येवोक्तम्, तथैव 'प्रियाष्टन:' इत्यत्रापि 'गौणमुख्य०' इति परिभाषयाऽत्र नात्वप्रसक्तिः। 'प्रियाष्टान:' इति प्राप्नोति' इति भाष्यवचनस्य आक्षेपपर्यन्ताऽनुधावन एव तात्पर्यम्, न तु सिद्धकोटौ इति पूर्वोक्तव्याख्यानेन सिद्धे, सिद्धकोटौ प्रियाष्टन:' इति शसि समर्थ्यत एव।

---

## सामानाधिकरण्यान्वयविचारः

१—सूत्रार्थप्रदर्शनम्।

२—भट्टोजिदीक्षितनयेन 'दीर्घो लघोः' इति सूत्रे व्यधिकरणान्वयस्यौचित्य-दर्शनम्।

---

१. 'सर्वादीनि०' इति सूत्रे महाभाष्ये २०६ तमे पृष्ठे।

३—शब्दरत्नकारमतेन 'दीर्घो लघोः' इति सूत्रे सामानाधिकरण्यान्वयेपि न क्षतिरिति साधनम् ।

४—'दीर्घो लघोः' इति सूत्रे व्यधिकरणान्वय एवेत्यत्र वैयाकरणानां भावप्रदर्शनम् ।

५—'दीर्घो लघोः' इति सूत्रे सामानाधिकरण्येऽपि न क्षतिरित्यत्र वैयाकरणस्य सम्मतिः ।

६—युक्तायुक्तत्वसमीक्षणम् ।

'दीर्घो लघोः' ( ७।४।९४ ) इति सूत्रे 'पूर्वोऽभ्यासः' ( ६।१।४ ) इत्यतोऽभ्यासपदम्, 'सन्वल्लघुनि चङ्परेऽनग्लोपे; ( ७।४।९३ ) इति च सम्पूर्णं सूत्रमनुवर्तते । 'अङ्गस्य' ( ६।४।१ ) इति सूत्राधिकारे पठितत्वेन अङ्गेत्यर्थलाभो भवति । तस्माद् 'लघोरभ्यासस्याङ्गस्य दीर्घः स्याद् लघुनि चङ्परेऽनग्लोपे सन्वद्भावविषये' इति सूत्रार्थः ।

भट्टोजिदीक्षितमतेन[1] 'ह्रस्वं लघु' ( १।४।१० ) इति सूत्रितत्वेन अज्झल समुदायस्य लघुसंज्ञा न भवति । तेन 'दीर्घो लघोः' ( ७।४।९४ ) इत्यत्र न सामानाधिकरण्यान्वयः । 'अचश्च' ( १।२।२८ ) इति लिङ्गाभावेन 'अलोन्त्यस्य' ( १।१।५२ ) इत्यस्य प्रवृत्त्यभावात् । अतो 'लघोरभ्यासस्य दीर्घः' इति वैयधिकरण्यान्वय एव ।

शब्दरत्नकारमतेन[2] 'लघ्वन्ताभ्यासस्य इत्यर्थे 'अलोन्त्य' परिभाषयापीष्टसिद्धेः सामानाधिकरण्येऽपि न क्षतिरिति तदाशयः ।

काशिकाकारेण[3] 'दीर्घो भवति लघोरभ्यासस्य, लघुनि चङ्परेऽनग्लोपे' इत्यर्थः कृतः । तत्र 'लघोरभ्यासस्य' इत्युक्त्या वैयधिकरण्य पक्षस्य समर्थनं भवति ।

---

१. 'दीर्घो लघोः' इति सूत्रे प्रौढमनोरमायाम् ।
२. 'दीर्घो लघोः' इति सूत्रे शब्दरत्ने ।
३. 'दीर्घो लघोः' इति सूत्रे काशिकायां २१० तमे पृष्ठे ।

तत्त्वबोधिनीकारेणापि[1] व्यधिकरणपक्षस्य समर्थनं कृतम्। रत्नकारस्य[2] समर्थनं नागेशेन कृतम्।

अत्र समीक्षात्मकदृशा विचारे रत्नकारमतमेव युक्तितरम्। यद्यपि भट्टोजिदीक्षितेन 'ह्रस्वं लघु' (१।४।१०) इति सूत्रेण लघुसंज्ञाया अभावे 'अचश्च' (१।२।२८) इति सूत्रस्य ह्रस्व-दीर्घ-प्लुत-शब्दै-र्यत्राज्विधानं तत्र 'अच्' इति षष्ठ्यन्तपदस्योपस्थितिरिति विधानेन 'अलोन्त्य परिभाषायाः प्रवृत्त्यभावेन सामानाधिकरण्यान्वयस्यासंभवित्वं प्रतिपादितम्, तथापि प्रकृते 'अलोन्त्यपरिभाषाप्रवर्तने न कश्चिद् बाधकः। 'दीर्घो लघोः'। (७।४।९४) इति सूत्रे दीर्घग्रहणं लघोश्च ग्रहणम्। 'लघोः' इति षष्ट्यन्तम्। तत्र 'अचश्च' (१।२।२८) इति परिभाषासूत्रेण 'अच' इत्युपस्थितौ 'हल्' समुदायस्य निवृत्तिरित्यज्मात्रस्यैव ग्रहणम्। एवं 'षष्ठी स्थानेयोगा' (१।१।४९) इत्यनेन स्थानशब्दस्योपस्थितिः स्यात्। तच्च 'अलोन्त्यपरिभाषया-अन्त्यस्य। तेन "लघ्वन्ताभ्यासस्याचः स्थाने दीर्घः' इति सामानाधिकरण्यान्वयः। एवं सम्भवति सामानाधिकरण्ये वैयधिकरण्यावयस्य विधानम् नोचितम्। अत एव तत्त्व बोधिनीकारेण[3] 'अचश्च' (१।२।२८) इति सूत्रे सामानाधिकरण्यस्यौचित्यं निगदितम्। तेन 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१।२।४७) इत्यनेनाऽजन्त-प्रातिपदिकस्यैव ह्रस्व इत्युदाहृतम्। अतः सामानाधिकरण्यान्वयपक्ष एवोचितः। शाकटायने 'लघो दीर्घोऽनजादे' (४।१।१०१) इति सूत्रम्। तत्र 'अनजादेर्धातो द्विभावे पूर्वस्य लघोर्लघौ धात्वक्षरे परे, ङपरेऽनग्लुनिणौ च परतो दीर्घो भवति' इत्यर्थः कृतः। तस्मत् तु वैयधिकरण्यान्वयस्यैव लाभः।

---

१. 'दीर्घोलघोः' इति सूत्रे तत्त्वबोधिन्यां ४२८ तमे पृष्ठे।

२. 'दीर्घो लघोः' इति सूत्रे बृहच्छब्देन्दुशेखरे १६८४ तमे पृष्ठे। (लघ्वन्ताऽभ्यासस्येति सामानाधिकरण्येनाऽप्यन्वयः सुवचः)

३. 'अचश्च' इति सूत्रे तत्त्वबोधिन्यां द्वादशपृष्ठे।

## 'वाद्रुहादिसूत्रन्यासविचारः'

१—सूत्रार्थप्रदर्शनम् ।

२—भट्टोजिदीक्षितनयेन 'श्तिपा०' परिभाषा विद्यते तेन 'वाद्रुहमुह०' इति यथास्थितन्याससाधननिदर्शनम् ।

३—'श्तिपा०' परिभाषावशात् 'वाद्रुहमुह०' इति यथोक्तन्यासे वैयाकरणानां सम्मतिः ।

४—शब्दरत्नकारमतेन 'श्तिपा०' परिभाषा ऽनित्या तेन 'वाद्रुह०' इति सूत्रस्य लघुन्यासेऽपि न क्षतिरिति प्रतिपादनम् ।

५—'श्तिपा०' परिभाषा नित्या तेन 'वाद्रुह०' इत्यस्य लघुन्यासेऽपि न क्षतिरित्यत्र वैयाकरणानां सम्मतिप्रदर्शनम् ।

६—युक्तायुक्तत्वसमीक्षणम् ।

वा द्रुहमुहष्णुहष्णिहाम्' ( ८।२।३३ ) इति सूत्रं 'पदस्य' ( ८।१।१६ ) इति सूत्राधिकारे पठितम् । 'येन विधिस्तदन्तस्य' ( १।१।७२ ) इत्यनेन तदन्तपदस्योपस्थितिर्भवति । अत्र सूत्रे 'झलो झलि' ( ८।२।२६ ) इत्यतो झलि 'होढः' ( ८।२।३१ ) इत्यतो हकारः 'दादेर्धातोर्घः' (८।२।३२ ) इत्यतश्च घकारोऽनुवर्तते । तेन द्रुह, मुह, ष्णुह, ष्णिह इत्येतेषां धातूनां हस्य घो भवति झलिपदान्ते चेत्यर्थः सम्पद्यते सूत्रस्यास्य ।

द्रुह धातोर्दादित्वेन 'दादेर्धातोर्घः' ( ८।२।३२ ) इति सूत्रेण नित्य-घत्वे प्राप्ते, ष्णुह, ष्णिह, मुह, प्रभृतीनां दादित्वाभावेन नान्येन सूत्रेण घत्वप्राप्तिः । तेनानेन सूत्रेण वैकल्पिकघत्वं विधीयते । यद्यपि दिवादौ पुषादिगणः, तदन्तर्गतो रधादिगणः, तदन्तर्गताश्च क्रमेण द्रुहादयो धातवः पठिताः सन्तीति 'वाद्रुहादीनाम्' अथवा 'वाद्रुहादयः' इति सूत्रणेऽप्येभ्यो धातुभ्यो घत्वसिद्धिः, तथापि—

'श्तिपाशपाऽनुबन्धेन, निर्दिष्टं यद् गणेन च।
यत्रैकाज्ग्रहणं चैव, पन्चैतानि न यङ्लुकि॥

इति परिभाषया यङ्लुकि गणनिर्देशे घत्वाप्रवृत्तौ 'दोध्रुक्', 'दोध्रुट्' इत्यादिप्रयोगाणां सिद्धिर्न स्यात्। अतः 'वा द्रुहमुहष्णुहष्णिहाम्' (८।२।३३) इति गुरुभूतो निर्देश इति मनोरमाकाराशयः[1]। तस्य नायं स्वोपज्ञः पक्षः। न्यासकारेण[2], पदमञ्जरीकारेण[3] च तस्मात् पूर्वमपि तथैव व्याख्यातम्। अग्रेऽपि तत्त्वबोधिनीकारेण[4], नागेशेन[5] चोक्तव्याख्यानं समर्थितम्।

एतद्विपरीतं 'श्तिपाशपेति०' परिभाषा भाष्ये न दृश्यते। तेन 'वाद्रुहा-दीनाम्' इति न्यासेऽपि लक्ष्ये न क्षतिः। अथवा 'अजर्घा' इत्यादि भाष्य-प्रयोगेनास्याः परिभाषाया अनित्यत्वमपि वक्तुं शक्यते, तथापि गुरुभूतनिर्देशः स्पष्टार्थमदृष्टलाभार्थं वा बोद्धव्यः। अस्य पक्षस्योपस्थापनं शब्दरत्नकारेण[6], भैरवीकारेण[7], भावप्रकाशकारेण[8], सिद्धान्तकौमुद्या दाधिमथटीकाकारेण[9] च कृतमस्ति। अयं रत्नकारस्य स्वकीयोद्भावितपक्षः।

---

१. 'वाद्रुह०' इति सूत्रे प्रौढमनोरमायां ५७७ तमे पृष्ठे।

२. 'वाद्रुह०' इति सूत्रे न्यासे ३९८ तमे पृष्ठे।

३. 'वाद्रुह०' इति सूत्रे पदमञ्जर्यां ३९८ तमे पृष्ठे।

४. 'वाद्रुह०' इति सूत्रे तत्त्वबोधिन्यां ९३ तमे पृष्ठे।

५. वाद्रुह०' इति सूत्रे बृहच्छब्देन्दुशेखरे ५७३ तमे पृष्ठे।

६. 'वाद्रुह०' इति सूत्रे शब्दरत्ने ५७७ तमे पृष्ठे (श्तिपाशपेति भाष्यानुक्तत्वादप्रामाण्यम्)

७. 'वाद्रुह०' इति सूत्रे भैरव्यां ५७७–५७८ तमपृष्ठयोः।

८. 'वाद्रुह०' इति सूत्रे भावप्रकाशे ५७७–५७८ तमपृष्ठयोः।

९. 'वाद्रुह०' इति सूत्रे दाधिमथटीकायां ९३ तमे पृष्ठे।

अत्र मतद्वये रत्नकारोक्तमेव सयुक्तिकं लक्ष्यते। यतो हि 'श्तिपा शपेति०' परिभाषाया भाष्येऽदर्शनेन तत्राजर्घेति प्रयोगदर्शनेन परिभाषा-स्वीकारेऽप्यनित्यत्वकल्पने न क्षतीः। अत एव परिभाषाया व्यर्थत्वमुपपादयन् परिभाषेन्दुशेखरे 'श्तिपाशवादिनिर्देशास्तु 'भवतेरः' (७।४।७३) इत्यादिनिर्दे-शवन्नार्थसाधकाः' इति नागेशेनाप्युक्तम्। अस्मिन् विषये शब्देन्दुशेखरतः परिभाषेन्दुशेखरे नागेशस्य स्ववचनविरोधो लक्ष्यते। यद्यप्यस्याः परिभाषाया ज्ञापनं 'एकाच उपदेशेऽनुदात्तात्' (७।२।१०) इति सूत्रे 'एकाच्' ग्रहणेन इति परिभाषेन्दुशेखरे[1] दत्तम्। तथाप्येकाज्ग्रहणं किमर्थमिति प्रश्नस्य 'उत्तरत्र जागर्त्यर्थमिह वध्यर्थम्' इत्युत्तरदानस्य भाष्यकारस्य[2] वैयर्थ्यं स्यात्। भाष्येऽस्या परिभाषाया अनुत्थापनेन तथाविधोत्तरस्य स्वीकृतिदाने 'एकाच्' इति ग्रहणस्य परिभाषाज्ञापकत्वस्वीकारेऽपि 'ज्ञापकसिद्धं च सर्वत्र' इति पभिाषया 'श्तिपा०' परिभाषाया अनित्यत्वं सुलभम्।

अतः 'सत्यापपाशरूपवीणा०' (३।२।२५) इत्यादौ 'चुरादिभ्यो णिच् इति सूत्रीतेपीष्टसिद्धौ सत्यापपाशप्रभृतिनां ग्रहणं यथा प्रपञ्चार्थमदृष्टलाभार्थं वेति तथैवेहापि बोद्धव्यम्। अथवा पूर्वाचार्याणां स्वरूपनिर्वाह्यापि सूत्रकारेण यत्र तत्र यथावत् सूत्रं सूत्रितम्। यथा 'औङ आपः' (७।१।१८) 'आङि चापः' (७।३।१०५) इति सूत्रे औङ आङ इति निर्देशेन बोध्यते। अन्यथा पाणिनिनये 'औ' 'औट्' इत्येव प्रत्ययो न तु 'औङ' इति। एवं 'टा' इत्येव प्रत्ययः न तु 'आङ' इति। पुनस्तेषां प्रदर्शनं सूत्रकारस्य व्यर्थं स्यात्। अतस्ता-दृशनिर्देशस्य पूर्वाचार्याणां स्वरुपसंरक्षण एव तात्पर्यम्। इमां सरणि मादायैव

---

१. परिभाषेन्दुशेखरे 'श्तिपा०' इति परिभाषायां ३३५ तमे पृष्ठे।

२. 'एकाच् उपदेशे०' इति सूत्रे महाभाष्ये १०७ तमे पृष्ठे।

प्रचलितशाकटायनव्याकरणे[1] 'द्रुह्मुहस्नुहस्निहो वा' ( १।२।८६ ) इत्यत्र सर्वे धातवस्तथैव परिगणिताः, वा इत्येतावन्मात्रस्यैव व्यत्ययो दृश्यते । एवम् एतादृशस्थले सर्वत्र स्वीकर्तव्यम् । हैमव्याकरणे[2] 'मुहद्रुहष्णुहष्णिहोवा' ( २।१।८४ ) इति सूत्रस्वरुपम् । मुग्धबोधे[3] 'मुहाघङ्वा भौ' ( १७९ ) इत्येतावन्मात्रं सूत्रम् इत्थं सर्वत्र ऊह्यमिति विदुषां विचारविषयः ।

---

१. द्रुह्मुह्०' इति सूत्रे शाकटायनव्याकरणे ५९ तमे पृष्ठे ।

२. 'मुहद्रुह्०' इति सूत्रे हैमव्याकरणे २०८ तमे पृष्ठे।

३. 'मुहाघङ्वा भौ' इति सूत्रे मुग्धबोधे १७० तमे पृष्ठे ।

# परिशिष्टम्

क—प्रौढमनोरमाशब्दरत्नकारयोः सिद्धान्तस्वरूपम्

ख—गवेषणाप्रबन्धोपात्तासूत्रसूची

ग—गवेषणाप्रबन्धोपात्तवार्त्तिकसूची

घ—गवेषणाप्रबन्धोपात्तपरिभाषासूची

ङ—सहायकग्रन्थानां सूची

## (क) प्रौढमनोरमाशब्दरत्नकारयोः सिद्धान्तस्वरूपम्

१—'सम्बुद्धौ०' (१।१।१६) इति सूत्रे सम्बुद्धिग्रहणम् 'अहो इति' इत्यत्र वैकल्पिकप्रगृह्यसंज्ञावारणार्थमिति भट्टोजिदीक्षितस्य सिद्धान्तः। शब्दरत्नकारमतेन सम्बुद्धिग्रहणं वैचित्र्यायेति।

२—'बहुगण०' (१।१।२३) इति सूत्रे बहुगणयोर्ग्रहणं संख्यावाचकयोर्बहुगणशब्दयोः संख्यासंज्ञार्थमिति मनोरमाकारः। हरिदीक्षितमतेन तु बहुगणशब्दयोः संख्यावाचकत्वाभावात् संख्यासंज्ञासिद्ध्यर्थम् एतयोः सूत्रे ग्रहणम्।

३—'स्थानि०' (१।१।५६) इति सूत्रे दीक्षितानुसारेण 'स्थान्यवयवाल्वृत्तिकधर्मनिमित्तके विधौ न स्थानिवत्' इत्यनल्विधेः स्वरूपम्। शब्दरत्नकारमतेन 'स्थानिरूपो योऽल् तद्वृत्तिर्यो धर्मस्तन्निमित्तके विधौ कार्ये कर्तव्ये न स्थानिवत्' इत्यनल्विधेः स्वरूपम्।

४—'अर्थवत्०' (१।२।४५) इति सूत्रे 'वृत्तिमत्त्वमर्थवत्त्वम्' इति, उत्तरसूत्रे 'एकार्थीभावेन लौकिकप्रयोगेप्रसिद्धत्वम्' इति चार्थवत्त्वस्वरूपं भट्टोजिदीक्षितानुसारेण। हरिदीक्षितमतेनोभयसूत्रे 'एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वमर्थवत्त्वम्' इति तत्स्वरूपम्।

५—'अर्थवत्०' (१।२।४५) इति सूत्रेऽर्थवद्ग्रहणस्य फलं धनम्, वनम्, इत्यत्र प्रतिवर्णस्य प्रातिपदिकत्ववारणमिति भट्टोजिदीक्षितस्य मतम्। शब्दरत्नकारमतेन 'दशदाडिमानि षडपूपाः' इति समुदायस्य प्रातिपदिकत्ववारणम् अर्थवतः फलमिति।

६—'कृत्तद्धित०' (१।२।४६) इति सूत्रे समासग्रहणेन 'यत्र संघातः पूर्वो भागः पदं तस्य चेत् प्रातिपदिकसंज्ञा तर्हि समास एव' इति भट्टोजिदीक्षितस्य समासग्रहणकृतनियमस्वरूपम्। 'अर्थवत् पूर्वावयवकः, अर्थवदुत्तरावयवकः, अर्थवांश्चासौ समुदायस्तस्य चेत् प्रतिपदिकसंज्ञा तर्हि समास एव' इति शब्दरत्नकारकृतसमासग्रहणनियमस्वरूपम्।

७—'भूवादयो०' ( १।३।१ ) इति सूत्रे भूवादिग्रहणं हिरुक्, पृथक् प्रभृतीनां धातुत्वकार्यवारणार्थमिति मनोरमाकारानुसारेण । आणवयति', 'वट्टयति' इत्यादिस्थले धातुत्वकार्यवारणार्थं भूवादिग्रहणमिति शब्दरत्नकारानुसारेण ।

८—'उपदेशे०' ( १।३।२ ) इति सूत्र उपदेशशब्दो भावघञन्त इति मनोरमाकारस्य सिद्धान्तः । उपदेशशब्द उक्तसूत्रे करणघञन्त इति शब्दरत्नकारस्य सिद्धान्तः ।

९—'निगरण०' ( १।३।८७ ) इति सूत्रे निगरणार्थेन पिबत्यर्थकस्य 'पा' धातोरपि ग्रहणमिति भट्टोजिदीक्षितस्य सिद्धान्तानुसारेण । 'निगरण' इत्यस्य भक्षणमात्रमर्थस्तेन पिबत्यर्थकस्य 'पा' धातोर्न ग्रहणमिति रत्नकारकृतसिद्धान्ता नुसारेण ।

१०—'कारके' ( १।४।२३ ) इति सूत्रे 'क्रियान्वयित्वं कारकत्वम्' इति कारकत्वस्वरूपमिति भट्टोजिदीक्षितोक्तसिद्धान्तः । 'क्रियाजनकत्वं कारकत्वम्' इति शब्दरत्नकारोक्तसिद्धान्तः ।

११—'पूर्वसदृशसमोनार्थ०' ( २।१।३१ ) इति सूत्रे ऊनार्थ' इत्यत्रार्थग्रहणमभिधेयवचनमिति मनोरमाकारस्य सिद्धान्तः । उक्तसूत्रेऽर्थशब्दो व्यर्थ इति शब्दरत्नकारस्य सिद्धान्तः ।

१२—'प्रतिपादिक०' ( २।३।४६ ) इति सूत्रे 'नियतोपस्थितिकः प्रातिपदिकार्थ इति भट्टोजिदीक्षितस्य सिद्धान्तः । ''प्रवृत्तिनिमित्ततदाश्रयश्च' प्रातिपदिकार्थ इति शब्दरत्नकारस्य सिद्धान्तः ।

१३—'प्रातिपादिक०' ( २।४।४६ ) इति सूत्रे परिमाणग्रहणं 'द्रोणो व्रीहिः' इत्यादौ परिच्छेद्यपरिच्छेदकभावेनान्वयार्थमिति भट्टोजिदीक्षितस्य सिद्धान्तः । 'द्रोणोव्रीहिः' इत्यादो प्रथमा सिद्धयर्थं परिमाणग्रहणमिति हरिदीक्षितस्य सिद्धान्तः ।

१४—'नित्यं' कौटि०' ( ३।१।२३ ) इति सूत्रे नित्यग्रहणं तक्रकौण्डिन्यन्यायस्यानित्यत्वज्ञापनार्थमिति मनोरमाकारस्य सिद्धान्तः । उक्तसूत्रे नित्यग्रहणं व्यर्थमिति शब्दरत्नकारस्य सिद्धान्तः ।

१५–'ईच खनः' ( ३।१।१११ ) इति सूत्रे 'इ' इति ह्रस्वः सुवच इति भट्टोजिदीक्षितस्य सिद्धान्तः। 'ई' इति दीर्घपाठ एवोचित इति रत्नकारस्य सिद्धान्तः।

१६–'नपुंसके'० ( ३।३।११४ ) इति सूत्रेण 'क्त' प्रत्ययो धातोरकर्मके विद्यमानादेवेति भट्टोजिदीक्षितस्य सिद्धान्तः। सकर्मके विद्यमानादपि धातोः 'क्त' प्रत्ययो भवतीति शब्दरत्नकारस्य सिद्धान्तः।

१७–'स्वाङ्गेतस्'० ( ३।४।६१ ) इति सूत्रे प्रत्ययग्रहणं व्यर्थमिति मनोरमाकारस्य सिद्धान्तः। 'प्रत्ययाप्रत्ययो०' इति परिभाषाया अनित्यत्वज्ञापनार्थम् उक्तसूत्रे प्रत्ययग्रहणमिति हरिदीक्षितस्य सिद्धान्तः।

१८–'वह्वादिभ्यश्च' ( ४।१।४५ ) इति सूत्रे वहुग्रहणमनर्थकमिति भट्टोजिदीक्षितस्य सिद्धान्तः 'वह्वी'—प्रयोगसिद्धयर्थं बहुग्रहणमावश्यकमिति शब्दरत्नकारस्य सिद्धान्तः।

१९–'एङिपररूपम्' ( ६।१।९४ ) इति सूत्रे रूपग्रहणं स्पष्टार्थमिति शब्दरत्नकारस्य सिद्धान्तः।

२०–'अव्यक्ता०' ( ६।१।९८ ) इति सूत्रेऽनुग्रहणं व्यर्थमिति मनोरमाकारस्य सिद्धान्तः। उक्तसूत्रेऽनुग्रहणं शब्दाधिकारस्यानित्यत्वज्ञापनार्थमिति शब्दरत्नकारस्य सिद्धान्तः।

२१–'मघवा०' ( ६।१।१२८ ) इति सूत्रे प्रयुक्तवनिबन्तस्य 'मघवा' इति शब्दस्य लोकेऽपि प्रयोग इति भट्टोजिदीक्षितस्य सिद्धान्तः। लोके वनिबन्तस्य 'मघवा' इति शब्दस्य प्रयोगो न भवति। किन्त्वव्युत्पन्नस्य 'मघवा' इति शब्दस्येति शब्दरत्नकारस्य सिद्धान्तः।

२२–'षड्भ्यो०' ( ७।१।२२ ) इति सूत्रे बहुवचननिर्देशः षडर्थसंख्याप्राधान्यमादायेति भट्टोजिदीक्षितस्य सिद्धान्तः। षष् इति शब्दस्य बहुवचनान्तेन बहुवचननिर्देश इति हरिदीक्षितस्य सिद्धान्तः।

२३–'अतोऽम्' ( ७।१।२४ ) इति सूत्रे 'अम्' इत्यस्य स्थाने 'म्' इतिच्छेद इति भट्टोजिदीक्षितस्य सिद्धान्तः। उक्तसूत्रे 'अम्' इत्येवच्छेद इति शब्दरत्नकारस्य सिद्धान्तः।

२४–'साम०' ( ७।१।३३ ) इति सूत्रे ससुट्कनिर्देशो भाविनः सुटो निवृत्त्यर्थमिति भट्टोजिदीक्षितस्य सिद्धान्तः। उक्तसूत्रे ससुट्कनिर्देशो भाविन्याः सुड्वुद्धेर्निवृत्त्यर्थमिति शब्दरत्नकारस्य सिद्धान्तः।

२५–'षट्चतु०' ( ७।१।५५ ) इति सूत्रे षडर्थसंख्याप्राधान्यमादाय बहुवचननिर्देश इति मनोरमाकारस्य सिद्धान्तः प्रयोगबाहुल्येन, 'षष्' इति शब्दस्य बहुवचनान्तेन च बहुवचननिर्देश इति शब्दरत्नकारस्य सिद्धान्तः।

२६–'दिव औत्' ( ७।१।८४ ) इति सूत्रे औतस्तकार उच्चारणार्थस्तेन नेत्संज्ञक इति मनोरमाकारस्य सिद्धान्तः। उक्तसूत्र औतस्तकारस्योच्चारणार्थत्वेऽपित्संज्ञालोपादिनैवापहार इति हरिदीक्षितस्य सिद्धान्तः।

२७–'शेषे लोपः' ( ७।२।९० ) इति सूत्रेणान्तलोपटिलोपौ च भवत इति भट्टोजिदीक्षितस्य सिद्धान्तः। उक्तसूत्रेणान्त्यलोप एवेति शब्दरत्नकारस्य सिद्धान्तः।

२८–'अतो दीर्घो'० ( ७।३।१०१ ) इति सूत्रे दीर्घग्रहणं दीर्घ एव यथा स्यात् प्लुतो माभूदेतदर्थमिति मनोरमाकारस्य सिद्धान्तः। उक्तसूत्रे दीर्घग्रहणस्य फलाभाव इति शब्दरत्नकारस्य सिद्धान्तः।

२९–'न ङि सम्बुद्धयोः' ( ८।२।८ ) इति सूत्रे 'ङ' इति षष्ठयन्तमिति भट्टोजिदीक्षितस्य सिद्धान्तः। उक्तसूत्रे 'ङ' इति सप्तम्यन्त इति शब्दरत्नकारस्य सिद्धान्तः।

३०–'भोभगोअघो०' ( ८।३।१८ ) इति सूत्रेऽशग्रहणस्य फलं देवाः सन्ति इत्यत्र यत्वापत्तिवारणमिति भट्टोजिदीक्षितस्य सिद्धान्तः। 'हलि सर्वेषाम्' ( ८।३।१८ ) इति सूत्रेऽश् इत्यस्यानुवृत्त्यर्थमत्राशग्रहणमिति शब्दरत्नकारस्य सिद्धान्तः।

३१–'इदुदुपधस्य' ( ८।३।४१ ) इति सूत्रे प्रत्ययेत्यस्य समानाधिकरण्येनान्वय इति मनोरमाकारस्य पक्षः। अप्रत्यय इत्यत्र वैयधिकरण्येनान्वय इति शब्दरत्नकारस्य पक्षः।

३२–'सर्वादिगणे' 'उभ' इति शब्दस्य पाठ आवश्यक इति भट्टोजिदीक्षितस्य सिद्धान्तः। गणे 'उभ' शब्दस्य पाठापेक्षा नास्तीति शब्दरत्नकारस्य सिद्धान्तः।

३३–'गां दोग्धि पयः' इत्यस्य 'गो-सम्बन्धिपयःकर्मकं दोहनम्' इति शाब्दबोधस्वरूपं भट्टोजिदीक्षितस्यमतेन। 'गोकर्मकं पयः कर्मकं दोहनमिति' शाब्दबोधस्वरूपं शब्दरत्नकारनयेन।

३४–'हरिनिष्ठप्रीत्यनुकूलो व्यापारः' इति 'हरिः सेव्यते' इति वाक्याद् बोध इति मनोरमाकारस्य सिद्धान्तः 'हरिनिष्ठवर्तमानकालिकी व्यापारजन्या-प्रीतिः' इत्युक्तवाक्याद् बोध इति शब्दरत्नकारस्य सिद्धान्तः।

३५–'प्रज्ञा०' ( ५।२।१० ) इति सूत्रे प्राज्ञो व्याकरणमित्यत्र व्याकरण-शब्दाद् षष्ठी नेति मनोरमाकारस्य पक्षः। उक्तवाक्ये व्याकरणमित्यत्र षष्ठी स्यादेवेति शब्दरत्नकारस्य पक्षः।

३६–'इच एकाचो०' ( ६।३।६८ ) इति सूत्रे 'श्रीमन्यं कुलम्' इति मनोरमाकारस्य सिद्धान्तः। 'श्रियं मन्यं कुलम्' इति हरिदीक्षितस्य सिद्धान्तः।

३७–'ङमो ह्रस्वा०' ( ८।३।३२ ) इति सूत्रे 'परमदण्डिनौ' इत्यत्र नुड्वारणाय 'उञि च पदे' इत्यस्यानुवृत्तिव्यर्थेति मनोरमाकारस्य सिद्धान्तः। 'परमदण्डिनौ' इत्यत्र नुड्वारणाय 'ङमो०' इति सूत्रे 'पदे' इत्यस्यानुवृत्तिः सफलेति शब्दरत्नकारस्य सिद्धान्तः।

३८–मय उञो०' ( ८।३।३३ ) इति सूत्रेणाऽऽन्तरतम्यात् सानुनासिकस्य स्थाने सानुनासिकादेश इति मनोरमाकारस्य सिद्धान्तः। उक्तसूत्रेणाऽऽन्तर-तम्यात् सानुनासिकस्य स्थाने सानुनासिकादेशो न भवतीति शब्दरत्नकारस्य सिद्धान्तः।

३९–यथाकथंचिद् गत्यर्थयोर्नीवह्धात्वोः कर्मसंज्ञाबाधनार्थं 'नीवह्योर्न' इति वार्त्तिकमिति भट्टोजिदीक्षितस्य सिद्धान्तः। नीवह्धात्वोर्गत्यर्थत्वाभावेन

कर्मत्वाप्राप्तौ 'नीवह्योर्न' इतिवार्त्तिकं निरपेक्षमिति शब्दरत्नकारस्य सिद्धान्तः।

४०–'द्वितीयाटौस्स्वेनत्' इति सूत्रन्यासेष्टसिद्धौ 'अन्वादेशे नपुंसके एनद् वक्तव्यः' इति वार्त्तिकं विफलमिति मनोरमाकारस्य पक्षः। यथास्थितं सूत्रं वार्त्तिकं च कर्त्तव्यमिति शब्दरत्नकारस्य पक्षः।

४१–'शूद्रा चामहत्पूर्वा जातिः' इति वार्त्तिके जातिग्रहणमहत्पूर्वग्रहणं च व्यर्थमिति भट्टोजिदीक्षितस्य सिद्धान्तः। उक्तवार्त्तिके जातिग्रहणममहत्पूर्व-ग्रहणं चावश्यकमिति शब्दरत्नकारस्य सिद्धान्तः।

४२–'याम्याः' इति प्रयोगस्य सिद्धिः ण्यन्प्रत्ययेनैव स्याद् 'यमाच्चेति वक्तव्यम्' इति वार्त्तिकं व्यर्थम् इति भट्टोजिदीक्षितस्य सिद्धान्तः 'मायाः' इति प्रयोगो लोके न भवतीति शब्दरत्नकारस्य सिद्धान्तः।

४३–'तप्पर्वमरुद्भ्याम्' इति वार्त्तिकोदाहृतः 'मरुत्तः' इति प्रयोगो मध्योदात्त इति भट्टोजिदीक्षितस्य पक्षः। शब्दरत्नकारमतेनोक्तवार्त्तिकोदाहृतः 'मरुत्त' इति प्रयोग आद्युदात्त इपि पक्षः।

४४–कार्यकालपक्षे 'वहिरङ्गलक्षणाद्वा' इति वार्त्तिकेन दोषाभावे 'यणः प्रतिषेधो वाच्यः' इति वार्त्तिकं व्यर्थमिति भट्टोजिदीक्षितस्य पक्षः। त्रिपाद्यां वहिरङ्गपरिभाषायाः प्रवृत्त्यभावेन कार्यकालपक्षेऽपि 'वहिरङ्गलक्षणाद्वा' इति समाधानं न युक्तमिति शब्दरत्नकारस्य पक्षः।

४५–'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति परिभाषाऽन्तरङ्गमूलिकेति मनोरमाकारस्य सिद्धान्तः। उपपदपरिभाषा नान्तरङ्गमूलिका, अपि तु वाचनिकीति हरिदीक्षितस्य सिद्धान्तः।

४६—अकृतव्यूहपरिभाषाऽनित्येति भट्टोजिदीक्षितस्य पक्षः। उक्ता परि-भाषा नास्तीति शब्दरत्नकारस्य सिद्धान्तः।

४७—"अभ्यासस्यासवर्णे" ( ६।४।७८ ) इति सूत्रेऽसवर्णं ग्रहणं "वार्णा-दाङ्गं बलीयः" इति परिभाषाज्ञापनार्थमिति मनोरमाकारस्य सिद्धान्तः। उक्तपरिभाषायां सम्पूर्णसूत्रस्य ज्ञापकत्वमिति शब्दरत्नकारस्य पक्षः।

४८—"ऋत्विग्दधृग्०' (३।२।५९) इति सूत्रे उपात्त "क्रु्न्च" धातुर्नकारोपध इति भट्टोजिदीक्षितस्य सिद्धान्तः। "क्रु्न्च"—धातुर्नोपध इति शब्दरत्नकारस्य सिद्धान्तः।

४९—"उपेयिवान०" (३।२।१०९) इति सूत्रेण "उपेयिवान्" इत्यत्र धातोरिकारस्य णि वलादिलक्षणेटः प्रतिप्रसवो निपात्यते इति मनोरमाकारस्य सिद्धान्तः। उक्तप्रसङ्गे सवर्णदीर्घोन स्यादित्युक्ति निराकृत्य, एकादेशस्य निपातनाद् इयादेश इति शब्दरत्नकारस्य सिद्धान्तः।

५०—"स्वादुमि०" (३।४।२६) इति सूत्रेण मान्तत्वनिपातनं भावप्रत्ययमात्रविषयकमिति मनोरमाकारस्य पक्षः। उक्तसूत्रेण मान्तत्वनिपातनं णमुल्प्रत्ययमात्रविषयकमिति शब्दरत्नकारस्य पक्षः।

५१—"अतिशायने०" (५।३।५५) इति सूत्रे "अतिशायनम्" इत्यत्र निपातनाद् दीर्घनिर्देशेऽपि लोके ह्रस्वोऽपि साधुरिति मनोरमाकारस्य सिद्धान्तः अतिशायनेत्यत्र निपातनाद् दीर्घत्वे सर्वत्र दीर्घ एव साधुर्न ह्रस्व इति शब्दरत्नकारस्य सिद्धान्तः।

५२—नान्तसंख्यावाचकषट्त्वस्याल्विधित्वेन न स्थानिवद्भाव इति भट्टोजिदीक्षितस्य सिद्धान्तः। षट्त्वं षान्तनान्तोभयवृत्तिसमूहगतो धर्मस्तेनाल्विधित्वस्याभावे तस्यानल्विधिरिति निषेधो नेति हरिदीक्षितस्य सिद्धान्तः।

५३—"अचः परस्मिन्०" (१।१।५७) इति सूत्रे पञ्चमीसमासस्वीकारो व्यर्थ इति भट्टोजिदीक्षितस्य सिद्धान्तः। उक्तसूत्रे पञ्चमीसमासस्वीकारोऽपेक्ष्यत इति शब्दरत्नकारस्य पक्षः।

५४—"आदिरन्त्येन०" (१।१।७१) इति सूत्रे "स्व"—शब्दानुवृत्तिरावश्यकीति भट्टोजिदीक्षितस्य सिद्धान्तः। उक्तसूत्रे "स्व"—शब्दानुवृत्तिर्विफलेति शब्दरत्नकारस्य पक्षः।

५५—"भूवादयो०" (१।३।१) इति सूत्रे क्रियावाचित्वार्थकरणस्य फलं "याः पश्यसि" इत्यत्र "याः" इत्यस्य धातुत्ववारणार्थमिति मनोरमाकारस्य

  

सिद्धान्तः। विकल्पार्थकस्य "वा" इति शब्दस्य धातुत्ववारणार्थमिति शब्दरत्न-कारस्य सिद्धान्तः।

५६—"गतिबुद्धि०" (१।४।५२) इति सूत्रं विध्यर्थमिति भट्टोजिदीक्षितस्य सिद्धान्तः। उक्तसूत्रं नियमार्थमिति शब्दरत्नकारस्य सिद्धान्तः।

५७—"लक्षणेत्थं भूता०" (१।४।९०) इति सूत्रेण कर्मप्रवचनीयसंज्ञायाः फलं "वृक्षं वृक्षं प्रति सिन्चति' इत्यत्र षत्वाभावमात्रमिति भट्टोजिदीक्षितस्य पक्षः। उक्तप्रयोगे कर्मप्रवचनीयसंज्ञायाः फलं द्वितीयोत्पत्तिः षत्वाभावश्चेति शब्दरत्नकारस्य पक्षः।

५८—'कित्'–धातुः परस्मैपदीति भट्टोजिदीक्षितस्य सिद्धान्तः। "कित्' धातुरात्मनेपदीति हरिदीक्षितस्य सिद्धान्तः।

५९—"पुरुषात्०" (४।१।२४) इति सूत्रे "लुक्" इत्याक्षिप्यत इति मनोरमाकारस्य सिद्धान्तः। उक्तसूत्रे लुगाक्षेपोऽनर्थक इति शब्दरत्नकारस्य सिद्धान्तः।

६१—"यथालक्षणमप्रयुक्ते" इत्यस्य 'अप्रयुक्ते' लक्षणमनतिक्रम्य कार्यम्' इति व्याख्यानं भट्टोजिदीक्षितस्य। अप्रयुक्ते लक्षणाभावस्यैव योग्यता, न तु लक्षणप्रवृत्तेरिति व्याख्यानं शब्दरत्नकारस्य सिद्धान्तः।

६२—'दीर्घो लघोः' (७।४।९४) इति सूत्रे वैयधिकरण्यान्वय एवेति भट्टोजिदीक्षितस्य सिद्धान्तः। उक्तसूत्रे सामानाधिकरण्येऽपि न क्षतिरिति शब्दरत्नकारस्य सिद्धान्तः।

६३—रधादिगणपठितत्वेन दुहादिधातूनां गणनिर्दिष्टत्वात् 'श्तिपा०' इति परिभाषया निषेधाद् द्रोग्धुग् इत्यत्र घत्वं न स्याद् इति घत्वार्थं गुरुभूतन्यास इति भट्टोजिदीक्षितस्य सिद्धान्तः। उक्तपरिभाषाया अनित्यत्वाद् लघुभूतन्यासेऽपि न क्षतिरिति शब्दरत्नकारस्य सिद्धान्तः।

———

# (ख) गवेषणाप्रबन्धोपात्तसूत्राणामकारादिक्रमेण सूची

ख

म



य



र

———

# गवेषणाप्रबन्धोपात्तवार्तिकसूची

पृष्ठाङ्कः

---

# गवेषणाप्रबन्धोपात्तपरिभाषासूचि

## सहायकग्रन्थसूची



१–अभिज्ञानशाकुन्तलम् ( सं० गुरुप्रसादशास्त्री ) वि० सं० २०२० ।
२–कातन्त्रव्याकरणम् (राजस्थानप्राच्यविद्याप्रतिष्ठान, जोधपुरतः प्रकाशितम्) १९६८ ई० ।
३–काशिकावृत्तिः न्यासपदमञ्जर्योरुपेता ( प्र० तारा पब्लिकेशन्स, कमच्छा, वाराणसी ) १९६७ ई० ।
४–क्षीरतरंगिणी क्षीरस्वामीविरचिता ( सं० युधिष्ठिरमीमांसकः ) वि० सं० २०१४ ।
५–कुचमर्दिनी-पं० राजगन्नाथविरचिता ( प्र० जयकृष्ण दासहरिदासगुप्तः, वाराणसी ) वि० सं० १९९१ ।
६–चान्द्रव्याकरणम् ( प्र० राजस्थानप्राच्यविद्याप्रतिष्ठानम् ) १९६७ ई० ।
७–धात्वर्थविज्ञानम् - वाचस्पति उपाध्यर्थं गवेषणाप्रबन्धः ( डा० भागीरथ प्रसाद त्रिपाठी ) वा० सं० वि० वि०, वि० सं० २०२६ ।
८–परिभाषेन्दुशेखरः ( प्र० वासुदेवशास्त्री पटवर्धन ) राजराजेश्वरी - प्रेस-पुस्तकालय, दुर्गाघाट, वाराणसी ।
९–प्रक्रियाकौमुदी प्रसादटीकोपेता ( संस्कृतप्राकृतग्रन्थमालाधिकारीद्वारा प्रकाशितम् ( प्रथमभाग-१९२५, द्वितीयभाग-१९३१ ) ।
१०–प्रक्रिया सर्वस्वम् ( १९३१ ई० )
११–प्रौढमनोरमा ( शब्दरत्न-भैरवी-भावप्रकाशसरलाव्याख्योपेता ) अव्ययीभावान्ते भागः ( प्र० चौखम्बा संस्कृत सरिज वाराणसी ) श्र
१२–प्रौढमनोरमा ( शब्दरत्नोपेतम् ) तत्पुरुषाद् यङन्तप्रकरणपर्यन्ता ( प्र० चौखम्बा सं० सीरिज, वाराणसी )
१३–प्रौढमनोरमा ( शब्दरत्नोपेता ) भ्वादितः स्वरवैदिकान्तो भागः । ( मु० छन्नूलाल बनारस प्रिंटिंग प्रेष ) १८८८ ई० ।
१४–प्रौढमनोरमाखण्डनम् ( चक्रपाणिप्रणीतम् ) हस्तलिखितम् ( सरस्वतीभवन, वा० सं० वि० वि०, ग्रन्थसंख्या ४०३४२ ) ।
१५–भाषावृत्तिः ( पुरुषोत्तम प्रणीता ) गोयनकासंस्कृतमहाविद्यालयान्तर्गत श्री विश्वनाथपुस्तकालय, वाराणसी, ग्रन्थसं० २१८ ।

१६–महाभारत (सं० बी० एस० सुकथंकर, एस० के० वेलवेल्कर, पी० एल० वैद्या, बी० के० वेल्वेल्कर, पूना)

१७–महाभाष्यम् (प्रदीपोद्योतव्याख्योपेतम्) भारतीयाधिशासनसंरक्षणतायां प्रकाशितम्) १९६७ ई०।

१८–माधवीया धातुवृत्तिः (प्र० जयकृष्णदासहरिदासगुप्त, वाराणसी)

१९–मुग्धबोधव्याकरणम्

२०–रूपावतारः (धर्मकीर्तिप्रणीतः) सं० म० महो० रङ्गाचार्यः।

२१–लघुशब्देन्दुशेखरः (प्र० चौखम्बा सं० सि०, वाराणसी) १९५४ ई०।

२२–वाक्यपदीयम् (तृतीयकाण्डमात्रम्) हेलाराजीयव्याख्यानसहितम्, एल० ए० रविवर्मसंपादितम्, सुपरिण्टेण्डेण्ट गवर्नमेण्ट मुद्रणालये त्रिवेण्ड्रमे मुद्रितम्, ४९४२ ई०।

२३–वाक्यपदीयम् (ब्रह्मकाण्डमात्रम्) सूर्यनारायणशुक्लकृद्व्याख्योपेतम् (चौ० सं० सि०, वाराणसीतः प्रकाशितम्) २०२० वि०।

२४–वाल्मीकिरामायणम् (प्र० चौखम्बा०) २०१४ वि०।

२५–बृहच्छब्देन्दुशेखरः (सं० डा० सीतारामशास्त्री) १८८२ तमे श०।

२६–वैयाकरणभूषणसारः (प्र० हरिकृष्णनिबन्धभवनम्, वाराणसी) १९५२ ई०

२७–वैयाकरणसिद्धान्तकौमुदी (तत्त्वबोधिनीदाधिमथोपेता) प्रकाशक-क्षेमराजश्रीकृष्णदास, बम्बई, २०१५ वि।

२८–व्युत्पत्तिवादः (जयोपेतः) सम्पादक—म० म० श्री उमेशमिश्रः १९५३ ई०

२९–शब्दकल्पद्रुमः (कोशः)—प्र० चौखम्बासं० सि०, २०२४ वि०।

३०–शाकटायनव्याकरणम् (वेल्हापुरे जैनेन्द्रमुद्रणालये मुद्रितम्) १००७ ई०।

३१–श्रीमद्देवीभागवतपुराणम् (प्र० मनसुखरायमोर, कलकत्ता) २०१७ वि०।

३२–सरस्वतीकण्ठाभरणम् (हृदयहारिण्याख्यायाव्याख्ययोपेता) १९३५ ई०।

३३–सारस्वतव्याकरणम् (चन्द्रकीर्त्ति प्रसादाख्यव्याख्योपेतम्) प्र० चौखम्बा सं०, १९३४ ई०।

३४–संस्कृतव्याकरणशास्त्र का इतिहास (ले० युधिष्ठिरमीमांसक) २०२० वि०

३५–हेमचन्द्र और उनका शब्दानुशासन (ले० नेमिचन्द्र शास्त्री) प्रकाशक—चौखम्बाविद्याभवन, वाराणसी १९६३ ई०।

